प्रतिजग्राह पृथा नियोगात्पुरुषोत्तमस्य वासुदेवस्य । षाण्मासिकं गर्भमहमेनं जीवयिष्यामीति ॥ ९१ ॥

संजीवयित्वा चैनमुवाच । परिक्षीणे कुले जातो भवत्वयं परिक्षिन्नामेति ॥ ९२ ॥

परिक्षित्तु खलु माद्रवतीं नामोपयेमे । तस्यामस्य जनमेजयः ॥ ९३ ॥

जनमेजयात्तु वपुष्टमायां द्वौ पुत्रौ शतानीकः शङ्कुश्च ॥ ९४ ॥

शतानीकस्तु खलु वैदेहीमुपयेमे । तस्यामस्य जज्ञे पुत्रोऽश्वमेधदत्तः ॥ ९५ ॥

इत्येष पूरोर्वंशस्तु पाण्डवानां च कीर्तितः ।
पूरोर्वंशमिमं श्रुत्वा सर्वपापैः प्रमुच्यते ॥ ९६

C. 1. 3842
B. 1. 95. 90
K. 1. 63. 89

इति श्रीमहाभारते आदिपर्वणि नवतितमोऽध्यायः ॥ ९० ॥

---

Ks Ñ1.2 B5 D (except D2.4.5) उपयेमे उत्तरां नाम (for उत्तरां—°येमे). — B1.3.6 D (except Da D5) भवत् (for ऽजायत).

91 S तमुत्संगे. K4 पृथाभियोगात्. Ñ3 S पृथिवी (for पृथा). K2 पुरुषोत्तमस्य पृथा नियोगात्; D2 पृथा पुरुषोत्तमस्य नियोगात् (by transp.). Ñ1.2 B3.5.6 पुरुषोत्तमो °देवः. K1.2 M6-8 om. वासुदे°. T1 सुभद्रां; G1.3 सुभद्रायाः (G1 °द्रां) सौभद्रस्य; G2.6 सौभद्रस्य; G4.5 सुभद्रायाः; M8 सुभद्रात्तु; M5 सुभद्रे (for वासु°). — K2.4 षण्मासिकं; G6 षाण्मासमहं. T G3.6 om. अहमेनं; G1.2.4.5 M om. एनं. Ś1 K1 एवं; D5 एतं (for एनं). K4 गर्भमेनमहमेवं (for गर्भमहमेनं). Ś1 K संजीवयिष्यामि; S जीवयामि. After °यिष्यामि, S ins. पादस्पर्शात्. T G4.5 M om. इति. — After इति, Ko ins. उवाच. — After 91, N ins.:

906* स भगवता वासुदेवेनासंजातबलवीर्यपराक्रमोऽकालजातोऽस्त्राग्निना दग्धस्तेजसा स्वेन संजीवितः ।

[ Ś1 K2.4 Da D1.2.4 °वेन संजात°. Ś1 Ñ om. -बल-. ]

On the other hand S ins. after 91:

907* वासुदेव उवाच । अहं जीवयामि कुमारमनन्तवीर्यम् । जात एवायमभिमन्योः । सत्येन चेयं पृथिवी धारयत्विति । वासुदेवस्य पादस्पर्शात्सजीवोऽजायत ।

[ After एवायम्, T2 G1-6 ins. अनुजातः. M नायमजातः (for अयम्). ]

92 K4 Ñ1 B D (except Da) om. सं-. S नाम तस्याकरोत्सुभद्रा (for संजी°—°मुवाच). — G1.3 om. भवत्वयं and नाम; and after इति, ins. अ(G3 त)त्र श्लोकः. T G2.4-6 M subst. for परिक्षीणे—°न्नामेति: G1.3 ins. after श्लोकः

908* परिक्षीणे कुले जात उत्तरायां परंतपः ।
परिक्षिदभवत्तस्मात्सौभद्रात्तु यशस्विनः ।
[ =(var.) 1. 45. 13. ]

93 D5 स (for परिक्षित्). Ñ D (except D4) om. तु. K2.3 T1 om. खलु. K2 G1.2.6 M2.3 भद्रवतीं; T1 G4.5 सुद्र°; T2 M5.6.7 मद्र°; G3 भद्रा°. After °येमे, N ins. त्वन्मातरं. — Ś1 K D5 यस्याम्. N G3.6 भवान्; T1 तु यो भवांस्तु; T2 G4.5 M5 तत्रभवांस्तु; G1 पुत्रो भवान्; G2 त्वत्रभवान् (for अस्य). After अस्य (resp. its v. l.), K3.4 B1.3 D1.2.4.5 T G (except G4.5) ins. जज्ञे.

94 Ś1 Ko.1.3 B1.5.6 Da D3.4.5 भवतोपि; K2.4 Ñ B3 Dn D1 भवतो; T G4.5 M5 भवतः खलु; M3.6-8 जनमेजयस्तु खलु (for जनमेजयात्तु). After °जयात्तु, G1-3.6 ins. भवतः (G3 cont. खलु). K2 D5 T G4-6 M3.5 transp. द्वौ and पुत्रौ. After पुत्रौ, N ins. जज्ञाते; M3.6.8 जनयामास. G2.4-6 M5-8 शतानीकश्च. Ko.3.4 Dn D1.2 शंकुकर्णः; T G (except G4.5) शंखः (for शङ्कुः). Ko.3.4 चेति (for च).

95 T G1.6 M (except M5) वैदर्भीम् (for वैदेहीम्). — T1 पुरुषः; M3 उदयनः । तस्य पुत्रः (for पुत्रः). After °दत्तः, G3.5 ins. इति. For 95, N subst.: शतानीकस्यापि (Ñ B Dn D1.4 om. अपि) वैदेह्यां पुत्र उत्पन्नो(D5 °त्पस्यते)श्वमेधदत्त इति (D5 om. इति).

96 [a]) T1 G1.3 ते (for तु). For 96, N (including Dev.'s text) subst. एष पूरोर्वंशः (D5 इत्येव पौरवो वंशः) पांडवानां च (Ś1 om. च) कीर्तितः (Ko.2-4 °तस्ते) । धन्यः पुण्यः (Ko.3.4 Da1 om. पुण्यः) परम(K2 om. परम)पवित्रः सततं श्रोतव्यो ब्राह्मणैः नियमवद्भिः. Thereafter, while Ś1 K1 cont.: अपि श्रोतव्यस्त्रिवर्णैः शुश्रूषुभिः श्रद्दधानैर्ब्राह्मणांतरितं (Ś1 °रितमिति); Ko.2-4 Ñ B D (with further addition to the latter) cont.: अनंतरं क्षत्रियैः स्वध(Ko.2-4 °क)र्मनिरतैः प्रजापालनतत्परैः । वैश्यैरपि च । श्रोतव्योऽधिगम्यश्च (B D4 °गंतव्यश्च) तथा शूद्रैरपि (Ko.2-4 here repeat श्रोतव्यः) त्रिवर्णशुश्रूषुभिः श्रद्दधानैरिति (Ko.2-4, like Ś1 K1, श्रद्दधानैर्ब्राह्मणांतरितं). — Finally, there follows in N (including Dev.'s text) a phalaśruti of the Bhārata :

## ९१

वैशंपायन उवाच ।

C 1. 3843
B 1. 96. 1
K 1. 102. 1

इक्ष्वाकुवंशप्रभवो राजासीत्पृथिवीपतिः ।
महाभिष इति ख्यातः सत्यवाक्सत्यविक्रमः ॥ १

सोऽश्वमेधसहस्रेण वाजपेयशतेन च ।
तोषयामास देवेन्द्रं स्वर्गं लेभे ततः प्रभुः ॥ २
ततः कदाचिद्ब्रह्माणमुपासांचक्रिरे सुराः ।

---

909* इतिहासमिमं पुण्यमशेषतः श्रावयिष्यन्ति ये ब्राह्मणाः श्रोष्यन्ति वा नियतात्मानो विमत्सरा मैत्रा देवपरास्तेऽपि स्वर्गजितः पुण्यलोका भवन्ति सततं देवब्राह्मणमनुष्याणां मान्याः संपूज्याश्च । परं हीदं भारतं भगवता व्यासेन प्रोक्तं पावनं ये ब्राह्मणादयो वर्णाः श्रद्दधाना विमत्सरा मैत्रा वेदव्रतसंपन्नाः श्रोष्यन्ति तेऽपि स्वर्गजितः सुकृतिनोऽशोच्याः कृताकृते भवन्ति । भवति चात्र श्लोकः ।

इदं हि वेदैः समितं पवित्रमपि चोत्तमम् ।
धन्यं यशस्यमायुष्यं श्रोतव्यं नियतात्मभिः ॥

[ Dn D1 नराः; D5 विप्राः (for ब्राह्मणाः). Ś1 K Ñ3 D5 om. विमत्सरा मैत्रा देवपराः. Ñ1 Dn वेदपराः (for देव°). B D2.4 पुण्यभाजः (for °लोकाः). Ś1 K Ñ3 D5 om. (the first) भवन्ति. K2 (hapl.) om. from ब्राह्मण°—पावनं ये. Ś1 K1 °मनुष्यलोकानां (for °मनुष्याणां). Ś1 K (K2 om.) D5 संपूजनीयाश्च. Before परं, D5 ins. राजन्. K0.3.4 Da ये च (for ये). B3.5.6 D2 om. (the second) विमत्सरा. Ñ2 B1 D (except D5; D2 om.) अमत्सरा (for विम°). K2.4 देवव्रतसं°; Ñ1 °व्रततपःसं°; Dn वेदसं° (for वेदव्रतसं°). Ś1 K न शोच्याः (for ऽशो°). Da D4 कृताकृतैर्; Dn3 D2.5 कृतकृत्याः (for कृता°). Ś1 K (except K2.4) B1 D4 om. (the second) भवन्ति. — First line of the st. =1. 56. 15$^{ab}$; for second line cf. 1. 61. 101$^{ab}$. B1.3.6 D2.4 स्वर्ग्यं; Cd धन्यं (as in text). ]

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 T1 संभव. — *Adhy. name:* N (including Cd) पूरु(some MSS. पुरु; पुरोर्)वंशानुकीर्तनं (Ś1 K1.2 cont. समाप्तं); T2 G4 M5-8 वंशसंक्षेपः; G1 राजपरंपरा. — *Adhy. no.* (figures, words or both): K0 92; Da1 D4m 93; Dn3 94; T1 54; T2 G M 4 (of the संभवपर्व). — *S'loka no.:* Dn1.n2 90. — *Aggregate s'loka no.:* Dn3 3816.

☞ The extensive Southern transpositions which begin after adhy. 56 and end with adhy. 90 have been noted from time to time in the course of these notes. For convenience of reference they may be recapitulated in a tabular form as under:

adhy. 56 (Bhārata eulogy)
90 (prose genealogy)
57–61 (Genesis)
70–88 (Yāyāta)
89¹ (metr. genealogy, 1st part)
62–69 (S'ākuntala)
89² (metr. genealogy, 2nd part)
91 etc.

☞ Ignoring the MSS. which have ended or have been discarded, there remain now the following 36 MSS. which constitute the critical apparatus:
Ś1; K0.1.2.3.4; Ñ1.2.3; V1; B1.3.5.6; Da1.a2; Dn1.n2.n3; D1.2.4.5; T1.2; G1.2.3.4.5.6; M3.5.6.7.8.

### 91

☞ Here begins the story proper with the birth of Bhīṣma, the foregoing 90 adhy. comprising merely introductory matter. — The adhy. is missing in V1 (cf. v. l. 1. 68. 74); the MS. is wholly ignored here.

1 Ś1 K1 S om. उवाच (M5 om. the ref.). — $^{a}$) S इ(G2 ऐ)क्ष्वाकूणामन्यतमो; Cd as in text. — $^{c}$) Here and below S (uniformly) महाभिषज् for °भिष°. — $^{d}$) K0.3.4 शीलवान्; Ñ1 कार्यवान् (for सत्यवाक्). Ñ3 संश्रितव्रतः; T1 अनसूयकः. K2 नित्यं च शंसितव्रतः.

2 $^{b}$) N (except Ś1 K1-3) राजसूयश°; S शतसंख्येन भारत (M च प्रभुः). — $^{c}$) Ñ2 B1 D (except D2.4.5) देवेशं. — $^{d}$) Ś1 प्राप (for लेभे). S च स (for ततः). — After 2, T2 G (except G3.6) ins.:

910* यौवनं चानुसंप्राप्तं कुमारं वदतां वरम् ।
संसरंश्चाक्षयाँल्लोकान्विदितांश्च स्वकर्मणा ।

[ (L. 2) G1 अर्जितांश्च स्व°. T2 कृत्वा वै तामपां लोके वासं चक्रे महायशाः. ]

3 $^{c}$) N (B3 marg.) शासन् (B3 orig. राजन्); T2 G1.2.4.5 सर्वे. T1 G3.6 M राजर्षयस्तथा (G6 °दा) सर्वे.

तत्र राजर्षयो *आसन्स च राजा महाभिषः ॥ ३
अथ गङ्गा सरिच्छ्रेष्ठा समुपायात्पितामहम् ।
तस्या वासः समुद्भूतं मारुतेन शशिप्रभम् ॥ ४
ततोऽभवन्सुरगणाः सहसावाङ्मुखास्तदा ।
महाभिषस्तु राजर्षिरशङ्को दृष्टवान्नदीम् ॥ ५
अपध्यातो भगवता ब्रह्मणा स महाभिषः ।
उक्तश्च जातो मर्त्येषु पुनर्लोकानवाप्स्यसि ॥ ६
स चिन्तयित्वा नृपतिर्नृपान्सर्वांस्तपोधनान् ।
प्रतीपं रोचयामास पितरं भूरिवर्चसम् ॥ ७
महाभिषं तु तं दृष्ट्वा नदी धैर्याच्च्युतं नृपम् ।
तमेव मनसाध्यायमुपावर्तत्सरिद्वरा ॥ ८
सा तु विध्वस्तवपुषः कश्मलाभिहतौजसः ।
ददर्श पथि गच्छन्ती वसून्देवान्दिवौकसः ॥ ९
तथारूपांश्च तान्दृष्ट्वा पप्रच्छ सरितां वरा ।
किमिदं नष्टरूपाः स्थ कच्चित्क्षेमं दिवौकसाम् ॥ १०
तामूचुर्वसवो देवाः शप्ताः स्मो वै महानदि ।
अल्पेऽपराधे संरम्भाद्वसिष्ठेन महात्मना ॥ ११
विमूढा हि वयं सर्वे प्रच्छन्नमृषिसत्तमम् ।
संध्यां वसिष्ठमासीनं तमत्यभिसृताः पुरा ॥ १२
तेन कोपाद्वयं शप्ता योनौ संभवतेति ह ।
न शक्यमन्यथा कर्तुं यदुक्तं ब्रह्मवादिना ॥ १३
त्वं तस्मान्मानुषी भूत्वा सूष्व पुत्रान्वसून्भुवि । C. 1. 3856 B. 1. 96. 15 K. 1. 102. 15

---

4 [d]) Ñ1 समप्रभं.

5 [a]) D5 °न्सुराः सर्वे. — [b]) Ñ1 सहर्षाः ससुखा°. — [c]) K0 अथाभिषस्तु. — [d]) G6 तदैको द°.

6 [a]) Only K2.4 D5 अपध्यातो (as in text); D4 स शप्तो वै; G3 अथ ध्या°; the rest सोपध्या°. — [b]) K1 च; Ñ1.2 B D (except D2) तु; Ñ3 M (except M3) स्म (for स). — [d]) T2 G (except G1.6) °र्लोकमवा°. — After 6, D4 (marg. *sec. m.*) S (D4 G2 om. line 1) ins.:

911* मनुष्येषु चिरं स्थित्वा लोकान्प्राप्स्यसि शोभनान् ।
यथा हृतमनाश्चासि गङ्गया त्वं सुदुर्मते ।
सा ते वै मानुषे लोके विप्रियाण्याचरिष्यति ।
यदा ते भविता मन्युस्तदा शापाद्विमोक्ष्यसे ।

[ (L. 1) G5 M शाश्वतान् (for शोभ°). — (L. 2) T2 G2.4.5 सुदुर्मनाः. — (L. 3) M तु (for ते). ]

7 Before 7, D4 (marg. *sec. m.*) T1 G ins. वैशं°. — [a]) Ñ3 D5 चिंतयित्वा तु नृ°. — [b]) Da भूयान् (for नृपान्). Ñ2 Dn D1 अन्यान् (for सर्वान्). — [c]) Ś1 K1 प्रतिपं. — [d]) D (except D2.4.5) भूरितेजसं.

8 [a]) S सा महाभिषजं द°. — [b]) B1.6 D2.4 T2 धैर्यच्युतं. — [c]) N ध्यायंती (Ś1 as in text; K2 ध्यायन्); S (except M7) ध्यात्वा. — [d]) S उपावृत्ता (T1 °त्त; G2 °त्तं; G3 °त्य). — After 8, B1 (irrelevantly) ins.:

912* भावं मनसि वै कृत्वा जगाम नृपतिं पतिम् ।
(cf. v. l. 22).

9 [a]) T1 G1.3.6 M वै; T2 सं-; G2.4.5 तान् (for तु). S °स्तसंकाशान्. — [b]) Ñ Da Dn D1 °हतानृप; B D2.4 °हतांस्तदा; T1 G1.3 M °हतान्भुवि; T2 G2.4-6 °हतान्दिवि. — [c]) G2.4.5 भुवि (for पथि).

10 [a]) T1 तथाभूतान्. K2 S तु (for च). — Before 10[cd], K0.4 D5 T G2.4.6 M6-8 ins. गंगोवाच. — [c]) B D2.4 किमेवं. — After 10, T2 ins.:

913* मुखानि न प्रसन्नानि विवर्णानि कृतानि किम् ।;
while G6 ins.:

914* किमर्थं मनुजा भूमौ निपतिष्यन्ति दुःखिताः ।

11 Before 11, S (except M3.5) ins. वैशं°. — [a]) K3 देवीं; S (except G3) दीनाः. — [b]) M वै स (for स्मो वै)' T G शप्ता वै सुमहानदीं. — [c]) M3.5 अल्पाप°. T1 (corrupt) अस्त्वयं कृतवान्बुध्या; T2 G M6-8 अस्व(G3 °न्व; M6-8 °स्त्व)यं कृतया बुध्या.

12 [a]) S वयं हि सहसा सर्वे. — [b]) Ś1 K D5 दृष्ट्वा तं (for प्रच्छन्नं). M °न्नं नानुबुद्ध्महः. — [d]) Ś1 तमस्यभि°; K Ñ3 तपस्य(K1 Ñ3 °मप्य)भि°; Ñ1 तन्मध्यनिसृ°; Ñ2 Da D4 समेत्याभि°; D2 तमसा निभृ°; D5 ते सर्वेभि°. D1 तपस्यंतं तपः पुरा; S तमभ्यति(T1 G3 °भ्येति; M °भ्येत्य)सृता वयं.

13 [a]) M (except M3) तस्य (for तेन). — [b]) D5 वै; M च (for ह). — [c]) Ñ1.3 T G2.4.6 न तच्छक्यम् (T2 तदशक्यम्) अ(Ñ3 न)कर्तुं च; G1.5 न तत्कर्तुमशक्यं च; G3 न तच्छक्यं मुधा कर्तुं; M अकर्तुं तदशक्यं च (M5 न शक्यं कर्तुमन्यच्च).

14 [a]) Ś1 transp. त्वं and तस्मात्. Ñ1.2 B D G1 त्वम(D5 तद)स्मान्; T2 G2.4.5 त्वं चास्मान्. — [b]) Ñ1.2 B6 Dn D1 सृज (for सूष्व). G2.4.5 अपि (for भुवि). K0.3.4 जनयास्मान्सरिद्वरे. — [d]) Ś1 प्रवेशाम; K0 प्रविविशो; K2-4 D5 °विशामो; T1 °विवेश. K0.3.4 B D (except Da) वयं शुभे; Ñ3 शुभे वयं; S कथंचन.

C. 1. 3836
B. 1. 96. 16
K. 1. 102. 16

न मानुषीणां जठरं प्रविशेमाशुभं वयम् ॥ १४
इत्युक्ता तान्वसून्गङ्गा तथेत्युक्त्वाब्रवीदिदम् ।
मर्त्येषु पुरुषश्रेष्ठः को वः कर्ता भविष्यति ॥ १५

वसव ऊचुः ।

प्रतीपस्य सुतो राजा शंतनुर्नाम धार्मिकः ।
भविता मानुषे लोके स नः कर्ता भविष्यति ॥ १६

गङ्गोवाच ।

ममाप्येवं मतं देवा यथावदत मानघाः ।
प्रियं तस्य करिष्यामि युष्माकं चैतदीप्सितम् ॥ १७

वसव ऊचुः ।

जातान्कुमारान्स्वानप्सु प्रक्षेप्तुं वै त्वमर्हसि ।
यथा नचिरकालं नो निष्कृतिः स्यात्त्रिलोकगे ॥ १८

गङ्गोवाच ।

एवमेतत्करिष्यामि पुत्रस्तस्य विधीयताम् ।
नास्य मोघः संगमः स्यात्पुत्रहेतोर्मया सह ॥ १९

वसव ऊचुः ।

तुरीयार्धं प्रदास्यामो वीर्यस्यैकैकशो वयम् ।
तेन वीर्येण पुत्रस्ते भविता तस्य चेप्सितः ॥ २०
न संपत्स्यति मर्त्येषु पुनस्तस्य तु संततिः ।
तस्मादपुत्रः पुत्रस्ते भविष्यति स वीर्यवान् ॥ २१

वैशंपायन उवाच ।

एवं ते समयं कृत्वा गङ्गया वसवः सह ।
जग्मुः प्रहृष्टमनसो यथासंकल्पमञ्जसा ॥ २२

इति श्रीमहाभारते आदिपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

---

15 a) Ś1 K1.2 Da2 इत्युक्त्वा; Ko.4 श्रुत्वैव. S प्रत्युवाच (for °क्ता तान्). Ñ2 B Dn D1.2.4 °क्ता तैश्च वसुभिः. — b) S तथास्तु समयादिति. — Before $15^{cd}$, Ñ2 B D (except D5) T1 ins. गंगोवाच. — c) B (except B1) °षव्याघ्रः. — After 15, B3 ins.:

915* इत्युक्ता गङ्गया ते च तामूचुर्वसवस्तदा ।

16 K1 S om. ऊचुः (G5.6 om. the ref.). — a) Ś1 K1.2 प्रतिप° (cf. v. l. 7). S विद्वान् (for राजा). — b) Ñ1.2 B (except B1) Dn D1 शांत°. Ñ2 B (except B1) D (except Da D5) लोकविश्रुतः (for नाम धा°). — c) S त्वत्कृते (for भवि°). S (G1 by corr.) जातः (for लोके).

17 Ś1 K1 S om. उवाच. — a) Ś1 K Ñ1.3 °प्येतत्. S °वं मनोजातं. — b) Ko S वदथ. S चानघाः. K3.4 Ñ B D (except D5) यथा मां वदता(K3.4 °था)नघाः. — c) Ñ1.3 B D2.4 चिकीर्षामि. — G5 (hapl.) om. $17^{d}$–$19^{a}$. — d) K3 °कं च यथेप्सितं; S (G5 om.) वचनं च दिवौकसां.

18 G5 om. 18 (cf. v. l. 17). Ś1 K S om. ऊचुः. — a) K3.4 जाताञ्जातान्सुतानप्सु; S (except G6; G5 om.) जातं कुमारं स्वास्वप्सु. — b) G2.4 M च (for वै). — c) B3.6 Da D2 G6 °कालात्.

[ After 18, the Kumbh. ed. ins. a st. (1. 102. 20 of its text) which was not found in *any* MS. collated ! ]

19 G5 om. $19^{a}$ (cf. v. l. 17). Ś1 K1 S om. उवाच. — a) K4 S (except M3.5; G5 om.) एव (for एतत्). — b) Ś1 K1 Ñ1.3 (marg. *sec. m.* as in text) D5 पुत्रस्तवस्य. — c) S मोघं भवेत्कर्म. — d) D1 महात्मनः; S कृतं मया.

20 Ś1 K1 S om. ऊचुः (G5.6 om. the ref.). — a) Ś1 K1 तुर्यार्धं वै; Ko.2 D2 T2 G1.4 (*sup. lin.*) °यांशं; K3 तुर्यांशार्धं; B1 D4 G2 तुर्यस्या°; G3 अंतर्या°. — K4 (hapl.) om. $20^{d}$–$21^{c}$.

21 K4 om. $21^{abc}$ (cf. v. l. 20). — a) Ś1 K1.2 D5 संवत्स्य°; Ko संभवति. — b) Ko.3 S च (for तु). — c) S अपुत्रस्तु (M3 °श्च) नरव्याघ्रो. — d) S °ति सुतस्तव.

22 K4 Ñ B D (except D2) om. वैशं° उ°; Ś1 K1 S om. उ°. — a) T G च; M तु (for ते). — b) T G M3 गंगा च. K2 तदा; S च ते (for सह). — c) K2 ते हृष्ट°; Ñ2 B1.6 Dn D1.5 संहृष्ट°. — d) Ko.4 °कल्पमोजसा. — After 22, B3 ins.:

916* सा तु विध्वस्तवपुषं कश्मलाभिहतं नृप ।,
which is followed by 912*.

Colophon. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 V1 T1 संभव; to it Ñ1.2 V1 add महाभिषोपाख्यान; while B1.3.6 Da Dn D1.2.4 (om. sub-parvan name) mention only महाभिषो°. — *Adhy. name:* Ko.3.4 गंगावसव(K4 °वसु)संवादः. — *Adhy. no.* (figures, words or both): Ko 93; B1 Dn3 95; Da1 D4 94; T1 90; T2 40; G M 41. — *S'loka no.:* Da1 Dn1.n2 22; M3 24. — *Aggregate s'loka no.:* Dn2 3858.

## ९२

वैशंपायन उवाच ।
ततः प्रतीपो राजा स सर्वभूतहिते रतः ।
निषसाद समा बह्वीर्गङ्गातीरगतो जपन् ॥ १
तस्य रूपगुणोपेता गङ्गा श्रीरिव रूपिणी ।
उत्तीर्य सलिलात्तस्माल्लोभनीयतमाकृतिः ॥ २
अधीयानस्य राजर्षेर्दिव्यरूपा मनस्विनी ।
दक्षिणं शालसंकाशमूरुं भेजे शुभानना ॥ ३
प्रतीपस्तु महीपालस्तामुवाच मनस्विनीम् ।
करवाणि किं ते कल्याणि प्रियं यत्तेऽभिकाङ्क्षितम् ॥ ४

स्त्र्युवाच ।
त्वामहं कामये राजन्कुरुश्रेष्ठ भजस्व माम् ।
त्यागः कामवतीनां हि स्त्रीणां सद्भिर्विगर्हितः ॥ ५

प्रतीप उवाच ।
नाहं परस्त्रियं कामाद्गच्छेयं वरवर्णिनि ।
न चासवर्णां कल्याणि धर्म्यं तद्विद्धि मे व्रतम् ॥ ६

स्त्र्युवाच ।
नाश्रेयस्यस्मि नागम्या न वक्तव्या च कर्हिचित् ।
भज मां भजमानां त्वं राजन्कन्यां वरस्त्रियम् ॥ ७ C. 1. 3871 B. 1. 97. 7 K. 1. 103. 6

## 92

1 In V1, 1–13$^{d}$ are missing (cf. v. l. 1. 68. 74). Ñ1 om. वैशं° उ°. Ś1 K1 D2 S om. उवाच. — $^{a}$) D1 प्रतिपो. Ñ1 Dn D1 राजासीत्. Ś1 K1.2 Ñ3 D5 ततः स (K2 D5 °तस्तु) प्रतिपो राजा; K0.3.4 S प्रतीपस्तु ततो राजा. — $^{b}$) Ñ2 B1 Dn D1 °हितः सदा. — $^{c}$) S महाबाहुर् (for समा ब°). K0.3.4 D2 न्य(D2 अ)वसत्तपसा युक्तो. — $^{d}$) Ñ B Da Dn D1.4 गंगाद्वार(Ñ °तीरे)ग°. K0.3.4 D2 °तीरे समाहितः; S °तीरे जितेंद्रियः.

2 $^{a}$) M3.5 तत्र; M6–8 °तो (for तस्य). — $^{b}$) N (except Ś1 K1) गंगा स्त्रीरूपधारिणी; S लोभनीयतमाकृतिः. — $^{c}$) Ś1 K1 शयनात् (for सलि°). S °र्य गंगा सलिलात्. — $^{d}$) B D2.4 दर्शनीय°; T G दर्शनं (G6 उद्देशं) स्त्री समभ्यया(T1 °गा)त्; M तस्य दर्शनमभ्यगा(M8 °या)त्.

3 $^{b}$) Ñ2 Da मनोरमा (for मन°). K2 °रूपसमन्विता; S तस्य सा देववर्णिनी (G3 °रूपिणी). — $^{c}$) Ś1 K1 B3.6 D1 T G M3.5 सालसं°. M7 °णं चोरुमासाद्य. — $^{d}$) M7 तस्य (for ऊरुं). Ñ1 M (except M5) वरानना; T2 G1.2.4.5 शुभांगना.

4 $^{a}$) Ś1 K1 Ñ3 Da1 प्रति° (cf. v. l. 7, 16). — $^{b}$) K0.3.4 Ñ1.2 D (except D2.4) S (except T1 G1) यशस्वि°. — After 4$^{ab}$, S ins.:

917* वाक्यं वाक्यविदां श्रेष्ठो धर्मनिश्चयतत्त्ववित् ।

— Before 4$^{cd}$, G6 M5.6 ins. प्रतीपः. — $^{c}$) Hypermetric! Ñ2.3 B D (except Da2 D5) M3 करोमि (for कर°). K2 इह; B D2.4 किं नु (for किं ते). K0.3.4 किं ते करोमि क°; D5 °णि किमद्याहं; G3 किं ते कल्याणि करवै. — $^{d}$) K2 किं ते (for यत्ते). K0.3.4 °भिवांछितं. S यद्(M किम)र्थं मां (T1 त्वं; M6–8 मा) त्वमभ्यगाः (T1 समभ्ययात्).

5 K3 D1 (hapl.) om. 5–6. — Ś1 स्त्री वभाषे; K2 S गंगा. — $^{a}$) S कामये त्वां नरव्याघ्र (T1 °घ्रं). — $^{b}$) K0 स्त्रीभावेन; Ñ2 Dn भजमानां; D5 नृपश्रेष्ठ; S स (G3 तत्) कौरव्य (T1 अनुरक्तां). — $^{c}$) Ñ2 S °गः कामयमानानां (M3.5 °मयुतानां हि). — $^{d}$) M3.5 transp. स्त्रीणां and सद्भिः.

6 K3 D1 om. 6 (cf. v. l. 5) G4 om. प्रतीप उ°. Ś1 K1 S (G4 om.) प्रती(Ś1 K1 °ति; G1.2 °दी)पः. — $^{a}$) S °हं कामात्स्त्रियं भद्रे. — $^{d}$) Ś1 transp. तद् and मे. K0 Dn D5 °र्म्यमेतद्धि. B1 मतं. B3.5.6 D2.4 °र्म्यं तद्धि व्रतं मम. — After 6, K0.4 D2.4.5 (marg.) ins.:

918* यः स्वदारान्परित्यज्य पारक्यां सेवते स्वयम् ।
स संसारान्न मुच्येत यावदाभूतसंप्लवम् ।

[ (L. 1) K0 D5 ध्रुवं; D2.4 स्त्रियं (for स्वयं). — (L. 2) D2.4 निरयान्नैव मु°; D5 संसारात्स न मु°. D2.4 घोराद् (for यावद्). ]

7 K1 स्त्री; S गंगा. — $^{b}$) S नानपत्या कथंचन (G3 न कंच°). — $^{c}$) Ś1 तां (for त्वं). Ñ B3m Da Dn D1 भजंतीं भज मां (Ñ3 भज मां भजतीं) राजन्; B D2.4 भजस्व मां भजमानां (D2 transp. मां and भज°). S मां वै (M3.5 त्वं) भजस्व नृपते. — $^{d}$) Ñ B3m Da Dn D1.5 दिव्यां; B D2.4 काम्यां; S देहि (for राजन्). Ś1 K0–2.4 Ñ1.3 काम्यां; K3 B D2.4 दिव्यां (B3m as in text); S कामं (for कन्यां). S °स्त्रियः. — After 7, M6–8 read 10$^{b}$–15$^{d}$.

8 G5 M6–8 om. प्रतीप उ°. Ś1 K1 T G1–4.6 M3.5 प्रती(Ś1 K1 °ति)पः; K2 Ñ3 प्रतिप उ°. — $^{a}$) Ś1 नयाति°;

C. 1. 3872
B. 1. 97. 8
K. 1. 103. 9

प्रतीप उवाच ।

मयातिवृत्तमेतत्ते यन्मां चोदयसि प्रियम् ।
अन्यथा प्रतिपन्नं मां नाशयेद्धर्मविप्लवः ॥ ८

प्राप्य दक्षिणमूरुं मे त्वमाश्लिष्टा वराङ्गने ।
अपत्यानां स्नुषाणां च भीरु विद्ध्येतदासनम् ॥ ९

सव्यतः कामिनीभागस्त्वया स च विवर्जितः ।
तस्मादहं नाचरिष्ये त्वयि कामं वराङ्गने ॥ १०

स्नुषा मे भव कल्याणि पुत्रार्थे त्वां वृणोम्यहम् ।
स्नुषापक्षं हि वामोरु त्वमागम्य समाश्रिता ॥ ११

स्त्र्युवाच ।

एवमप्यस्तु धर्मज्ञ संयुज्येयं सुतेन ते ।
त्वद्भक्त्यैव भजिष्यामि प्रख्यातं भारतं कुलम् ॥१२

पृथिव्यां पार्थिवा ये च तेषां यूयं परायणम् ।
गुणा न हि मया शक्या वक्तुं वर्षशतैरपि ।
कुलस्य ये वः प्रथितास्तत्साधुत्वमनुत्तमम् ॥ १३

स मे नाभिजनज्ञः स्यादाचरेयं च यद्विभो ।
तत्सर्वमेव पुत्रस्ते न मीमांसेत कर्हिचित् ॥ १४

एवं वसन्ती पुत्रे ते वर्धयिष्याम्यहं प्रियम् ।
पुत्रैः पुण्यैः प्रियैश्चापि स्वर्गं प्राप्स्यति ते सुतः ॥ १५

वैशंपायन उवाच ।

तथेत्युक्त्वा तु सा राजंस्तत्रैवान्तरधीयत ।
पुत्रजन्म प्रतीक्षंस्तु स राजा तदधारयत् ॥ १६

एतस्मिन्नेव काले तु प्रतीपः क्षत्रियर्षभः ।
तपस्तेपे सुतस्यार्थे सभार्यः कुरुनन्दन ॥ १७

---

Ko.4 Ñ2 B1m.6 Dn2.n3 D1.4 त्वया नि°; K1 त्वयाति°; K2.3 Da D2.5 मया नि°; B5 म(m त्व)या हि वृ°; Dn1 त्वयानिमित्त°. S समया(G3 °यो)तीत (G2 °दिद; G3 °दित)मे°. Ś1 K1 मे; Ko.4 T G M3.5.6.8 वै; Ñ2 B1m Da Dn D1.4 M7 तु (for ते). ❀Dev.: निवर्तितमेव निवृत्तं।❀ — c) Ko.2 D1 नोदय°. — d) Ko.3.4 प्लावये°; S क्षिणुया°.

9 b) K1.2.4 M (except M5) त्वयाश्लिष्टं (K1 °ष्टा). K1.2.4 Ñ1 D5 वरानने. — c) Ś1 K1 हि (for च). — d) Ś1 transp. भीरु and विद्धि. D5 °तदीप्सितं. S आसनं विद्धि तच्छुभे.

10 a) Ñ2 B D (except D5) सव्योरुः; G3 °व्यं च; M3.5 °व्यश्च; M6-8 °व्यस्तु. Ś1 Ñ1.3 G3 °गस्; Ñ2 B D °भोग्यस्. — M6-8 read 10[b]–15[d] after 7. — b) Ñ3 Da D4 T G2.4-6 M3.5 transp. स and च. M6-8 तु स (for स च). K3 Da2 D2 T2 G1.4.6 M (except M7) विसर्जितः. G3 °या समयवर्जि°. — c) S नाचरामि. — d) D5 transp. त्वयि and कामं. Ś1 K1 S त्वया (G3 तव); K2 भोगं (for त्वयि). Ś1 K1 सह; K2 त्वयि (for कामं). Ś1 K1.2.4 B5 D2.4.5 वरानने; T1 G M6-8 प्रियं (G1 अहं) वरं; T2 वरं प्रियं; M3.5 तु कामतः.

11 a) Ś1 स्नुषाणामेव; K1 °पामेव हि. D (except D4) सुश्रोणि. — b) Ś1 °र्थी; Ñ1 B (except B5) D (except Da2 Dn1 D1) T G °र्थे. Ko °र्थे वरयाम्यहं. — d) K2 B6 S (except T1) ममाश्रि°.

12 K1 स्त्री; S गंगा (T1 om. the ref.). — b) Da संयुज्यैवं; S संयोगः स्यात् (M5 °गोस्तु). — c) Ñ1.2 B D (except Da D5) तु (for एव).

13 a) M6-8 क्षत्रिया (for पार्थि°). — b) D5 तेषां प्रियपरायणाः. — c) G2.5 वो (for हि). — d) T1 स्तोतुं (for वक्तुं). — V1 resumes from 13[e]. — e) T2 G2-6 यो (for ये). K3 कथि°; T G2-6 प्रणे(T1 G3 °णि)ता. G1 कुलस्य वः प्रणेता यः; M3.5 यो वः प्रणेता वंशस्य; M6-8 योतः प्रणेता सर्वस्य. — f) K (except K1) Ñ1.3 D5 यत् (for तत्). Ñ V1 B D (except D5) °मथोत्तमं. T G पतिः स्यान्मे (T G3 तावकस्य; G6 तस्याहं च) नरोत्तम; M3.5 तव पुत्रो नृपोत्तम; M6-8 कुलस्यास्य भविष्यति.

14 ab) Ñ1 स मे नाजीजनत्कस्माद्; Ñ2 V1 B D (except D5) समयेनेह धर्मज्ञ. S स (T2 G3 न; G6 यः) च (T2 G2.4.5 हि) मेभिजनं जातिमा(T1 °रा)चारं (T °रः) चापि तद्विभो (M साध्वसाधु वा). — c) T2 G1.6 न मीमांसेत; G2.5 न मीमांस्यति; G3 न मीमांस्यश्च; M न मीमांस्येत (for तत्स°). T2 G1-3.5.6 M transp. पुत्रः and ते. T1 न मीमांसे ततः पुत्रः; G4 न च मीमांस्यते पुत्रः. — d) K2 °सेच. S सर्वमेव परंतप (T G2 M3 °पः).

15 a) S राजेंद्र (for पुत्रे ते). — b) Ś1 वरयि°; S °यिष्यामि ते. K Ñ V1 D5 M (except M5) श्रियं; Dn D1 रतिं (for प्रियं). — c) Ñ3 सूक्ष्मैः (for पुत्रैः). S परं (M3.5 सुखैः) (for प्रियैः). Ñ2 D (except D2.4.5) M3.5 एव (for अपि). — d) S जेष्यति (for प्राप्स्य°).

16 Ś1 K1.3 T1 G1-3 M om. उवाच; B5 D2 T2 G4-6 om. वैशं° उ°. — a) M3.5 तं (for तथा) and अथ (for

तयोः समभवत्पुत्रो वृद्धयोः स महाभिषः ।
शान्तस्य जज्ञे संतानस्तस्मादासीत्स शंतनुः ॥ १८
संस्मरंश्चाक्षयाल्लोँकान्विजितान्स्वेन कर्मणा ।
पुण्यकर्मकृदेवासीच्छंतनुः कुरुसत्तम ॥ १९
प्रतीपः शंतनुं पुत्रं यौवनस्थं ततोऽन्वशात् ।

पुरा मां स्त्री समभ्यागाच्छंतनो भूतये तव ॥ २०
त्वामाव्रजेद्यदि रहः सा पुत्र वरवर्णिनी ।
कामयानाभिरूपाढ्या दिव्या स्त्री पुत्रकाम्यया ।
सा त्वया नानुयोक्तव्या कासि कस्यासि वाङ्गने ॥२१
यच्च कुर्यान्न तत्कार्यं प्रष्टव्या सा त्वयानघ ।

C. 1. 3986
B. 1. 97. 23
K. 1. 103. 30

---

तु). K2.4 तथेति राजा सा चोक्ता. — b) T2 M6-8 तथा (for तत्र). — After 16ab, S ins.:

919* अदृश्या राजसिंहस्य पश्यतः साभवत्तदा।

— c) Ś1 °क्षयस्तु; K1.2 °क्षस्तु; Ñ1 Da Dn D1 °क्षन्वै; Ñ2 V1 B D2.4 परीप्सन्वै; Ñ3 परीप्संश्च; S °क्षंश्च.

17 b) Ś1 K1.2.4 प्रति° (cf. v. l. 7, 16 etc.). — d) Ś1 K0.3.4 Da2 D2.4 S (except T2 G1.5 M3.5) °नंदनः. — After 17, K3 Da1 D4 (marg. *sec. m.*) S ins.:

920* प्रतीपस्य तु भार्यायां गर्भः श्रीमानवर्धत ।
श्रिया परमया युक्तः शरच्छुक्ले यथा शशी ।
ततस्तु दशमे मासि प्राजायत रविप्रभम् ।
कुमारं देवगर्भाभं प्रतीपमहिषी तदा ।

[ (L. 1) K3 Da1 श्रीमांस्तथाभवत्. — (L. 2) D4 G3 M3.5 शुक्लपक्षे; T2 G6 M6-8 शश्वच्छुक्ले. K3 Da1 °क्तः सवंर्धत महायशाः. — (L. 3) K3 Da1 व्यजाय°; T1 प्रजा°. T1 M7 शशिप्रभं. M5 प्रजाता रविसंनिभं. — (L. 4) K3 Da2 प्रतीपस्य महीपतेः. — After 920*, K3 Da1 ins. 921* (cf. v. l. 18).]

18 Ś1 K1 om. 18. — c) K0.3.4 Ñ3 Da1 D1.4.5 G6 M3.5 संतानं. — d) Ñ1.2 V1 B D (except D2.4.5) शांतनुः. — D4 (marg. *sec. m.*) S ins. after 18: K3 Da1, after 920*:

921* तस्य जातस्य कृत्यानि प्रतीपोऽकारयत्प्रभुः।
जातकर्मादि विप्रेण वेदोक्तैः कर्मभिस्तदा ।
नामकर्म च विप्रास्तु चक्रुः परमसत्कृतम् ।
शंतनोरवनीपाल वेदोक्तैः कर्मभिस्तदा ।
ततः संवर्धितो राजा शंतनुर्लोकधार्मिकः । [5]
स तु लेभे परां निष्ठां प्राप्य धर्मभृतां वरः ।
धनुर्वेदे च वेदे च गतिं स परमां गतः ।
यौवनं चापि संप्राप्तः कुमारो वदतां वरः ।

[ (L. 2) K3 Da1 °कर्माणि राजर्षिः. — (L. 3) K3 Da1 °सत्कृताः; D4 M3.5 °संस्कृतं; M6-8 °संस्कृताः. — Da1 G2 om. lines 4-5. — (L. 4) K3 °नोर्हि महीपाल. — (L. 5) K3 संवर्धते; D4 स्म वर्धते. G6 लोकपालकः. — (L. 6) K3 Da1 D4 M धर्मे (for प्राप्य). D4 M धर्मविदां. — (L. 8) K3 Da1 चारु; D4 M5 च सु°; M3.6-8 चानु° (for चापि). ]

— K3 Da1 cont. (after 921*):

922* दृष्ट्वा तु यौवनस्थं तं तत्प्रीत्या राजसत्तम ।

[ K3 adds hereafter:

923* यौवराज्येऽभिषिच्यैनं शंतनुं राजसत्तमः । ]

while M3.5 cont. (after 921*):

924* बभूव कर्मकृद्राजा शंतनुर्भरतर्षभ ।

19 a) K2 M5 सस्मार चाक्ष°; B D2.4 संस्मरन्नक्ष°. — b) T1 G3.6 M °जितांस्तान्स्वक°; T2 G1.2.4.5 °जितांश्च स्वक°. — After 19ab, K1 ins.:

925* महाभिषः स संजज्ञे क्षेत्रे तस्य महात्मनः ।

— M3.5 om. 19cd. — c) S (M3.5 om.) बभूव धर्मवि(T1 G3 M6-8 °कृ)द्राजा. — d) Ñ V1 B D (except D2.4.5) शांत°. K0.3 D2 कुरुनंदनः; K2.4 Ñ Da Dn D1.5 °सत्तमः; V1 B D4 पुरुषर्षभः; S (M3.5 om.) भरतर्षभ (T G2.4.5 °भः).

20 a) Ś1 K1.2 Da1 प्रतिपः (cf. v. l. 7, 16 etc.). Ñ V1 B D (except D2.4.5) M6-8 शांतनुं. — Hereafter the variants of शंतनु will be ignored. — b) K0 °न्वयात्. S °स्यमवोधयत्. — Before 20cd, K0.3 Ñ2 V1 Da1 D4 (marg.) ins. प्रतीप उ°. — c) Ś1 K Ñ1.2 V1 B5 Da1 Dn D1.5 transp. मां and स्त्री. Ñ3 सा; G1.2 M6-8 मा (for मां). K2 समागच्छत्.

21 c) K (except K1) Da1 D5 T G1.3.6 M °नातिरू°; V1 B (except B5) Da2 D2.4 स्त्री वै का(Da2 स)मयमाना तु (V1 सा; Da2 -पि). — d) K2.4 Ñ Da Dn D1.5 दिव्यस्त्री; V1 B (except B5) D2.4 रूपाढ्या. K0.3.4 Da1 रति(K0 वर)का°. — e) K0.3.4 Da1 नानुपृ(K3 °प्र)ष्टव्या. S न प्रष्टव्या त्वया सा वै. — f) Da D5 कस्येति Da1 °स्यापि). K0.3.4 Da शोभने; Ñ V1 B Dn D1.2.4.5 चांगने (Ñ2.3 V1 B °ना). K2 S कस्य सुता त्विति (K2 वरांगने; T1 °ता त्विह; G3 सुता इति).

22 a) V1 B1 कामं; B5 Dn D4 कर्म; G2.4.5 कुर्याद् (for कार्यं). — b) Ñ3 B3.5.6 Dn D1.5 transp. प्रष्टव्या and सा. K0.2 Ñ1.2 V1 B1 Da2 D2 सं(D3 न)प्रष्टव्या; K3.4 Da1 S प्रति(Da1 न नि)पेक्ष्यं (K4 Da1 °पेक्ष्या; T1 G3

C. 1. 3888
B. 1. 97. 23
K. 1. 103. 30

मन्नियोगाद्भजन्तीं तां भजेथा इत्युवाच तम् ॥ २२
एवं संदिश्य तनयं प्रतीपः शंतनुं तदा ।
स्वे च राज्येऽभिषिच्यैनं वनं राजा विवेश ह ॥ २३
स राजा शंतनुर्धीमान्ख्यातः पृथ्व्यां धनुर्धरः ।
बभूव मृगयाशीलः सततं वनगोचरः ॥ २४
स मृगान्महिषांश्चैव विनिघ्नन्राजसत्तमः ।
गङ्गामनुचचारैकः सिद्धचारणसेविताम् ॥ २५
स कदाचिन्महाराज ददर्श परमस्त्रियम् ।
जाज्वल्यमानां वपुषा साक्षात्पद्मामिव श्रियम् ॥ २६
सर्वानवद्यां सुदतीं दिव्याभरणभूषिताम् ।
सूक्ष्माम्बरधरामेकां पद्मोदरसमप्रभाम् ॥ २७
तां दृष्ट्वा हृष्टरोमाभूद्विस्मितो रूपसंपदा ।
पिबन्निव च नेत्राभ्यां नातृप्यत नराधिपः ॥ २८
सा च दृष्ट्वैव राजानं विचरन्तं महाद्युतिम् ।
स्नेहादागतसौहार्दा नातृप्यत विलासिनी ॥ २९
तामुवाच ततो राजा सान्त्वयञ्श्लक्ष्णया गिरा ।

---

M7 °पेत्वं; G2 °पिघ्ये; G6 M8 °वेद्धुं). K3.4 V1 B Da D2.4 कदाचन (for त्वया°). — c) S (except M5) व्रजंतीं. B (except B6) D2.4 भजमानां नियोगान्मे.

23 Before 23ab, Ś1 K1.3 D2.5 ins. वैशं°; K0.3.4 Ñ1.2 V1 B (except B6) Da Dn D1.4 वैशं° उ°. — b) Ś1 K1.2 प्रतिपः. — c) K0.3.4 Da1 स्वराज्ये चाभि°. — d) S जगाम (for विवे°). M6-8 सः (for ह).

24 a) G (except G3.6) श्रीमान्. — b) K0 Da1 विख्यातोर्व्यां धनु°; V1 B (except B6) Da2 Dn D1.2.4 देवराजसमद्युतिः; S पार्थि(G1 पांड)वानां धुरंधरः (M5 °प्रभुः sic). — After 24ab, D4 (suppl. fol. *sec. m.*) S ins. a passage of 27 lines given in App. I (No. 53). — c) S चचार (for बभू°). — d) S शंतनुः (for सत°). — After 24, Da1 ins.:

926* स वनेषु वारण्येषु शैलप्रश्रवणेषु च ।

25 a) S (except M3.5) transp. स and मृगान्. — b) M5 नृपसत्तमः. G3 निघ्नन्राजर्षिसत्तमः. — After 25ab, S ins.:

927* नदीमन्वचरद्राजा शंतनुः परया मुदा ।
[ G2 °न्वतर; G4.5 °नुचर°. ]

— c) S गंगां त्रिपथगां पुण्यां (G3 दिव्यां).

26 a) A few MSS. °राजा and °राजो. — b) Ñ V1 B (except B6) D (except D4) G1 M (except M8) परमां (B1.3 D5 °मं) स्त्रि°. — After 26ab, D4 S ins.:

928* सा च शंतनुमभ्यागादलक्ष्मीमपकर्षती ।

— c) K1 प्रज्व°. — d) M7 श्रियं (for पद्मां). Ñ2 V1 B Da2 Dn D1.2.4 साक्षाच्छ्रिय(B6 °रूपया)मिवापरां; Da1 सा कन्या संमिव(sic) स्त्रियं.

27 a) K0 मुदितां; S युवतीं. — b) K0.3 Ñ1 S सर्वाभ°; V1 दिव्यालंकारभू°. — c) S साक्षात् (for एकां). — d) Ś1 K Ñ1.3 Da1 M3.5 पद्मांतर°; T2 G (except G3) पद्मोत्क(G2 °द्माक)र°. — After 27, D4 (marg. *sec. m.*) S ins.:

929* स्नातमात्रामधौवस्त्रां गङ्गातीररुहे वने ।
प्रकीर्णकेशीं पाणिभ्यां संस्पृशन्तीं शिरोरुहान् ।

[ (L. 1) D4 G3 M स्नातगात्राम्. D4 M धौतवस्त्रां; T1 गतोवस्त्रां. ]

— G (except G3.6) cont.:

930* रूपेण वयसा कान्त्या शरीरावयवैस्तथा ।
हावभावविलासैश्च लोचनाञ्चलविक्रियैः ।
श्रोणीभरेण मध्येन स्तनाभ्यामुरसा दृशा ।
कवरीभरेण पादाभ्यामिङ्गितेन स्मितेन च ।
कोकिलालापसंलापैर्न्यक्कुर्वन्तीं त्रिलोकगाम् । [5]
वाणीं च गिरिजां लक्ष्मीं योषितोऽन्याः सुराङ्गनाः ।;

while M7.8 cont.:

931* स्नेहात्काङ्क्षेण राजानं वीक्षमाणां विलासिनीम् ।

(cf. 933* below).

28 b) S दर्शनादेव शंतनुः. — After 28ab, G1 ins.:

932* रूपेणाति च सा राजन्सर्वराजन्ययोषितः ।
अधश्चकार रूपेण सर्वराजन्ययोषितः ।
तामुवाच ततो राजा कामिनीं तु मनोरमाम् ।

(cf. 934* below). — d) G1 नातृप्यद्दर्शनेन च. — S (except G1.2) repeat 28cd after 30ab.

29 G1 om. 29; G2 om. 29a–30b. — d) Ś1 वरांगना (for विला°). — After 29, D4 (marg. *sec. m.*) T G3-6 M ins.:

933* गङ्गा काङ्क्षेण राजानं प्रेक्षमाणा विलासिनी ।

[ Cf. 931* above. — D4 G4.6 गंगाकामत; T1 गंगा कटाक्षैः; T2 गंगाकांक्षत; G3 गंगा वीक्ष्याथ; G5 कटाक्षेण तु. D4 वीक्ष°. ]

— T (T1 om. line 2) G3-6 cont.:

934* चक्षूर्यताग्रतस्तस्य किंनरीवाप्सरोपमा ।
दृष्ट्वा प्रहृष्टरूपोऽभूद्दर्शनादेव शंतनुः ।
रूपेणातीत्य तिष्ठन्तीं सर्वा राजन्ययोषितः ।

देवी वा दानवी वा त्वं गन्धर्वी यदि वाप्सराः॥३०
यक्षी वा पन्नगी चापि मानुषी वा सुमध्यमे ।
या वा त्वं सुरगर्भाभे भार्या मे भव शोभने ॥ ३१
एतच्छ्रुत्वा वचो राज्ञः सस्मितं मृदु वल्गु च ।
वसूनां समयं स्मृत्वा अभ्यगच्छदनिन्दिता ॥ ३२
उवाच चैव राज्ञः सा ह्लादयन्ती मनो गिरा ।
भविष्यामि महीपाल महिषी ते वशानुगा ॥ ३३
यत्तु कुर्यामहं राजञ्शुभं वा यदि वाशुभम् ।
न तद्वारयितव्यास्मि न वक्तव्या तथाप्रियम् ॥ ३४
एवं हि वर्तमानेऽहं त्वयि वत्स्यामि पार्थिव ।
वारिता विप्रियं चोक्ता त्यजेयं त्वामसंशयम् ॥ ३५
तथेति राज्ञा सा तूक्ता तदा भरतसत्तम ।
प्रहर्षमतुलं लेभे प्राप्य तं पार्थिवोत्तमम् ॥ ३६
आसाद्य शंतनुस्तां च बुभुजे कामतो वशी । C. 1. 3901 B. 1. 98. 6 K. 1. 104. 11

[ (L. 1) G3 संचार्य चा°. — (L. 2) G3 तां दृष्ट्वा हृष्टरोमाभू°. — (L. 3) G3 रूपेणापि हि वा राजन्सर्वांस्ता राजयो°. ]

30 G2 om. 30^ab (cf. v. l. 29). — ^b) Ś1 transp. श्लक्ष्ण° and सान्त्वयन्. S (G2 om.) कामिनीं तु मनोरमां. — After 30^ab, S (except G1.2) repeat 28^cd. — B3 om. 30^cd. — Before 30^cd, Da1 S (except T1 G3.5.6) ins. शंतनुः. — ^c) Ñ1.3 V1 Da S देवता (for देवी वा). S किंनरी (for दान°). — ^d) Ñ1 गांधर्वी; Ñ3 गंधर्वा. B1 चाथ (for यदि). K3 वा वराप्सरा; S वा सुमध्यमे (G2 सुरोत्तमे). A few MSS. °प्सरा.

31 Da1 om. 31; K3 om. 31^ab. — ^a) S मानुषी (for पन्न°). — ^b) S जानीयां कां (G3 त्वां) शुचिस्मिते. — ^c) Ko Ñ3 V1 B D (except Da2; Da1 om.) याचे त्वां सुर°; S यासि कासि सुरप्रख्ये (G6 सुमध्ये त्वं). — ^d) Ś1 K3 भार्या भव सुमध्यमे; S महिषी मे भवानघे. — After 31, S ins.:

935* त्वद्गता हि मम प्राणा वसु यन्मेऽस्ति किंचन ।
[ T2 G2.4.5 त्वां (for त्वद्-). ]

After 31, Dn ins. an additional colophon (Adhy. no.: Dn3 96).

32 Before 32, Ś1 K2.4 B Da Dn D1.4 ins. वैशं° उ°; Ko.1.3 D2.5 S वैशं°. — ^a) S श्रुत्वा तु राज्ञः सा बाला. — ^b) D5 m °स्मितं तमुवाच ह. — After 32^ab, D4 (marg. *sec. m.*) S ins.:

936* यशस्विनी च सागच्छच्छंतनोर्भूतये तदा ।
सा च दृष्ट्वा नृपश्रेष्ठं चरन्तीं तीरमाश्रितम् ।
[ (L. 1) D4 वचस्तस्य पुरोग°. — (L. 2) G6 चरंतं. ]

— ^c) Ko वचनं (for सम°). Ś1 K1 Ñ1 Da1 कृत्वा; B5 यत्तत्. S स्मृत्वा वसूनां समयं. — ^d) Ś1 Ko-2 Ñ3 V1 B1.3.6 Da Dn D4 -थाभ्य°; K3 साभ्या°; Ñ1.3 -धाम्यनंदद°; B5 सस्माराशु सुमध्यमा; D1 यथाभ्यागमनिं°; D5 साभ्यनंदद°. — After 32, K3 Da1 D4 (marg. *sec. m.*) S ins.:

937* प्रजार्थिनी राजपुत्रं शंतनुं पृथिवीपतिम् ।
प्रतीपवचनं चापि संस्मृत्यैव स्वयं नृपम् ।
कालोऽयमिति मत्वा सा वसूनां शापचोदिता ।

[ (L. 2) K3 Da1 °वचनाच्चैव. — (L. 3) K3 मन्वाना. K3 Da1 °नोदिता. ]

K3 Da1 cont.:

938* अब्रवीच्छंतनुं गङ्गा भज मां त्वं नराधिप ।

33 ^a) K (except K1) Ñ1 B (except B3) Da D1.3 चैनं; D1.2 चैवं. Ko.3.4 Ñ1 Da1 राजानं. D5 transp. राज्ञः and सा. S प्रत्युवाच महीपालं. — Before 33^cd, G6 ins. गंगा. — After 33, Da1 ins.:

939* ज्ञातोऽसि मह्यं पित्रा ते भर्ता मे त्वं भव प्रभो ।;

while D4 (marg. *sec. m.*) S ins.:

940* ननु त्वं वा द्वितीयो वा ज्ञातुमिच्छेः कथंचन ।

34 Before 34, D4 (marg. *sec. m.*) ins. गंगोवाच. — ^a) Ko.3.4 Da S यच्च. — ^c) S नाहं वार°. — ^d) Ś1 K1.2 Da2 °व्या च (Ś1 -च; K1 -स्मि) विप्रियं; T2 G2.4.5 °व्या त्वयाप्रि°.

35 ^a) S वै (for हि). K1.2 B5 Da1 M6-8 °मानाहं. — ^b) Ś1 K1 T2 G3-5 तव (for त्वयि). — T2 om. 35^cd. — ^c) Ko.3.4 वारिता समयं हित्वा. — ^d) T1 त्यक्त्वाहं. S (T2 om.) त्वां नराधिप. — After 35, D4 (marg. *sec. m.*) S ins.:

941* एष मे समयो राजन्भज मां त्वं यथेप्सितम् ।
अनुनीतास्मि ते पित्रा भर्ता मे त्वं भव प्रभो ।

36 Before 36, D4 (marg. *sec. m.*) T G1.2.5 M6-8 ins. वैशं°. — ^a) D4 transp. सा and तूक्ता. Ś1 K (except K2) Da1 सा चोक्ता; Ñ1.3 D2 साप्युक्ता; B3 सा दृष्टा; T2 G5 साधूक्ता; G6 संयुक्ता. — ^b) S तत्रैव वरवर्णिनी. — ^d) S श्रुत्वा वाक्यमनिंदिता. — After 36, D4 (marg. *sec. m.*) S ins.:

942* प्रतिज्ञाय तु तत्तस्यास्तथेति मनुजाधिपः ।
रथमारोप्य तां देवीं जगाम स तया सह ।

C. 1. 3901
B. 1. 95. 6
K. 1. 103. 12

न प्रष्टव्येति मन्वानो न स तां किंचिदूचिवान् ॥ ३७
स तस्याः शीलवृत्तेन रूपौदार्यगुणेन च ।
उपचारेण च रहस्तुतोष जगतीपतिः ॥ ३८
दिव्यरूपा हि सा देवी गङ्गा त्रिपथगा नदी ।
मानुषं विग्रहं श्रीमत्कृत्वा सा वरवर्णिनी ॥ ३९
भाग्योपनतकामस्य भार्येवोपस्थिताभवत् ।
शंतनो राजसिंहस्य देवराजसमद्युतेः ॥ ४०
संभोगस्नेहचातुर्यैर्हावलास्यैर्मनोहरैः ।
राजानं रमयामास यथा रेमे तथैव सः ॥ ४१
स राजा रतिसक्तत्वादुत्तमस्त्रीगुणैर्हृतः ।
संवत्सरानृतून्मासान्न बुबोध बहून्गतान् ॥ ४२
रममाणस्तया सार्धं यथाकामं जनेश्वरः ।
अष्टावजनयत्पुत्रांस्तस्याममरवर्णिनः ॥ ४३
जातं जातं च सा पुत्रं क्षिपत्यम्भसि भारत ।
प्रीणामि त्वाहमित्युक्त्वा गङ्गास्रोतस्यमज्जयत् ॥ ४४
तस्य तन्न प्रियं राज्ञः शंतनोरभवत्तदा ।

---

सा च शंतनुमभ्यागात्साक्षाल्लक्ष्मीरिवापरा ।

37 After $37^{a}$, K3 ins.:

943* गान्धर्वेण विधानतः ।
विवाहितां च राज्ञेन.

— b) S कामवान्सुखी (M °खान्). — c) Ś1 K1 °ति संत्रासाद् (K1 °त्रासो). — d) Da1 T2 G2.4.5 च (for स). Ko.3.4 Ñ2 V1 B (except B1) Da1 Dn3 D2.4 किंचिदुक्त°.

38 b) S रूपेण परमेण (M7 च वरेण) च (G3 ह). — c) Ś1 दमाचा°; K1 शुश्रूषणेन. Da1 रहश्चैवोपचारेण; S सम्यक्चैवोपचारेण. — d) Ko.3.4 Da1 नातृप्यज्ज°; S सुखमाराधितोऽभवत्. — After 38, S ins.:

944* स राजा परमप्रीतः परमस्त्रीप्रलालितः ।

39 b) Ko.3.4 Ñ1.2 V1 B (except B1) D (except D4) त्रिपथगामिनी. — c) K2 Ñ2 Dn D1 M5 कृत्वा; D2 तस्मिन् (for श्रीमत्). — d) K2 M5 श्रीमत्सा (M5 °द्वै); Ñ2 Dn D1 श्रीमंतं. Ñ1.3 S वै; B5 च (for सा). B1.3.6 D2.4 बिभ्रती सुमनोहरं.

40 a) M6-8 भाग्योपस्थित°. — b) B5 D (except D3.4.5) भार्या चो(Da2 वो)पनता(B5 Da1 °स्थिता)भवत्. — c) Dn नृपसिं°.

41 a) D5 संभोगहावभावार्थैः. — b) Ko.4 B5 T G (except G3) Cd भावला°; K3 हावभावैर्; Da2 हावकाम्यैर्; D3 हासला°; D4 हावहास्यैर्. B1.5 Da1 D2.4 T G मनोरमैः. Ś1 K1 Dn D1.5 हाव(D5 स्नेह)लास्यमनो°; Ñ V1 M5 हा(V1 भा)वलास्य(M5 °भाव)मनोरमैः (Ñ1 °थैः); M3.6-8 हा(M8 भा)वभावसमन्वितैः. — c) Ko.3 transp. राजानं and रम°. K2 Da2 राजानं (Da2 राजा च) रंज°; Da1 रम° भर्तारं. — d) Ñ1.3 रम्ये (for रेमे). S यथा रम्ये(T2 G4.5 °ज्ये)त स प्रभुः (M3.5 विभुः).

42 a) S °सक्तोऽभूद्. — b) V1 हुतं गंगागुणै°. K4 T G3.4-6 वृतः; Ñ1 हितः; D2.4 G3 युतः. — After $42^{ab}$, D4 (marg. sec. m.) S ins. an additional colophon. — c) S अहोरात्रान्°. — d) D5 transp. न and बुबोध. B1.5 Dn D1 बुबुधे न (for न बु°). B1.3.6 D2.4 T G M5 transp. बहून् and गतान्. B5 च संगतान् (for बहू°). M3.6-8 बुबुधे न प्रधावतः.

43 a) S °माणः प्रियां लब्ध्वा. — b) Ñ3 °कालं. Ñ2 Dn D1 S नरेश्वरः. — After $43^{ab}$, D4 (marg. sec. m.) S ins.:

945* दिविष्ठान्मानुषांश्चैव भोगान्भुङ्क्ते स वै नृपः ।
आसाद्य शंतनुः श्रीमान्मुमुदे च परंतपः ।
ऋतुकाले च सा देवी दिव्यं गर्भमधारयत् ।
[ (L. 2) D4 M3.5 °न्मुमुदे योषितां वरां. ]

— c) G3 अष्टौ च जनयन्पु°. — d) K (except K1) Da Dn D1 °मरसंनिभान्; B5 तस्यां स नृपसत्तमः; D4 तस्माद्-मरवर्णिनी; T2 G तस्य चाम° (G3 तस्य चामरवर्चसः); M तस्य सा वरवर्णिनी. Nilp अमरवर्णिनः (as in text).

44 a) S (except G1.3) तु (for च). S transp. सा and पुत्रं. Ś1 Ñ3 क्षिप्रं (for पुत्रं). — b) S स्वास्वप्सु (G3 स्वाप्सु प्र-; M6-8 सा स्वप्सु) क्षिपति स्म ह (G3 सा). — After $44^{ab}$, D4 (marg. sec. m.) S ins.:

946* सूतके कण्ठमाक्रम्य तान्निनाय यमक्षयम् ।
[ G4.5 स्वोदके. T2 G1 तूर्णमा°; G2 कर्णमा°. G1.4 M तं.]

— c) Ñ V1 Dn D1 प्रीणाम्यहं त्वामि°; D2 °णामीत्यहमि°; T1 G1.3 °मि त्वां न हीत्यु°; T2 G4.5 हनामि त्वां न हीत्यु°; G2.6 वृणोमि (G6 °तु) त्वां नदीत्यु°; M5 वृणोमि त्वाह°. — d) T1 अपां स्रोतस्यपातयत्; T2 G M सर्वान्स्रोतस्यवासृजत् (G3 °क्षिपत्).

45 a) S तस्य तत्त्वप्रि°. — c) Ś1 Ko.3.4 D5 स (for च). T G उवाच किंचिन्न तु (T1 च) तां; M नोवाच वचनं किंचित्. — d) S पितुर्वचनयंत्रितः. — After 45, D4 (marg. sec. m.) S (M5 om. lines 1–4) ins.:

947* अमीमांस्या कर्मयोनिरागमश्चेति शंतनुः ।
स्मरन्पितृवचश्चैव नापृच्छत्पुत्रकिल्बिषम् ।

न च तां किंचनोवाच त्यागाद्भीतो महीपतिः॥४५
अथ तामष्टमे पुत्रे जाते प्रहसितामिव ।
उवाच राजा दुःखार्तः परीप्सन्पुत्रमात्मनः ॥ ४६
मा वधीः कासि कस्यासि किं हिंससि सुतानिति ।
पुत्रघ्नि सुमहत्पापं मा प्रापस्तिष्ठ गर्हिते ॥ ४७

गङ्गोवाच ।

पुत्रकाम न ते हन्मि पुत्रं पुत्रवतां वर ।
जीर्णस्तु मम वासोऽयं यथा स समयः कृतः ॥४८
अहं गङ्गा जह्नुसुता महर्षिगणसेविता ।
देवकार्यार्थसिद्ध्यर्थमुषिताहं त्वया सह ॥ ४९
अष्टेमे* वसवो देवा महाभागा महौजसः ।
वसिष्ठशापदोषेण मानुषत्वमुपागताः ॥ ५०
तेषां जनयिता नान्यस्त्वदृते भुवि विद्यते ।
मद्विधा मानुषी धात्री न चैवास्तीह काचन ॥ ५१
तस्मात्तज्जननीहेतोर्मानुषत्वमुपागता ।
जनयित्वा वसूनष्टौ जिता लोकास्त्वयाक्षयाः ॥ ५२
देवानां समयस्त्वेष वसूनां संश्रुतो मया ।
जातं जातं मोक्षयिष्ये जन्मतो मानुषादिति ॥ ५३
तत्ते शापाद्विनिर्मुक्ता आपवस्य महात्मनः ।
स्वस्ति तेऽस्तु गमिष्यामि पुत्रं पाहि महाव्रतम् ॥५४ C. 1. 3918 B. 1. 98. 23 K. 1. 105. 18

---

जातं जातं च वै हन्ति सा स्त्री सप्त वरान्सुतान् ।
शंतनुर्धर्मभङ्गाच्च नापृच्छत्तां कथंचन ।
अष्टमं तु जिघांसन्त्या चुक्षुभे शंतनोर्धृतिः ।

[(L. 3) $D_4$ $G_{2.3.6}$ जाताञ्जातांश्च. $G_6$ सा हंति तत्क्षणे सप्त वै सुतान्. — (L. 5) $T_2$ जिघांसत्यां; $G_6$ °सिन्यां.]

46 S om. $46^{ab}$. — $^{ab}$) Ñ $V_1$ D (except $D_{2.4.5}$) अथैनाम°. $Ñ_3$ B $D_{2.4}$ transp. पुत्रे and जाते. Ñ $V_1$ B D (except $D_5$) प्रहसती°. — $^{d}$) $Ś_1$ $K_1$ परीप्सुः. — After $46^{cd}$, S ins.:

948* आरभन्तीं तदा दृष्ट्वा तां स कौरवनन्दनः ।
अब्रवीद्भरतश्रेष्ठो वाक्यं परमदुःखितः ।
[(L. 1) $T_2$ $G_{1.2}$ आहरंतीं.]

47 Before 47, M (except $M_8$) ins. शंतनुः. — $^{a}$) Ñ $V_1$ D (except $D_{2.4.5}$) कस्य (for कासि). $K_2$ $D_5$ कस्येति; Ñ $V_1$ Da Dn $D_1$ कासीति; $T_1$ कल्याणि. — $^{b}$) Ñ $V_1$ Dn $D_{1.5}$ हिनत्सि; $B_{1.3.6}$ Da $D_{2.4}$ T $G_{1.2.4.5}$ च ($G_1$ त्वं; $G_5$ तु) हंसि; $G_6$ $M_5$ च हिंसीः. $Ñ_3$ °तान्मम. — $^{d}$) $Ś_1$ मा पापे तिष्ठ; $K_1$ मपस्ति°; $K_2$ मा वाप°; $K_4$ मा प्रातिष्ठ; $Ñ_3$ संप्राप्तं ति°. $D_5$ मा प्राप्तं ति°. $Ñ_{1.2}$ $V_1$ B Da Dn $D_{1.2.4}$ संप्राप्तं ते सुगर्हितं ($B_{3.5.6}$ $D_2$ °ते); S मा ($T_1$ $G_1$ अ) कार्षीः कर्म निंदितं ($M_8$ गर्हितं).

48 $K_1$ स्त्री; $Ñ_2$ गंगोवाच; S गंगा. — $^{ab}$) S (except $M_8$) transp. हन्मि and पुत्रं. S धर्मभृतां. — $^{c}$) $K_1$ संवासो (for वासो°).

49 $^{b}$) S °र्षिगण($G_3$ °र्षेजन)पावनी. — $^{d}$) $Ś_1$ K $Ñ_3$ $D_5$ वै (for अहं).

50 $^{a}$) $Ś_1$ K $D_5$ अष्टौ मे; Ñ $V_1$ Da Dn $D_1$ इमेष्टौ ($Ñ_3$ अष्ट मे); B $D_{2.4}$ अष्टौ ये; S अष्टौ हि (for अष्टेमे). $Ñ_{1.3}$ जाता (for देवा). — $^{c}$) S आपवस्या($G_1$ आवसिष्टस्या; $G_3$ वसिष्टस्या)भिशापेन. — $^{d}$) $Ś_1$ °त्वमिहाग°; S मानुषे($M_5$ °नवे)ष्पूपपादिताः.

51 $^{a}$) S (except $G_3$) चान्यः. — $^{b}$) $Ś_1$ $K_1$ $D_5$ त्वादृशो; $K_{0.2-4}$ त्वामृते. S तु न (for भुवि). — $^{c}$) T G जनित्री मद्विधा धात्री ($G_3$ जनयित्री मद्विधा स्त्री); M जनितुर् ($M_3$ लोके च) मद्विधा धा°. — $^{d}$) $Ñ_1$ न च वास्ती°; $B_{3.6}$ Dn $D_{1.4}$ लोके नास्ति च (Dn $D_1$ °स्तीह). $Ñ_2$ $V_1$ $B_{1.5}$ Da $D_2$ लोके नास्ति (Da न चैवास्ति) कदाचन; S नैवास्ति ($G_{2.4.5}$ न वा स्त्री) पुरुषाधिप ($M_{3.5}$ मनुजर्षभं; $M_{6-8}$ मनुजा°).

52 $^{a}$) $V_1$ B $D_{2.4}$ तेषां च जन°; T G $M_5$ तस्माद्वि ($G_{2.4-6}$ °द्वि-) जनने युक्ता ($T_1$ $M_5$ °क्तं); $M_{3.6-8}$ °जनने युक्तं. — $^{b}$) $Ś_1$ °त्वमिहा°; $Ñ_3$ °त्वमहं ग°. S त्वत्संयोगमरोचयं. — After $52^{ab}$, $K_0$ ins.:

949* वसवस्ते सुता जाता राजँल्लोकस्य कीर्तये ।

— $^{d}$) S लोकाश्च पुष्कलाः.

53 $^{a}$) $T_2$ $G_{3-5}$ नियमस्त्वे°. — $^{b}$) $K_{3.4}$ $B_1$(m as in text)$_{.5}$ $Da_1$ $D_5$ $G_{1.2}$ संश्रितो; $Ñ_1$ °भृतो; $V_1$ °स्मृतो; $D_1$ °स्तुतो; $G_3$ M (except $M_3$) स श्रुतो. — $^{c}$) $D_5$ मोक्षयेयं. $B_5$ जातं तं मोक्षयिष्येति. — $^{d}$) $Ñ_{1.3}$ जन्मनो. S नियोगान्मानुषे($M_{6-8}$ °न्मनुजे)ष्विति.

54 $T_2$ om. $54^{ab}$. — $^{ab}$) $K_1$ $D_5$ ते तु शा°. $K_4$ वसिष्ठस्य; Cd आपवस्य (as in text). S ($T_2$ om.) शप्ताः शा($M_{6-8}$ पा)पाद्विमुक्तास्ते त्वत्कृतेयं न मुच्यते. — After $54^{cd}$, $D_4$ (marg. *sec. m.*) S ins.:

950* अयं तव सुतस्तेषां वीर्येण कुलनन्दनः ।
संभूतोऽति जनानन्यान्भविष्यति न संशयः ।

[(L. 1) $D_4$ $G_{3.5.6}$ $M_{6-8}$ कुरु°. — (L. 2) $D_4$

C. 1. 3919
B. 1. 93. 24
K. 1. 105. 20

एष पर्यायवासो मे वसूनां संनिधौ कृतः । मत्प्रसूतं विजानीहि गङ्गादत्तमिमं सुतम् ॥ ५५

इति श्रीमहाभारते आदिपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

## ९३

शंतनुरुवाच ।
आपवो नाम को न्वेष वसूनां किं च दुष्कृतम् ।
यस्याभिशापात्ते सर्वे मानुषीं तनुमागताः ॥ १
अनेन च कुमारेण गङ्गादत्तेन किं कृतम् ।
यस्य चैव कृतेनायं मानुषेषु निवत्स्यति ॥ २
ईशानाः सर्वलोकस्य वसवस्ते च वै कथम् ।
मानुषेषूदपद्यन्त तन्ममाचक्ष्व जाह्नवि ॥ ३

वैशंपायन उवाच ।
सैवमुक्ता ततो गङ्गा राजानमिदमब्रवीत् ।
भर्तारं जाह्नवी देवी शंतनुं पुरुषर्षभम् ॥ ४
यं लेभे वरुणः पुत्रं पुरा भरतसत्तम ।
वसिष्ठो नाम स मुनिः ख्यात आपव इत्युत ॥ ५
तस्याश्रमपदं पुण्यं मृगपक्षिगणान्वितम् ।
मेरोः पार्श्वे नगेन्द्रस्य सर्वर्तुकुसुमावृतम् ॥ ६

---

°भिजनं न्याय्यं; T1 °तो दितिजान°; G2 °तिजनं कर्म. D4 G3 करिष्यति; T1 वधि°. ]

55 $^{a}$) Ñ3 D5 एवं. S °वासस्थो. — $^{b}$) S देवस्त्व(M6-8 त)त्सदृशोऽष्टमः. — $^{c}$) Ś1 Ñ3 तत्प्र°; K1 त्वत्प्र°; Ñ1 तं प्र°. S मत्प्रसादाच्च जा°. — After 55, D4 (marg. sec. m.) S ins.:

951* तस्माद्देवव्रतश्चैव गङ्गादत्तश्च वीर्यवान् ।
द्विनामा शंतनोः पुत्रः शंतनोरधिको गुणैः ।
तेषां लोकानवाप्नोति वसूनां वसुधाधिप ।

[ For line 1 cf. v. l. 1. 93. $44^{ab}$. — (L. 2)=1. 93. $44^{cd}$. ]

Colophon. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* K3.4 Ñ1.2 V1 B5 T1 संभव. — *Adhy. name:* K0.3.4 Ñ1.2 V1 B1.3.6 Da Dn D1.2.4 भीष्मोत्पत्तिः; T2 G1.3.4.6 M8 देवव्रतोत्पत्तिः. — *Adhy. no.* (figures, words or both): K0 94; K1 103; B1 D4 96; Da1 95; Dn3 97; T1 92(!); T2 G M 43 (G5 42). — *S'loka no.:* Dn1.n2 24; M8 20. — *Aggregate s'loka no.:* Dn2 3913.

### 93

1 Ś1 K1 D2 S om. उवाच. — $^{a}$) Ñ3 आर्यवो; G3 वसिष्ठो. Ś1 कस्त्वेष; B5 T G2.4.5 कोप्ये°; G1.3.6 M को ह्ये°. — $^{b}$) Ś1 K1 वसूनां दुष्कृतं च किं; S किमृषेस्तस्य दूषितं. — After $1^{ab}$, S ins.:

952* शशाप यस्मात्कल्याणि स वसूंश्चारुदर्शने ।
[ M चारुलोचने. ]

— $^{d}$) Ñ V1 Dn D1 S योनिमाग° (T1 °माश्रि°); B5 D4 तनुमाश्रि°. Ś1 K Da D5 मानुषत्वमुपागताः.

2 $^{a}$) Ś1 K1.2 Da D5 तु (for च). S विशेषेण (for कुमा°). — $^{b}$) V1 Da1 Dn त्वया द°. Ś1 K1 वै (for किं). — $^{c}$) S कस्य (T1 G3 त°). M6-8 केन (for चैव). Ś1 K1 D5 कृते चायं; S °नेह (G3 °नैव; G6 °नैष). — $^{d}$) S चिरमेष (G1 °रं भूमौ) वसिष्यति.

3 $^{a}$) K0.2.3 ईशास्तु (K2 °स्ते); D (except D2.4.5) ईशा वै. S °लोकानां. — $^{b}$) S वसवः केन हेतुना. — $^{c}$) T G1.2.6 मनुष्ये°. K0 Ñ1 B3 Da2 M7 °पपद्यंत; K2-4 T G °प(G3 °द)पद्यंते; Ñ3 Da1 °षु प्रप°; D2 °ष्ववप°. — $^{d}$) D5 T G तत्समा° (T1 तथ्य°; G2.3 तत्व°).

4 Ś1 K1.3 D5 M om. उवाच; T G om. वैशं° उ°. — $^{a}$) K3 Dn S एव°. Ñ1.2 V1 D (except D2.4.5) तदा गंगा; S वरारोहा. — $^{b}$) G6 भर्तारमिद°. — Dn1 om. $4^{cd}$. — $^{c}$) D5 सा तु (for देवी). — $^{d}$) Ś1 K (except K1) Da1 भरतर्षभ (Da1 °भं); Ñ2 V1 B D2.4 पुरुषोत्तमं; Dn2 °र्षभ.

5 Before 5, Ñ2 Da1 Dn D1.4 ins. गंगोवाच; S गंगा. — $^{a}$) K2 S transp. यं and लेभे. Ś1 वारुणिः (by corr.). S यमुना (for वरु°). — $^{b}$) S वरुणाद्राजसत्त°. — $^{c}$) B (mostly) वशिष्ठो. Ñ V1 Dn D1 वसिष्ठनामा स.

6 $^{a}$) Ś1 D4 °श्रममिदं. K2 रम्यं (for पुण्यं). K1 तस्याश्रमस्थानमिदं. — $^{b}$) Ś1 K1 °गणैर्वृतं; K4 °गणावृतं; Ñ1.2 V1 B Dn D1.2.4 °समन्वितं; Da °निषेवितं. — $^{d}$) K3

स वारुणिस्तपस्तेपे तस्मिन्भरतसत्तम ।
वने पुण्यकृतां श्रेष्ठः स्वादुमूलफलोदके ॥ ७
दक्षस्य दुहिता या तु सुरभीत्यतिगर्विता ।
गां प्रजाता तु सा देवी कश्यपाद्भरतर्षभ ॥ ८
अनुग्रहार्थं जगतः सर्वकामदुघां वराम् ।
तां लेभे गां तु धर्मात्मा होमधेनुं स वारुणिः ॥ ९
सा तस्मिंस्तापसारण्ये वसन्ती मुनिसेविते ।
चचार रम्ये धर्म्ये च गौरपेतभया तदा ॥ १०
अथ तद्वनमाजग्मुः कदाचिद्भरतर्षभ ।
पृथ्वाद्या वसवः सर्वे देवदेवर्षिसेवितम् ॥ ११
ते सदारा वनं तच्च व्यचरन्त समन्ततः ।
रेमिरे रमणीयेषु पर्वतेषु वनेषु च ॥ १२
तत्रैकस्य तु भार्या वै वसोर्वासवविक्रम ।
सा चरन्ती वने तस्मिन्गां ददर्श सुमध्यमा ।
या सा वसिष्ठस्य मुनेः सर्वकामधुगुत्तमा ॥ १३
सा विस्मयसमाविष्टा शीलद्रविणसंपदा ।
दिवे वै दर्शयामास तां गां गोवृषभेक्षण ॥ १४
स्वापीनां च सुदोग्ध्रीं च सुवालधिमुखां शुभाम् ।
उपपन्नां गुणैः सर्वैः शीलेनानुत्तमेन च ॥ १५
एवंगुणसमायुक्तां वसवे वसुनन्दिनी ।
दर्शयामास राजेन्द्र पुरा पौरवनन्दन ॥ १६
द्यौस्तदा तां तु दृष्ट्वैव गां गजेन्द्रेन्द्रविक्रम ।
उवाच राजंस्तां देवीं तस्या रूपगुणान्वदन् ॥ १७
एषा गौरुत्तमा देवि वारुणेरसितेक्षणे ।
ऋषेस्तस्य वरारोहे यस्येदं वनमुत्तमम् ॥ १८
अस्याः क्षीरं पिबेन्मर्त्यः स्वादु यो वै सुमध्यमे । C. 1. 3938 B. 1. 99. 19 K. 1. 106. 19

---

B5 D5 °वृते; Ñ3 B1.6 D4 S सर्वर्तुकवनावृ°.

7 c) K2.4 पुण्यवतां; G3 °भृतां.

8 b) K (except K1) B3 Da T G1–3.5.6 M °त्यभि(K3 °ति)विश्रुता; Ñ V1 B1.3m.5.6 Dn D1.2.4.5 G4 °त्यभिशब्दिता (B3m °शोभिता). — d) S काश्य°.

9 b) K0.2.4 Ñ V1 Dn D1 M3 °कामदुहां. K0 Ñ V1 B Da2 Dn D1 G4.5 M वरा. — d) Ñ1.3 होम्यं धेनुं.

10 a) G2.4(*sup. lin.* as in text).5 एकस्मिं°. — b) Ś1 K0.3.4 वसती. T G ऋषिसे° (T3 ऋषिनिवेशने; G4 *sup. lin.* ऋषिनिषेविते). — c) Ś1 K1.2 मेध्येरण्ये; K0.3 मेध्ये रम्ये; K4 मध्ये रम्ये; N1 धर्मे पुण्ये; Ñ2 V1 B1 Da Dn D1 पुण्ये रम्ये; D5 मध्ये रेमे; G1 यत्नाद्धर्म्ये; G2 रम्ये हर्म्ये.

11 a) S ततस् (for अथ). — c) S धराद्या (G3 सभार्या; G6 अष्टौ च). — d) V1 B D (except Da1 D4) G1.6 M देवा दे°; T2 G2.4.5 देवा वै ऋषिसे°.

12 a) B3.5 °नं तत्र. S सभार्यास्तद्वनं कृत्स्नं. — b) K2 B Da D3.4 संचरंतः (B °त); K3 S विचरंतः (T1 °ति). S ततस्ततः. — d) Ś1 K (except K1) वनेषूपवने°; Da सर्वर्तुषु व°.

13 a) Ś1 K1 तस्यै°. Ñ V1 B D (except D5) °कस्याथ भार्या तु; S एकस्य भार्या राजेंद्र. — D5 om. 13cdef. — c) B3.5.6 D4 transp. सा and चरन्ती. K3 विचरंती; B1 Da Dn D1 संच°; D2 चरंतीं गां; S तां च दोग्ध्रीं. — d) D2 संददर्श. S सुदर्शनां. — e) G2 स्वसा. Ś1 K1 या वसिष्ठस्य भवने; V1 B Dn D1.2.4 नंदिनीं नाम राजेंद्र. — f) Ñ1.2 V1 B Dn D2.4 G6 °त्तमां.

14 a) M अथ सा विस्मिता देवी. — b) S रूपद्र° (G6 रूपयुक्ता सुनंदिनी). — c) K2 वसवे; K3 दिवेथ; Ñ1.2 द्यौश्चैवं; Ñ3 द्यौश्चापि; V1 Da2 Dn2.n3 D1.4 द्यवे वै; B1.3.5m द्यौश्चैव; B6 द्यौश्चवै; Da1 सद्यवै; D2 पतिं वै. S सा (T2 G2 स्व-) पत्युर्दर्श° (G6 दर्श° कल्याणी). — d) Ś1 K0.1 °क्षणा; K3.4 D2.5 °क्षणां; T G M3.5 °वृषविक्रम (T1 °मं; G1.2 °मः). M6–8 तां गोवृषभविक्रम. — After 14, B5 ins.:

953* षडुन्नतां सुपार्श्वोरुं पृथुपञ्चसमायताम् ।
अष्टायतशिरोग्रीवां पृथुस्त्रां समपद्यत ।

15 a) K0 G6 सापीनां; K4 सुस्तनीं; Ñ1 संधा°; Ñ3 M स्वाधी°; V1 B1.5 Dn D1.5 Cd आ°; D2 T2 सु°; T1 सुपनां; G3 सोपि तां. — b) V1 B5.6 Da Dn D1 Cd °सुरां; B1.3 D2.4.5 °मुखीं. B5 D4 तथा; B6 D2 तदा (for शुभां). T1 G3.6 M °धिमुखोदरां; T2 G1.2.4.5 सुवालां सुमुखोदरां.

16 c) S °मास कल्याणी (M °णीं). — d) Ñ1 B (except B1) D2.4 S (except G2.3.6) पौरववर्धन.

17 a) Ñ3 B (except B1) D4 द्यौस्तथा. — b) K (except K1) B5 Da1 T1 G (except G2.6) °विक्रमः. Ñ2 गजेंद्रसमविक्रम. — After 17ab, B3 ins.:

954* उवाच राजंस्तां देवीं नृपोत्तम सुमध्यमां ।

— c) Ñ1 राजा तां. T1 वीरं (for देवीं). — d) Ś1 °गुणांस्त्विदं; K0 D5 °गुणान्वितः (D5 °तान्); K1 °गुणाधिकां.

C. 1. 3938
B. 1. 99. 20
K. 1. 106. 20

दश वर्षसहस्राणि स जीवेत्स्थिरयौवनः ॥ १९
एतच्छ्रुत्वा तु सा देवी नृपोत्तम सुमध्यमा ।
तमुवाचानवद्याङ्गी भर्तारं दीप्ततेजसम् ॥ २०
अस्ति मे मानुषे लोके नरदेवात्मजा सखी ।
नाम्ना जिनवती नाम रूपयौवनशालिनी ॥ २१
उशीनरस्य राजर्षेः सत्यसंधस्य धीमतः ।
दुहिता प्रथिता लोके मानुषे रूपसंपदा ॥ २२
तस्या हेतोर्महाभाग सवत्सां गां ममेप्सिताम् ।
आनयस्वामरश्रेष्ठ त्वरितं पुण्यवर्धन ॥ २३
यावदस्याः पयः पीत्वा सा सखी मम मानद ।
मानुषेषु भवत्वेका जरारोगविवर्जिता ॥ २४
एतन्मम महाभाग कर्तुमर्हस्यनिन्दित ।
प्रियं प्रियतरं ह्यस्मान्नास्ति मेऽन्यत्कथंचन ॥ २५
एतच्छ्रुत्वा वचस्तस्या देव्याः प्रियचिकीर्षया ।
पृथ्वाद्यैर्भ्रातृभिः सार्धं द्यौस्तदा तां जहार गाम् ॥ २६
तया कमलपत्राक्ष्या नियुक्तो द्यौस्तदा नृप ।
ऋषेस्तस्य तपस्तीव्रं न शशाक निरीक्षितुम् ।
हृता गौः सा तदा तेन प्रपातस्तु न तर्कितः ॥ २७
अथाश्रमपदं प्राप्तः फलान्यादाय वारुणिः ।
न चापश्यत गां तत्र सवत्सां काननोत्तमे ॥ २८
ततः स मृगयामास वने तस्मिंस्तपोधनः ।
नाध्यगच्छच्च मृगयंस्तां गां मुनिरुदारधीः ॥ २९
ज्ञात्वा तथापनीतां तां वसुभिर्दिव्यदर्शनः ।
ययौ क्रोधवशं सद्यः शशाप च वसूंस्तदा ॥ ३०
यस्मान्मे वसवो जह्रुर्गां वै दोग्ध्रीं सुवालधिम् ।
तस्मात्सर्वे जनिष्यन्ति मानुषेषु न संशयः ॥ ३१
एवं शशाप भगवान्वसूंस्तान्मुनिसत्तमः ।
वशं कोपस्य संप्राप्त आपवो भरतर्षभ ॥ ३२

---

18 a) K3 Ñ V1 B D (except Da D4) S (except G4) देवी (B5 राजन्). — b) K3 Ñ V1 B1.3 Dn D1.4 °क्षणा.

19 b) Ś1 K1 transp. यः and वै.

21 a) K0 नगवती; K2–4 Ñ V1 B D (except D5) G3 जित°; G2.4.5 हिम°.

22 b) M6–8 सत्यधर्मस्य. — c) T1 M विश्रुता दुहिता लोके. — d) K2 S (except G4) मानुषी. K1 रूपसंमता; B6 नृपसं°; D5 [ऽ]स्मिन्परंतप.

23 a) T G महाराज. — b) K1 समीप्सि°; G1–3 मये(G3 अथे)प्सि°. — G1 om. 23cd. — c) Ñ3 S (G1 om.) °यस्व सु(Ñ3 T2 G6 न)रश्रेष्ठ. — d) T2 G4.5 त्वरितः. Da S (G1 om.) °वर्धनां (G3 °दर्शनां).

24 c) M6–8 मानवेषु. Ś1 K1.2.4 D1 भवत्येका; Ñ2 भवेदे°; Ñ3 °वेत्वे°; T G °वेच्चै°.

25 K0 om. 25. — b) S °र्हसि कर्म वै. — c) S प्रियात्प्रि°. B1 D5 यस्मान्; G3–5 हि स्मान्. — d) T1 मन्ये (for मेऽन्यत्).

26 Before 26, M5 ins. गंगा. — a) K0.3.4 एवं. K0 D2 transp. श्रुत्वा and तस्या. — c) S धराद्यैर्. B3.6 D2 सर्वैर् (for सार्धं). — d) T2 G (except G1.6) M6–8 तां and गां.

27 b) Ñ3 D2 तदानघ. — d) K0.4 S परीक्षि°. — e) Ñ1.3 ततः (for तदा). — f) K3 M6–8 प्रतापस्तु. M6–8 कीर्तितः(!). T G प्रयाता(G1 °यता; G2.4.5 °यता)द्भुतदर्श(G1 °र्शि)ना; M3.5 प्रयाता न तु शक्तितः.

28 a) T G यदाश्र°. — G2 (hapl.) om. 28b–30c. — cd) Ñ V1 B6 D (except D2) °पश्यत्स गां. S नापश्यद्गां सवत्सां तां स हि तस्मिन्वने°.

29 G2 om. 29 (cf. v. l. 28). — ab) S (G2 om.) स तस्मिन्मृग° वने गामृषिसत्तमः. — c) Ś1 K1 °गमच्च; Ñ3 सोध्य°; V1 Dn D5 नाध्यागम°; B °ध्याग°; T1 स नाभ्यगच्छन्; T2 G3–5 नाभ्याग°; G1 M6–8 नाभ्यग°. — d) T G1.4–6 स्वां (for तां).

30 G2 om. 30abc (cf. v. l. 28). — a) Ś1 K Ñ1.3 Da D5 गां (for तां). Ñ2 ज्ञात्वापनीतां वसुभिर्. — b) Ñ2 दिव्यज्ञानेन गां मुनिः; M (except M5) °र्दिव्यचक्षुषा. — c) S (G2 om.) स तु कोपवशं प्राप्तः.

31 b) M3 तां (for गां). M3 गां; M6–8 मे (for वै). K4 Da1 D1 °लधी; T1 G1.2.6 M (except M3) °धीं. — c) Ñ3 तस्मादेते. — d) S वसवो मानुषेष्विति.

32 D1 (hapl.) om. 32b–33c. — b) K0.3.4 transp. वसून् and तान्. V1 T1 वसून्स; Da आपवो (see below). Ñ2 G3 ऋषिसत्तमः; V1 B D (except D5; D1 om.) भरतर्षभ; T1 मुनिपुंगवः. — c) Ñ V1 B1.6 Da Dn T2 G क्रोधस्य. — d) Da वसूंस्तान् (for आप°); see above. B D (except D5; D1 om.) मुनिसत्तमः; T1 भगवानृषिः.

33 D1 om. 33abc (cf. v. l. 32). — a) B3.6 D2.4

शूराश्च कृतविद्याश्च सन्तश्च सुखिनोऽभवन् ॥ ४
नाभवन्दस्यवः केचिन्नाधर्मरुचयो जनाः ।
प्रदेशेष्वपि राष्ट्राणां कृतं युगमवर्तत ॥ ५
दानक्रियाधर्मशीला यज्ञव्रतपरायणाः ।
अन्योन्यप्रीतिसंयुक्ता व्यवर्धन्त प्रजास्तदा ॥ ६
मानक्रोधविहीनाश्च जना लोभविवर्जिताः ।
अन्योन्यमभ्यवर्धन्त धर्मोत्तरमवर्तत ॥ ७
तन्महोदधिवत्पूर्णं नगरं वै व्यरोचत ।
द्वारतोरणनिर्यूहैर्युक्तमभ्रचयोपमैः ।
प्रासादशतसंबाधं महेन्द्रपुरसंनिभम् ॥ ८
नदीषु वनखण्डेषु वापीपल्वलसानुषु ।
काननेषु च रम्येषु विजह्रुर्मुदिता जनाः ॥ ९
उत्तरैः कुरुभिः सार्धं दक्षिणाः कुरवस्तदा ।
विस्पर्धमाना व्यचरंस्तथा सिद्धर्षिचारणैः ।
नाभवत्कृपणः कश्चिन्नाभवन्विधवाः स्त्रियः ॥ १०
तस्मिञ्जनपदे रम्ये बहवः कुरुभिः कृताः ।
कूपारामसभावाप्यो ब्राह्मणावसथास्तथा ।
भीष्मेण शास्त्रतो राजन्सर्वतः परिरक्षिते ॥ ११
बभूव रमणीयश्च चैत्ययूपशताङ्कितः ।
स देशः परराष्ट्राणि प्रतिगृह्याभिवर्धितः ।

C. 1. 4350
B. 1. 109. 14
K. 1. 118. 14

°श्चाप्यवर्धंत; S °श्चोपकीर्यंते (G1 °शोभंते; G3 °जीव्यंते). — b) S (except G2.6 M6-8) °ष्यपि. — After 4, T G1.3.6 M3.5 read $10^{ef}$.

5 a) D5 देशे; G3 कश्चित्.

6 S reads 6–7 after $10^{cd}$. — a) K0 Ñ B D (except D5) धर्मक्रियायज्ञ(Da1 °ज्ञान)शीला; K2 °यज्ञशीला; S दानधर्मक्रियायुक्ता. — b) K0 Ñ B D (except D5) सत्यव्रत(Ñ3 °धर्म)परा°. — After $6^{ab}$, Da1 reads $7^{cd}$. — c) D2 S (except T1 G1) अन्योन्यं (cf. $7^{c}$). — d) S वर्धंते स्म. Ñ3 ततः (for प्रजाः). K4 T2 G3.4 तथा; Ñ3 प्रजाः.

7 For sequence of S cf. v. l. 6. — a) Da कामक्रोध°. — b) Ñ2 B D नरा; S प्रजा. Da1 reads $7^{cd}$ after $6^{ab}$. — c) K Ñ B1.3.6 Da Dn D4 °भ्यनंदंत (K2 °भिनंदंति; K3 °भिनंदंत); B5 D1.5 T G1.4.5 M3 °भ्यवर्तंत; D2 °भिनंदंतो; G2 °भ्यनंदंस्तु; G3 °भिवर्धंत; G6 M6-8 °भ्यनंदंस्ता; M5 °भ्यनुग्राह्या. — d) S ब्रह्मोत्तरम् (G1 ब्राह्मणोत्तमम्); Cd as in text. Ñ3 B5 T G5 अवर्धंत.

8 Da1 om. $8^{abcd}$. — a) K2 S °दधिसंकाशं. — b) Ś1 K1 Ñ3 च; Ñ1 तु (for वै). S °रं बह्वशोभत. — d) S छन्नमभ्र(T2 °न्नं व्योम; G1.6 M5 °मभ्रं; G4.5 °न्नं भूयो; M6-8 छिन्नमभ्र)घनैरिव.

9 a) S नदीपादपखंडेषु (M6-8 °गंधेषु). — b) K3 वापीपुलिन°; T1 G1.3.6 M °सेतुषु; T2 G2.4.5 वापीकूपादिवप्रषु. Cd mentions पल्वल. — c) Ñ1 सुरम्येषु; D4 च वप्रे°; S (G3 missing) विचित्रे° (G4.5 च चित्रे°; G6 M5 च दिव्ये°). — d) K2 प्रजाः (for जनाः). S विहरंति स्म कौरवाः.

10 b) Ñ1.2 B D (except D5) S (except G6) तथा. — cd) K0.4 B5 विहरन्; K1-3 व्यहरन्. B5.6 Da D1.4 तदा. Ñ2 B3 Dn D1 देवर्षि°. S स्पर्धमानाश्च दृश्यंते चारणर्षिसमागमे. — After $10^{cd}$, S reads 6–7. — G2.4.5 M6-8 om. $10^{ef}$; while T G1.3.6 M3.5 read it after 4. — f) T G1.3.6 न काचिद् (G1 कापि; G3 चापि) विधवाभवत्.

11 a) K3 हृष्टा; K4 हृष्टे; G1.2.4 श्रेष्ठे (for रम्ये). T G5.6 M °पदश्रेष्ठे; G3 °वरश्रेष्ठे. — b) K3.4 बभूवुः (for बह°). Ś1 वृताः. Ñ1.2 B D कुरुभिर्बहुली(Ñ1 °भिः)कृते; S भीष्मेण विधिना कृताः. — c) Ś1 K Ñ3 °सभावप्रा; Dn3 °सभावीथी; G6 °महावप्रा; M5 °प्रपासंघा. — d) K1.2 B6 Da D2 G (except G1.5) तदा. — After $11^{cd}$, N ins.:

1104* बभूवुः सर्वर्द्धियुतास्तस्मिन्राष्ट्रे सदोत्सवाः ।

[ Ś1 K (except K3) Ñ3 B5.6 D2 बभूव. Ś1 K1 Ñ3 चार्द्धिमान्नित्यं; K0.2.4 ऋद्धिमान्नित्यं; K3 ऋद्धितो नित्यं; B5.6 D2 °युतः. Ś1 K Ñ3 महोत्सवः; B5.6 D2 सदोत्सवः. ]

— S (which om. $11^{ef}$) ins. after $11^{cd}$:

1105* स्वाहाकारैः स्वधाभिश्च संनिवासः कुरूषितः ।

[ T1 M3 स निवा°. T1 कुरुष्वपि; G3 कुरुष्विति; G6 सुरक्षितः; M6-8 कुरुष्वितः. G3.4.5 °श्च निवासाः समलंकृताः. ]

— e) Ñ1.2 B D (except D5) धर्मतो (for शास्त्र°).

12 a) S परमोपेतो (for रम°). — b) Ś1 चित्रयूप°; K2 °शताकुलः; Ñ3 चित्य°; S यूप(G5.6 °पैः)चैत्यवनध्वजैः (T1 °वरद्विजैः; G1 °ध्वजैः सदा; G6 °धनुर्भुजैः). — c) S प्रमृज्य (M °द्य) (for स देशः). — d) K0 Ñ3 प्रमृद्याभिप्रवर्धितः; K2 संमृद्याभिप्रवर्तितः; K3.4 प्रमृज्याभिप्र°; Ñ1.2 प्रामृद्याभिप्र°; B Dn विमृज्याभिप्र°; Da D2.4 विमृद्याभिप्रवार्धितः (Da1 °र्तितः); D1 विसृज्याभिप्र°; D5 समृध्याभिप्रवार्धितः

भीष्मेण विहितं राष्ट्रे धर्मचक्रमवर्तत ॥ १२
क्रियमाणेषु कृत्येषु कुमाराणां महात्मनाम् ।
पौरजानपदाः सर्वे बभूवुः सततोत्सवाः ॥ १३
गृहेषु कुरुमुख्यानां पौराणां च नराधिप ।
दीयतां भुज्यतां चेति वाचोऽश्रूयन्त सर्वशः ॥ १४
धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महामतिः ।
जन्मप्रभृति भीष्मेण पुत्रवत्परिपालिताः ॥ १५
संस्कारैः संस्कृतास्ते तु व्रताध्ययनसंयुताः ।
श्रमव्यायामकुशलाः समपद्यन्त यौवनम् ॥ १६
धनुर्वेदेऽश्वपृष्ठे च गदायुद्धेऽसिचर्मणि ।
तथैव गजशिक्षायां नीतिशास्त्रे च पारगाः ॥ १७
इतिहासपुराणेषु नानाशिक्षासु चाभिभो ।
वेदवेदाङ्गतत्त्वज्ञाः सर्वत्र कृतनिश्रमाः ॥ १८
पाण्डुर्धनुषि विक्रान्तो नरेभ्योऽभ्यधिकोऽभवत् ।
अत्यन्यान्बलवानासीद्धृतराष्ट्रो महीपतिः ॥ १९
त्रिषु लोकेषु न त्वासीत्कश्चिद्विदुरसंमितः ।

---

संप्र°; S स्वराष्ट्रं ($G_{3.5}$ °ज्यं) पर्यरक्षत ($G_1$ $M_{3.5}$ परिरक्षता; $G_3$ °क्षते; $G_6$ परिरक्षिता). — $^{e}$) $B_6$ धर्मेण (for भीष्मे°). — $^{f}$) $B_5$ $D_{2.4}$ $T_1$ G (except $G_{3.6}$) °वर्धत.

13 $^{b}$) S यशस्विनां (for महा°). — $^{d}$) $Ñ_{1.2}$ B D परमो($Ñ_{1.2}$ $D_6$ सततो)त्सुकाः; S परमोत्सवाः.

14 $^{b}$) $D_a$ जनाधिप. — $^{d}$) $Ś_1$ $K_{0.1.3}$ $D_5$ सर्वतः.

15 $^{b}$) S महायशाः. — Between 15 and 16, S reads 21, 22 and 23, in a different sequence and with some v. l. and additional st. as shown below. — S ins. after 15: $D_4$ (marg. *sec. m.*; om. line 1–5, 7, 8, 12–18), after 20:

1106* वैदिकाध्ययने युक्तो नीतिशास्त्रेषु पारगः ।
भीष्मेण राजा कौरव्यो धृतराष्ट्रोऽभिषेचितः ।
(cf. 17) { धनुर्वेदेऽश्वपृष्ठे च गदायुद्धेऽसिचर्मणि ।
तथैव गजशिक्षायामस्त्रेषु विविधेषु च ।
अर्थधर्मप्रधानासु विद्यासु विविधासु च । [5]
गतः पारं यदा पाण्डुस्तदा सेनापतिः कृतः ।
(23) { धृतराष्ट्रस्त्वचक्षुष्ट्वाद्राज्यं न प्रत्यपद्यत ।
अवरत्वाच्च विदुरः पाण्डुश्चासीन्महीपतिः ।
अमात्यो मनुजेन्द्रस्य बाल एव यशस्विनः ।
प्रणेता सर्वधर्माणां भीष्मेण विदुरः कृतः । [10]
सर्वशास्त्रार्थतत्त्वज्ञो बुद्धिमेधापटुर्युवा ।
भावेनागमयुक्तेन सर्वं वेदयते जगत् ।
(21) { प्रनष्टः शंतनोर्वंशः भीष्मेण पुनरुद्धृतः ।
ततो निर्वचनं सत्सु तदिदं परिपठ्यते ।
(22) { कौसल्या वीरसूः स्त्रीणां देशानां कुरुजाङ्गलम् । [15]
भीष्मो धर्मभृतां श्रेष्ठः पुराणां गजसाह्वयम् ।
ते त्रयः कालयोगेन कुमारा जनमेजय ।
अवर्धन्त महात्मानो नन्दयन्तः सुहृज्जनम् ।

[(L. 1) $T_1$ $G_{1.2.6}$ युक्ता, and पारगाः. — (L. 2) $T_1$ $G_{1.2}$ धार्तरा°. — (L. 4) $T_1$ $G_{1.2}$ °यां नीतिशास्त्रे च पारगाः (=$17^{d}$). — (L. 7) T $M_5$ °क्षुस्त्वा°; $G_{1.2}$ °क्षुत्वा°; $G_{3-6}$ °क्षुष्मान्रा°. — (L. 8) $G_2$ M करणत्वाच्च (cf. $23^{c}$); $G_6$ रक्षाकरश्च. — (L. 11) $D_4$ °मेधायुतो; $T_1$ $G_{1.2}$ °धापरो; $G_3$ °धावपुर्. — (L. 13) $T_1$ समीक्ष्य (for भीष्मे°).]

16 $^{a}$) $G_3$ संस्कार-. $T_2$ सुकृतास् (for संस्कृ°). $Ś_1$ °तास्तत्र. S (except $M_3$) वै (for तु). — $^{b}$) S वृत्तै($T_1$ $G_{1.2}$ $M_3$ (*sup. lin.*) व्रतै)रध्ययनेन च. — $^{c}$) $G_{3.6}$ समव्या°. — $^{d}$) S (except $T_1$ $G_1$ $M_5$) यौवने.

17 In S this st. is repeated (cf. 1106*). — $^{a}$) $Ñ_{1.2}$ °दे च पृष्ठेषु; $Ñ_3$ $G_{1.3.5}$ °दे च पृ°; $D_a$ $D_n$ $D_1$ °दे च वेदे च; $D_2$ °देश्वपृष्ठेषु. — $^{b}$) $G_6$ तथा युद्धे. — $^{d}$) $K_0$ $B_1$ $D_n$ T G (except $G_6$) $M_{6.8}$ °शास्त्रेषु. $M_{3.7}$ अस्त्रेषु विविधेषु च.

18 $K_0$ om. 18. — $^{b}$) $K_{3.4}$ नानाशास्त्रेषु; $G_6$ °शिल्पासु. $Ś_1$ चाभितः; $K_1$ वा°; $Ñ_{1.2}$ B $D_a$ $D_{2.4}$ वा विभो; $Ñ_3$ °वि°; $D_n$ $D_{1.5}$ बोधिताः; S चान्विताः. — $^{c}$) $T_2$ G (except $G_6$) °कुशलाः. — $^{d}$) $Ś_1$ $K_{1.2.4}$ $Ñ_{1.2}$ B (except $B_1$) $D_n$ $D_{1.2.4.5}$ $T_2$ $G_{1.2.4.5}$ Arjp °निश्चयाः; $D_{a1}$ $T_1$ °विश्रमः. $G_3$ सर्वप्रकृतविश्रमाः.

19 S transp. $19^{ab}$ and $19^{cd}$. — $^{b}$) $Ñ_{2.3}$ $B_{1.5}$ D (except $D_5$) $M_{6-8}$ नरेषु. $K_4$ $B_{3.6}$ °भ्योप्यधि°; $G_{3.6}$ $M_5$ °भ्यो ह्यधि°. — $^{c}$) $Ś_1$ अत्यर्थं; $K_{0.3.4}$ अत्यंत; Ñ B D अन्येभ्यो; S अतीव. $Ś_1$ °वांश्चासी°. — $^{d}$) $B_1$ $D_{2.4}$ °ष्ट्रो महामतिः; S °ष्ट्रोंबिकासुतः.

20 $^{b}$) S प्राणी ($G_3$ °णिः) (for कश्चिद्). — $^{c}$) $K_0$ तदा; Ñ B D तथा (for ततो). S °नित्यो हि धर्मस्य ($G_6$ °ज्ञ). — $^{d}$) $D_2$ धर्मेषु. S बुध्या चैव ($G_1$ धर्म-) गतिं गतः. Cd mentions परमं (=पारं). — After 20, $D_4$ (marg. *sec. m.*) ins. lines 6, 9–11 of 1106* (cf. v. l. 15). — S ins. after 20: $D_4$ (marg. *sec. m.*), after 23:

1107* अथ शुश्राव विप्रेभ्यो यादवस्य महीपतेः ।
रूपयौवनसंपन्नां सुतां सागरगासुतः ।
सुबलस्य च कल्याणीं गान्धाराधिपतेः सुताम् ।

धर्मनित्यस्ततो राजन्धर्मे च परमं गतः ॥ २०
प्रनष्टं शंतनोर्वंशं समीक्ष्य पुनरुद्धृतम् ।
ततो निर्वचनं लोके सर्वराष्ट्रेष्ववर्तत ॥ २१
वीरसूनां काशिसुते देशानां कुरुजाङ्गलम् ।
सर्वधर्मविदां भीष्मः पुराणां गजसाह्वयम् ॥ २२
धृतराष्ट्रस्त्वचक्षुष्ट्वाद्राज्यं न प्रत्यपद्यत ।
करणत्वाच्च विदुरः पाण्डुरासीन्महीपतिः ॥ २३

इति श्रीमहाभारते आदिपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

## १०३

भीष्म उवाच ।
गुणैः समुदितं सम्यगिदं नः प्रथितं कुलम् ।
अत्यन्यान्पृथिवीपालान्पृथिव्यामधिराज्यभाक् ॥ १
रक्षितं राजभिः पूर्वैर्धर्मविद्भिर्महात्मभिः ।
नोत्सादमगमच्चेदं कदाचिदिह नः कुलम् ॥ २
मया च सत्यवत्या च कृष्णेन च महात्मना ।
समवस्थापितं भूयो युष्मासु कुलतन्तुषु ॥ ३
वर्धते तदिदं पुत्र कुलं सागरवद्यथा ।

C. 1. 4366
B. 1. 110. 4
K. 1. 119. 4

सुतां च मद्रराजस्य रूपेणाप्रतिमां भुवि ।
[ (L. 1) Cf. 1. 103. 9. G6 M3.5 देवकस्य (for याद°). ]
After the above, D4 reads 1108*.

21 For S cf. v. l. 15. — a) Da भारतं (for शंतनोर्). — d) Ś1 सर्वलोकेषु.

22 For S cf. v. l. 15. — a) K1 वनितानां (for वीर°). — b) Some MSS. °जंगलं (cf. v. l. 1. 102. 1). — c) K0.3 °धर्मभृतां.

23 For S cf. v. l. 15. — a) K0 °चक्षुष्मान्. — b) K4 transp. राज्यं and न. — c) K4 B Arjp (hypermetric) पारशवत्वाच्च (B1 °त्वाद्); Ñ1.2 Dn D1.4 पारसवत्वाद् (D4 °त्वाच्च); D2 दासवत्वा°; Nilp ("*apapāṭha*") Cd as in text. — d) K0.4 D5 पांडुश्चासी°; K1-3 Ñ3 Da पांडुस्त्वासी°. Ñ2 B Dn D1.2.4 राजा पांडुर्बभूव ह. — After 23, D4 (marg. *sec. m.*) ins. 1107*, which is followed by 1108* below. — K4 Dn D1 ins. after 23: Da, before the first st. of the foll. adhy.: D4, after 1107*:

1108* कदाचिदथ गाङ्गेयः सर्वनीतिविशारदः ।
विदुरं धर्मतत्त्वज्ञं वाक्यमाह यथोचितम् ।

[ Before line 1, Da ins. वैशं°. — (L. 1) K4 °नीतिविदां वरं; Dn D1.4 °तिमतां वरः. — (L. 2) D4 तत्त्वधर्मज्ञं. ]
— D2 ins. after 23:

1109* ततः काले बहुतिथे भीष्मो विदुरमब्रवीत् ।

Colophon om. in S. — *Sub-parvan:* K0.2-4 Ñ1.2 B D2.4.5 संभव. — *Adhy. name:* Ś1 K1 प्रकृतिप्रसादः; K3 कुरुराज्यानुवर्णनं; Ñ1.2 पांडुराज्याभिषेकः. — *Adhy. no.* (figures, words or both): K0 Da1 105; B1 Dn1 D4 107; Dn2 108. — *S'loka no.:* Dn 26; M3 22. — *Aggregate s'loka no.:* Dn2 4363.

### 103

1 Before 1, Da ins. 1108* (cf. v. l. 1. 102. 23). — Ś1 K1 S om. उवाच (T1 om. the ref.). — a) G1.2 समुदितैर्. K0 Ñ1.3 G6 M5 सर्वम्; Ñ2 B D2.4.5 सर्वैर्; Da सौम्य; T G M3.6-8 नित्यम् (for सम्यग्). — After 1ab, D1 reads 3a-4b. — G4 (hapl.) om. 1c-2d. — c) Ś1 (*sup. lin.* as in text) अत्रत्यान्; Ñ1 अभ्यन्यान्; Ñ2 अनन्यान्; D2 T1 अप्यन्यान्. — d) T1 °मादिराजभा°; T2 °मपि भारत; G2.3.5 M (except M5) °धि(M3 *sup. lin.* °पि)राजभा°; G6 °राजकान्.

2 G4 om. 2 (cf. v. l. 1). — a) Ñ3 Da2 Dn D1 पूर्वं. — b) G3.5 श्रीमद्भिश्च; M (except M5) धर्मनित्यैर्. — c) Ś1 नोत्सेधम्; K0.1.4 Ñ3 B5 Da1 नोच्छेद°; K2 Da3 Dn D1 नोत्सेद°. Ś1 K (except K4) D5 अधिगच्छेत; T1 अगमच्चैनं; G3 °मच्चैव. — d) Ś1 K1 °चिदपि; S (G4 om.) कथंचिदि°.

3 For sequence of D1 cf. v. l. 1. — a) T1 मया सत्ये च कृष्णेन. — b) K1 व्यासेन (for कृष्णे°). — c) G2.4.6 संस्थापितं कुलं भू°.

4 For sequence of D1 cf. v. l. 1. — a) K0-2 B3 D5 M6-8 वर्धेत. B1m भूयः (for पुत्र). Da Dn D1.4 तच्चैतद्वर्धते भूयः (D4 पुत्र). — b) G3 मया (for कुलं). — d) D (except D2.4.5) न संशयः (for विशे°).

C. 1. 4366
B. 1. 110. 4
K. 1. 119. 4

तथा मया विधातव्यं त्वया चैव विशेषतः ॥ ४
श्रूयते यादवी कन्या *अनुरूपा कुलस्य नः ।
सुबलस्यात्मजा चैव तथा मद्रेश्वरस्य च ॥ ५
कुलीना रूपवत्यश्च नाथवत्यश्च सर्वशः ।
उचिताश्चैव संबन्धे तेऽस्माकं क्षत्रियर्षभाः ॥ ६
मन्ये वरयितव्यास्ता इत्यहं धीमतां वर ।
संतानार्थं कुलस्यास्य यद्वा विदुर मन्यसे ॥ ७

विदुर उवाच ।

भवान्पिता भवान्माता भवान्नः परमो गुरुः ।
तस्मात्स्वयं कुलस्यास्य विचार्य कुरु यद्धितम् ॥ ८

वैशंपायन उवाच ।

अथ शुश्राव विप्रेभ्यो गान्धारीं सुबलात्मजाम् ।
आराध्य वरदं देवं भगनेत्रहरं हरम् ।
गान्धारी किल पुत्राणां शतं लेभे वरं शुभा ॥ ९
इति श्रुत्वा च तत्त्वेन भीष्मः कुरुपितामहः ।
ततो गान्धारराजस्य प्रेषयामास भारत ॥ १०
अचक्षुरिति तत्रासीत्सुबलस्य विचारणा ।
कुलं ख्यातिं च वृत्तं च बुद्ध्या तु प्रसमीक्ष्य सः ।
ददौ तां धृतराष्ट्राय गान्धारीं धर्मचारिणीम् ॥ ११
गान्धारी त्वपि शुश्राव धृतराष्ट्रमचक्षुषम् ।
आत्मानं दित्सितं चास्मै पित्रा मात्रा च भारत ॥ १२
ततः सा पट्टमादाय कृत्वा बहुगुणं शुभा ।
बबन्ध नेत्रे स्वे राजन्पतिव्रतपरायणा ।
नात्यश्नीयां पतिमहमित्येवं कृतनिश्चया ॥ १३
ततो गान्धारराजस्य पुत्रः शकुनिरभ्ययात् ।
स्वसारं परया लक्ष्म्या युक्तामादाय कौरवान् ॥ १४
दत्त्वा स भगिनीं वीरो यथार्हं च परिच्छदम् ।
पुनरायात्स्वनगरं भीष्मेण प्रतिपूजितः ॥ १५

---

5 b) Ś1 K1 सानु°; K0 स्वनु°; K2–4 Ñ B Da Dn D1.4 T G3.4.5 M5 स्वनु°; D2 G1.2.6 M3.6–8 ह्यनु°; D5 स्वानु°. — d) Ñ2 स्वसा (for तथा).

6 b) Dn D1 ताः कन्याः पुत्र स°. — d) T G2–5 M (except M5) क्षत्रियोत्तमाः (G2 °म); G1.6 °र्षभ.

7 b) G3 वदतां (for धीम°). Ñ2 B Da D2.4 इति मे (Ñ2 इत्यहं) धीयते मतिः. — c) T G1.2.4.5 समानास्ताः (T1 °स्तु); G3.6 M5 समानार्थाः.

8 K1 S om. उवाच (T1 om. the ref.). — c) M6–8 तस्मात्त्वं च.

9 Ś1 K1 S om. उवाच. — d) D2 त्रिनेत्रं च हरं. D2 T1 परं; G2 हरिं.

10 a) Ś1 K1–3 Ñ3 B1 Dn D1.5 शुश्राव (for श्रुत्वा च). G1 वचस्त्वेतत् (for च त°). — c) K0.4 दूतं (for ततो). K0 °राजाय. — After 10c (which = 14a), G6 runs on to 14b–14c and then returns to 10d, repeating 14b and 14c in their proper place. — d) Ñ1.3 S कौरवः (for भार°).

11 a) S तस्यासी°. — c) Ś1 transp. ख्यातिं and वृत्तं. B1.3 D2.5 G1.4 वृत्तिं; T1 °द्धं; T2 G2.3.5.6 M °द्धिं. D4 वृत्तानां. — d) K1 D2 बुद्धिं. Ś1 K D2 T1 च (for तु). K0 समवीक्ष्य; K4 समवे°. S च (for सः).

12 a) K4 किल; Ñ B6 Da Dn D1 S त्वथ; D2 त्वभि°; D5 चापि. — b) T G3.5.6 M6–8 त्वच° (for अच°). — c) Ñ1 ईप्सितं; T1 G1 दित्सतां; T2 G2.4–6 M3.5 °तां; G3 °तः; M6–8 निंदितां; Cd as in text. K2 B6 G1 तस्मै; D3 चैव; T G2–5 M तस्य. — d) S पितुर्मातुश्च कौरव.

13 a) A few MSS. पटमा°. G6 M8 (*sup. lin.* as in text).5 °मानाय्य. — b) Ś1 K (except K4) Ñ3 D (except D2) तदा (for शुभा). — c) B3 सा (for स्वे). T G2.4.5 M6–8 न पश्यामीति भर्तारं; G1.6 M3.5 न पश्यतीति भर्ता मे; G3 भर्तारं न प्रपश्यामि. — d) = 17b. S वेष्टयामास चक्षुषी. — e) Ś1 नात्यधीयं; K0 Ñ1 नान्यं श्रये; K1 नान्यदीयं; K3 Dn D1.5 नाभ्यसूयां; Ñ2 B1.3.5 Da2 G4 नात्यती°; Ñ3 नाभ्यक्षी°; B1 m.6 नाभ्यती°; Da1 G1 नात्यनी°; D2 नान्यती°; D4 नाभ्यभू°; G2 नान्यश्रि°; G3 corrupt.

14 a) = 10c. — b) D4 S सुतः (for पुत्रः). S °निराव्रजत्. — c) Dn D1 वयसा (for पर°). — d) S कौरव (M3 भारत). — After 14, N (except K4) ins.:

1110* तां तदा धृतराष्ट्राय ददौ परमसत्कृताम् ।
भीष्मस्यानुमते चैव विवाहं समकारयत् ।

[(L. 1) Ś1 K1 Ñ3 तथा; Ñ1 B (except B1) D2.4 ततो.]
S (except T1), on the other hand, ins. after 14:

1111* ततो विवाहं चक्रेऽस्या नक्षत्रे सर्वसंमते ।
सौबलस्तु महाराजा शकुनिः प्रियदर्शनः ।

15 T1 om. 15–16. — a) K3 तु; D2 T2 G M स्व

गान्धार्यपि वरारोहा शीलाचारविचेष्टितैः । वृत्तेनाराध्य तान्सर्वान्पतिव्रतपरायणा ।
तुष्टिं कुरूणां सर्वेषां जनयामास भारत ॥ १६ वाचापि पुरुषानन्यान्सुव्रता नान्वकीर्तयत् ॥ १७

इति श्रीमहाभारते आदिपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

## १०४

वैशंपायन उवाच ।
शूरो नाम यदुश्रेष्ठो वसुदेवपिताभवत् ।
तस्य कन्या पृथा नाम रूपेणासदृशी भुवि ॥ १
पैतृष्वसेयाय स तामनपत्याय वीर्यवान् ।
अग्र्यमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वीर्यवान् ॥ २
अग्रजातेति तां कन्यामग्र्यानुग्रहकाङ्क्षिणे ।

C. 1. 4363
B. 1. 111. 3
K. 1. 120. 3

---

(G2. 3 च) (for स). G6 तत्र (for वीरो). — b) K3 स- (for च). — M6-8 om. 15e-16d. — c) S (T1 M6-8 om.) °रागात्. G3 स (for स्व-). — d) Dn3 S (T1 M6-8 om.) परि°.

16 T1 M6-8 om. 16 (cf. v. l. 15). — c) Ñ1. 3 गुरूणां.

17 S (T1 om. line 1; M6-8 om. lines 1–2) ins. before 17 (G5, om. lines 2–4, at the end of the adhy.):

1112* गान्धारी सा पतिं दृष्ट्वा प्रज्ञाचक्षुषमीश्वरम् ।
अतिचाराद्भृशं भीता भर्तुः सा समचिन्तयत् ।
सा दृष्टिविनिवृत्तापि भर्तुश्च समतां ययौ ।
न हि सूक्ष्मेऽप्यतीचारे भर्तुः सा ववृते तदा ।

[ (L. 1) G2 भृशं (for पतिं). — After line 1, G5 ins. lines 1–2, 6–8 of 1113*. — (L. 2) G1 व्यभिचारा°. — (L. 3) M6-8 पुनराविनि°. T1 G6 M (except M3) इयात् (for ययौ). — (L. 4) M6-8 नाति- (for न हि). M6-8 सदा. ]

— G5 om. 17. — a) Ñ3 तोपयामास तान्स°. — b) = 13d. Ś1 K0. 1. 3. 4 कुरून्पति(K4 °न्भर्तृ)परा°; K2 Dn1. n3 D1 गुरून्पतिपरा°; G3 M5 पत्नीव्रत°. — d) S (G5 om.) स्वजनान् (for सुव्र°). T2 G1 न व्यकी°; G2. 3 नावकी°. — D4 (marg. *sec. m.*) S ins. after 17 (G5, om. lines 3–5, after 1112*):

1113* तस्याः सहोदराः कन्याः पुनरेव ददौ दश ।
गान्धारराजः सुबलो भीष्मेण वरितस्तदा ।
सत्यव्रतां सत्यसेनां सुदेष्णां च सुसंहिताम् ।
तेजःश्रवां सुश्रवां च तथैव निकृतिं शुभाम् ।
शंभुवां च दशार्णां च गान्धारीर्दश विश्रुताः । [5]
एकाह्ना प्रतिजग्राह धृतराष्ट्रो जनेश्वरः ।
ततः शांतनवो भीष्मो धनुष्क्रीतास्ततस्ततः ।
अददाद्धृतराष्ट्राय राजपुत्रीः परः शतम् ।

[ (L. 1) M6-8 शुभाः (for दश). — (L. 2) M3. 5 सहितस्तदा. — (L. 3) D4 G6 M6-8 सुपेष्णां. T1 G2 M3. 5 चार्थसंहि°; T2 G3 चार्थसं°; G1 missing; G4 चाभिसंज्ञितां. — (L. 4) M तथोर्वीं. D4 G6 M तथा (for शुभाम्). — (L. 5) G1 शंभुवर्णां; G3 शंभूणां च. M6-8 शंभूणां चैव दाशार्णां. — (L. 6) D4 G6 M6-8 चोपयेमे ताः (for प्रति°). — (L. 7) G3 धनुःप्रोतस्त°. — (L. 8) D4 M6-8 आवहन्; G3 आनयन्; G4 M8 आवहत्; G6 आहरत्. T2 G2. 4 M3. 5 °राष्ट्रस्य. D4 परं शतं; G3 शतं परं. ]

Colophon om. in D1. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* K0. 2. 3 Ñ1. 2 B5 D5 T1 संभव. — *Adhy. name:* Ś1 K1 B1. 3. 6 Da D2. 4. 5 गांधारी(Da °र्या)विवाहः; K3. 4 Ñ1. 2 धृतराष्ट्रविवाहः (K4 °ष्ट्रवैवाहिकः). — *Adhy. no.* (figures, words or both): K0 Da1 106; B1 Dn D4 108 (Dn3 109); T1 105; T2 55; G M 56. — *S'loka no.:* Ñ2 20; Dn 19; M8 58. — *Aggregate s'loka no.:* Dn3 4382.

## 104

☞ This adhy. (with some variations and omissions) forms passage No. 43 of App. I, a passage interpolated in some N MSS. after 1. 61. 88. It is worth noting that that passage agrees closest with the constituted text and is alike free from the interpolations of the vulgate text and of the Southern recension.

1 Ś1 K1 D5 S om. उवाच. — d) Ś1 K3 Ñ2 D (except D2. 4. 5) T2 °णाप्रतिमा; Ñ1 G6 °णासदृशा.

2 a) K0. 2 D2 °ष्वस्रेयाय; K1 °ष्वसीयाय; K3 B5 पितृस्वस्रे°; K4 Da1 Dn3 पितृष्वस्रे°; Ñ1. 2 B1. 3 पितृ°; Ñ3

C. 1. 4383
B. 1. 111. 3
K. 1. 120. 3

प्रददौ कुन्तिभोजाय सखा सख्ये महात्मने ॥ ३
सा नियुक्ता पितुर्गेहे देवतातिथिपूजने ।
उग्रं पर्यचरद्घोरं ब्राह्मणं संशितव्रतम् ॥ ४
निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः ।
तमुग्रं संशितात्मानं सर्वयत्नैरतोषयत् ॥ ५
तस्यै स प्रददौ मन्त्रमापद्धर्मान्ववेक्षया ।
अभिचाराभिसंयुक्तमब्रवीच्चैव तां मुनिः ॥ ६
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
तस्य तस्य प्रसादेन पुत्रस्तव भविष्यति ॥ ७
तथोक्ता सा तु विप्रेण तेन कौतूहलात्तदा ।
कन्या सती देवमर्कमाजुहाव यशस्विनी ॥ ८
सा ददर्श तमायान्तं भास्करं लोकभावनम् ।
विस्मिता चानवद्याङ्गी दृष्ट्वा तन्महदद्भुतम् ॥ ९
प्रकाशकर्मा तपनः तस्यां गर्भं दधौ ततः ।
अजीजनत्ततो वीरं सर्वशस्त्रभृतां वरम् ।
आमुक्तकवचः श्रीमान्देवगर्भः श्रियावृतः ॥ १०
सहजं कवचं बिभ्रत्कुण्डलोद्द्योतिताननः ।
अजायत सुतः कर्णः सर्वलोकेषु विश्रुतः ॥ ११

---

°ष्वसर्याय; B6 °स्वस्रे°; Dn1. n2 D5 पितृष्वस्रीया°; D1.4 °ष्वस्रीया°. K4 Ñ2 B Da D2.4 सुतां; S पुनः (G6 M ततः). — b) S सोन(T2 G5 सेना)प°. B (except B6) D (except D5) भारत (for वीर्य°). — c) Ś1 K1 D4.5 G1 अग्र्या°; Ko.4 T G3 M अग्रम°; G2.4.6 उग्रायाग्रे; G5 उग्र°. — d) Ñ1.2 Dn2.n3 °पत्यं स; G (except G3) °पत्यं च. K2 धर्मवित्; K4 भारत; Ñ2 Da भूमिपः; Dn D1 सत्यवाक्.

3 a) N अग्रजामथ. Ś1 Ko–2 D5 transp. तां and कन्यां. — b) Ś1 K1 अन्यानु°; Ñ B5.6 अग्रानु°; B1 (m as in text) Da Dn D1 शूरेनु°; D2 भार्यानु°; S अग्रा(T G1 उग्रा-; G3.4.5 उग्रो)नुग्रहकाम्यया (G6 M5 °कांक्षया). — cd) S अददात्कुंतिभोजाय शूरो गोपतये सुतां (G3 शुभां).

4 a) Ñ Dn D1 transp. सा and नियु°. Ko.4 पितृगृहे. — b) Ś1 °भोजने; Ko Dn D1 ब्राह्मणा°; S ब्राह्मणातिथिभोजने. — c) N तत्र (for घोरं). — d) Ś1 संश्रित°; K2–4 B6 Dn D2.4 शंसित°.

5 a) T1 निगूढस्त्रि°; Cd as in text. — b) S (except M6–8) दुर्वासा इति यं विदुः. — c) T2 G2.4.5 मुनिं (for उग्रं). A few MSS. शंसिता°. — d) Ś1 K1 G1 सर्वरत्नै°. — After 5, G (except G3.6) ins.:

1114* दध्याज्यकादिभिर्नित्यं व्यञ्जनैः प्रत्यहं शुभा ।
सहस्रसंख्यैर्योगीन्द्रं समुपाचरदुत्तमा ।
दुर्वासा वत्सरस्यान्ते ददौ मन्त्रमनुत्तमम् ।

6 a) T2 G3.6 M transp. तस्यै and स. T1 G3 (*sup. lin.*) स तस्यै (for तस्यै स). G6 धर्मं (for मन्त्रं). G1.2.4.5 यशस्विन्यै पृथायैवं (G1 °व; G4 स). — b) Ś1 K1 आत्मधर्मान्व°; K2.4 °मांव्यपेक्ष°; G1 ह्याप°; G3 M3.5 °मोन्वपेक्ष°. — c) D4 °चारसमायु°; B3 G3 °युक्तां. G3 मंत्रविच्चैव (for अब्र°). — After 6, G1.2.6 M6–8 ins.:

1115* अभिचारायुतं तस्या आचष्ट भगवानृषिः ।
[M6–8 °चारसुतां तस्यामब्रवीद्भग°.]

7 a) Da देवमनेन त्वं; G1 त्वमेतेन शुभे. — b) T1 °णाराधयिष्यसि. — Da2 om. 7cd. — c) Ś1 प्रसादात्तु; Ko °सादात्ते; Ñ1 Dn D1 °भावेण; Da1 °दानेन; G6 M5 °सादाद्धि. — d) Ko राजपुत्रो; Ñ1.3 Dn D1 तव पुत्रो; Ñ2 राज्ञि पुत्रो. S (except T1) जनिष्यते.

8 ab) Ś1 transp. सा तु and तेन. S मुनिना (for विप्रे°). Ñ1.3 T G M3.5 तस्य (G2 मंत्र-); Ñ2 D (except D2.4.5) कुंती; M6–8 तच्च (for तेन). Ñ1.2 D (except D2.4.5) °हलान्विता. — After 8ab, G1.2 ins.:

1116* रवेस्तस्य परीक्षार्थं कुन्ती कन्यापि भास्करम् ।

— After 8, D4 (marg. *sec. m.*) S ins.:

1117* ततो घनान्तरं कृत्वा स्वमार्गं तपनस्तदा ।
उपतस्थे स तां कन्यां पृथां पृथुललोचनाम् ।

[(L. 1) T1 G1.4.5 गत्वा; G2 भित्वा. G4 °मार्गात्. — After line 1, G1.2 ins.:

1118* अवतीर्य स्वमार्गाच्च दिव्यमूर्तिधरः स्वयम् ।

— (L. 2) G3 °स्थे पृथां कन्यां स तां पृ°.]

9 a) K2 S (except G6) समा°. — b) S विस्मयात् (for भास्क°). Ś1 K1 D5 °पावनं. — c) M3.5 चाभवत्कन्या. — d) Ś1 K1–3 transp. दृष्ट्वा and तत्. — After 9, N ins. a passage of 16 lines given in App. I (No. 58); while S ins. another passage of 21 lines given in the same App. (No. 59), D4 (marg. *sec. m.*) ins. the latter passage after line 15 of the former.

10 a) Dn D1 °कर्ता; Cd as in text. — b) S (except G6 M3.5) पुनः (for ततः). N संबभूव तया सह. — cd) T2 G2.4.5 देवी (for वीरं). N तत्र वीरः समभव-

प्रादाच्च तस्याः कन्यात्वं पुनः स परमद्युतिः ।
दत्त्वा च ददतां श्रेष्ठो दिवमाचक्रमे ततः ॥ १२

गूहमानापचारं तं बन्धुपक्षभयात्तदा ।
उत्ससर्ज जले कुन्ती तं कुमारं सलक्षणम् ॥ १३

तमुत्सृष्टं तदा गर्भं राधाभर्ता महायशाः ।
पुत्रत्वे कल्पयामास सभार्यः सूतनन्दनः ॥ १४

नामधेयं च चक्राते तस्य बालस्य तावुभौ ।
वसुना सह जातोऽयं वसुषेणो भवत्विति ॥ १५

स वर्धमानो बलवान्सर्वास्त्रेषूद्यतोऽभवत् ।
आ पृष्ठतापादादित्यमुपतस्थे स वीर्यवान् ॥ १६

यस्मिन्काले जपन्नास्ते स वीरः सत्यसंगरः ।
नादेयं ब्राह्मणेष्वासीत्तस्मिन्काले महात्मनः ॥ १७

तमिन्द्रो ब्राह्मणो भूत्वा भिक्षार्थं भूतभावनः ।
कुण्डले प्रार्थयामास कवचं च महाद्युतिः ॥ १८

उत्कृत्य विमनाः स्वाङ्गात्कवचं रुधिरस्रवम् ।
कर्णस्तु कुण्डले छित्त्वा प्रायच्छत्तस्य कृताञ्जलिः ॥ १९ C. 1. 4408 B. 1. 111. 28 K. 1. 120. 47

---

रत्नवं° वरः. — e) K3 आबद्ध°. Ko.4 बालो. — f) Ko.4 D4 श्रियान्वितः. K3 देवराजश्रिया°; S कुंडलाभ्यां समावृतः.

11 $^{ab}$) = 1. 57. 82$^{cd}$. Ś1 कुंडलं (for कव°). B1 D5 कुंडलयो°. — c) G1.6 M3.5 सोजा°. Ñ B (except B6) D2.4 T1 ततो; T2 G M तदा (for सुतः). S वीरः (for कर्णः). — d) Ñ2 B D2.4 °लोकमहारथः. — S ins. after 11: D4 (marg. *sec. m.*), after 13$^{ab}$:

1119* मञ्जूषां रत्नसंपूर्णां कर्णनामाभिसंज्ञिताम् ।

[ D4 G1 °नाम्नाभि°; T1 °नाम्ना समावृतं; T2 G3.4 °नाम्ना समाश्रितां; G2 कर्णबालाभि°; G5 °संश्रितां (*sup. lin.* कर्णबालसमाश्रितां). ]

12 S transp. 12 and 13. — a) Ñ1.2 B1.3.5 D तस्यै. K2 B6 (by transp.) कन्यात्वं तस्याः (B6 तस्यै). — b) B D2.4 तदै(B1.6 °दे)व भगवान्रविः. — c) Ñ1.3 D5 वदतां; B5.6 Da Dn D1.2 M5 तपतां; T1 G1.2.4–6 M6–8 वरद; T2 G3 M3 परम-. — d) Ñ1.3 S पुनः; B D2.4 प्रभुः (for ततः). — After 12, N ins.:

1120* दृष्ट्वा कुमारं जातं सा वार्ष्णेयी दीनमानसा ।
एकाग्रा चिन्तयामास किं कृत्वा सुकृतं भवेत् ।

[ (L. 1) Ś1 देवी सा; Da तं जातं. Ś1 देवमान°; Ñ1 हतमान°. — (L. 2) Ñ B1.5 Dn2 D5 एकाग्रं. Ñ1 भूत्वा. ]

13 S transp. 12 and 13. — a) Ś1 K Dn D1.5 सा; Ñ3 D2 तु (for तं). G1.2.4.5 °माना कुमारं तं; G3 °मानां परं तस्य. — After 13$^{ab}$, D4 (marg. *sec. m.*) ins. 1119*. — $^{cd}$) G3 नदीमध्ये (for जले कुन्ती). N °जं कुमारं तं जले कुंती महाबलं.

14 a) Ś1 Ko.1 महा-; Ñ1.2 B D (except Da D5) जले (for तदा). — c) Ś1 K1 कारयामास.

15 a) B (except B1) D4 नामास्य चेदं चक्राते (D4 कुर्वाते); G3 °धेयं चक्रतुस्ते. — b) Ñ2 B D2.4 दंपती तावुभौ (B5 transp. दंप° and तावु°) शिशोः. — $^{cd}$) S समावृ(M5 °हृ)तोयं वसुना वसुषेणेति नाम(T1 विश्रु)तः (G3 समाप्य तस्य सुहृदो वसुनामेति नामतः).

16 After 16$^{ab}$, Ñ1.3 ins.:

1121* लोके चैव हि विख्यातः सर्वशस्त्रभृतां वरः ।

— c) K3 °ष्ठतोयादा°; K4 D5 आराधयत्तदा°; Ñ1.3 उपस्पृश्य सदा°; T1 अपृष्टतामथादि°; G1.6 °पाद्यादि°; G3 आपृष्टं तावदा°; G2.4.5 स पृष्ठ°; M6–8 °तापावादि°; Cd as in text. — d) Ś1 K1–3 Ñ3 च (for स). D (except D2.4.5) उपातिष्ठत वी°; S °स्थे कृतांजलिः.

17 a) T2 G5 अस्मिन् (for यस्मिन्). N तस्मिन्काले तु (K च) जपतः. — b) T2 G2.5 स धीरः; G1 सवितुः. N तस्य वीरस्य धीमतः. — c) T G2.4.5 M3.6–8 °णेभ्यो हि; G1.6 M5 °णायासीत्; G3 corrupt. — d) Ś1 K1.4 किंचिद्वस्तु; Ko.2.3 Da Dn किंचिद्वसु; Ñ1.2 B D2.4 अपि प्राणान्; Ñ3 वसु किंचिन्; D6 प्राणानपि (for तस्मिन्काले). Ś1 K Ñ1.3 Da D2.4 महीपते; Dn महीतले (for महा°). D1 किंचिद्वसुमतीतले. — After 17, D4 (marg. *sec. m.*).5 S ins. a passage of 14 lines given in App. I (No. 60).

18 a) N (except Dn D1) शक्रो (for इन्द्रो). — b) Da1 Dn D1 भिक्षार्थी. N समुपागमत् (K3 Ñ2 B1.3.6 D4 °गतः); T2 हरिवाहनः. — c) N कवचं (for कुण्डले). — d) N फाल्गुनस्य हिते (Ñ1 प्रिये) रतः. — After 18, M3.5 ins.:

1122* एवमुक्तस्तदा कर्णो ब्राह्मणेन महात्मनः ।;

while D5 ins.:

1123* कर्णः[ तु ]कुण्डले भित्त्वा प्रायच्छत्तस्य कृताञ्जलिः ।

(=(var.) 19$^{cd}$), followed by 1125*.

19 Before 19, D5 ins. वैशं°. — a) N स्व(Ñ3 स)शरीरात्समुत्कृत्य (K4 Ñ1 °मुत्सृज्य). — b) N स्वं (Ś1 Ko–3 Ñ3 D5 तं; B3.6 स; Da2 च) निसर्गजं; M3(*sup. lin.*).6–8 रुधिरोक्षितं. — c) T1 M3.6–8 °णौ च; G3 °णेस्य; M °र्णाभ्यां. N विप्ररूपाय शक्राय; G6 कर्णपाशौ च द्वे छित्वा. — d) N ददौ कर्णः कृतां°. — After 19, N ins.:

C. 1. 4409
B. 1. 111. 20
K. 1. 120. 51

शक्तिं तस्मै ददौ शक्रः विस्मितो वाक्यमब्रवीत् ।
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।
यस्मै क्षेप्स्यसि रुष्टः सन्सोऽनया न भविष्यति ॥ २०
पुरा नाम तु तस्यासीद्वसुषेण इति श्रुतम् ।
ततो वैकर्तनः कर्णः कर्मणा तेन सोऽभवत् ॥ २१

इति श्रीमहाभारते आदिपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

## १०५

वैशंपायन उवाच ।
रूपसत्त्वगुणोपेता धर्मारामा महाव्रता ।
दुहिता कुन्तिभोजस्य कृते पित्रा स्वयंवरे ॥ १
सिंहदंष्ट्रं गजस्कन्धमृषभाक्षं महाबलम् ।

---

1124* प्रतिगृह्य तु देवेशस्तुष्टस्तेनास्य कर्मणा ।
[ $Ñ_3$ स प्रगृह्य तु. $Ś_1$ °वेशे हृष्ट°. ]

S ($G_6$ om. lines 3–5) ins. after 19: $D_4$ (marg. *sec. m.*), after 1124*: $D_5$, after 1123*:

1125* अहो साहसमित्याह मनसा वासवो हसन् ।
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
न तं पश्यामि यो ह्येतत्कर्म कर्ता भविष्यति ।
प्रीतोऽस्मि कर्मणा तेन वरं वृणु यदिच्छसि ।
कर्णः ।
इच्छामि भगवद्दत्तां शक्तिं शत्रुनिबर्हणीम् ।

[ (L. 1) $D_4$ °मित्येतत्; $D_5$ $G_6$ °मित्येवं; $G_1$ $M_{3.5}$ °मित्येव; $G_5$ °मित्युक्त्वा. $D_4$ सहसा. $D_4$ $M_{3.5}$ °वोहसत्. — (L. 3) $G_{1.2.4.5}$ $M_{6-8}$ को ह्ये°. — (L. 4) $T_2$ $G_4$ $M_5$ ब्रूहि (for वृणु). ]

$G_1$ cont.:

1126* अमोघामप्रतिहतां त्वत्तः सुरगणेश्वर ।

20 Before 20, $D_4$ (marg. *sec. m.*) S (except $G_6$) ins. वैशं°. — [a]) $G_1$ चास्मै. N ददौ शक्तिं सुरपतिर् ($K_4$ B $D_{2.4.5}$ by transp. °दौ सुरपतिः शक्तिं). — [b]) $Ś_1$ $K_{0-3}$ $Ñ_{1.3}$ Da Dn $D_1$ वाक्यं चेदमुवाच ह; $K_4$ B $D_{2.4.5}$ वचनं चेदमुक्तवान् ($B_3$ $D_5$ चैवमुक्त°; $B_5$ °दमब्रवीत्). — [c]) S देवदानवयक्षाणां. — [e]) $T_1$ क्षिप्स्यसि; $G_2$ छेत्तासि; $G_4$ क्षेप्ता°. $T_1$ त्वं; $M_5$ तु (for सन्). $Ś_1$ $K_{1.3}$ यं जेतुमिच्छसि रणे; $K_{0.2}$ $Ñ_{1.3}$ यं जेतुमिच्छसे कर्ण ($Ñ_{1.3}$ संख्ये); $K_4$ $Ñ_2$ B Dn $D_{1.2.4.5}$ यमेकं जेतु($K_4$ हंतु)मिच्छेथाः; Da जेतुमिच्छसि यं सख्ये. — [f]) $K_{0.2}$ स लोके; $D_2$ स एको; $T_1$ स नरो; $G_{2.4}$ स सद्यो (for सोऽनया). — After 20, $D_4$ (marg. *sec. m.*) S (except $G_6$) ins.:

1127* हत्वैकं समरे शत्रुं ततो मामागमिष्यति ।

$D_4$ (marg. *sec. m.*) cont.:

1128* इत्युक्त्वान्तर्दधे शक्रो वरं दत्त्वा तु तस्य वै ।

21 [a]) $G_{2.3}$ कृतस्य (for तु तस्य). N प्राङ् नाम तस्य प्रथितं ($Ñ_{1.2}$ B Dn $D_{1.2.4}$ कथितं). — [b]) N (except $Ś_1$ $K_1$) क्षितौ; $T_1$ $G_{2.4}$ $M_{6-8}$ श्रुतः; $T_2$ $G_{3.5.6}$ $M_{3.5}$ स्मृतः; $G_1$ श्रुतिः. — [c]) N कर्णो वैकर्तनश्चैव ($K_0$ °र्तनो नाम; $D_1$ °नस्तेन). — [d]) S स तस्मात्कारणादिति ($T_1$ °णादभूत्; $G_6$ °दितः; $M_5$ °दिह).

Colophon. — *Major parvan:* $T_2$ G M संभव° (for आदि°). — *Sub-parvan:* $Ś_1$m $K_{0-3}$ $Ñ_{1.2}$ B $Dn_1$ $D_{2.4.5}$ $T_1$ संभव. — *Adhy. name:* $K_{0.3}$ $M_{3.5}$ कर्णोत्पत्तिः; $K_4$ $Ñ_{1.2}$ $D_1$ कर्णसंभवः. — *Adhy. no.* (figures, words or both): $K_1$ 114; $B_1$ $Dn_1$ $D_4$ 109; $Da_1$ 107; $Dn_2$ 110; $T_1$ 106; $T_2$ 56; G M 57. — *S'loka no.:* Dn 31; $M_8$ 44. — *Aggregate s'loka no.:* $Dn_2$ 4413.

## 105

☞ MSS. $G_{3.5}$ are hereafter both written by a different hand.

1 $Ś_1$ $K_1$ $D_2$ S om. उवाच. $D_5$ सूत उवाच. — [a]) $K_4$ $Ñ_{1.2}$ B D (except Da) सत्त्वरूपगुणो°; S रूपशील($G_5$ अथ सर्व)गुणो°. — [b]) $Ñ_{1.3}$ धर्माचारा; Cd as in text. $Ś_1$ $K_1$ महाप्रभा. T $G_{1-4}$ $M_{3.6-8}$ धर्मकार्येषु चोद्य($T_1$ °दि)ता ($G_1$ योजिता; $G_3$ निश्चिता); $G_{5.6}$ $M_5$ धर्मकामा नरर्षभ. — [d]) $K_{1.4}$ Ñ B D पृथा पृथुललोचना; S कुंती($T_1$ $G_1$ $M_8$ °ति)राष्ट्रे स्वयंवरे ($G_{4.5}$ पतिंवरा). — After 1, $K_{1.4}$ Ñ B D ins.:

1129* तां तु तेजस्विनीं कन्यां रूपयौवनशालिनीम् ।
नावृण्वन्पार्थिवाः केचिदतीव स्त्रीगुणैर्युताम् ।
ततः सा कुन्तिभोजेन राज्ञाहूय नराधिपान् ।
पित्रा स्वयंवरे दत्ता दुहिता राजसत्तम ।
ततः सा रङ्गमध्यस्थं तेषां राज्ञां मनस्विनी । [5]

भूमिपालसहस्राणां मध्ये पाण्डुमविन्दत ॥ २
स तया कुन्तिभोजस्य दुहित्रा कुरुनन्दनः ।
युयुजेऽमितसौभाग्यः पौलोम्या मघवानिव ॥ ३
यात्वा देवव्रतेनापि मद्राणां पुटभेदनम् ।
विश्रुता त्रिषु लोकेषु माद्री मद्रपतेः सुता ॥ ४
सर्वराजसु विख्याता रूपेणासदृशी भुवि ।
पाण्डोरर्थे परिक्रीता धनेन महता तदा ।
विवाहं कारयामास भीष्मः पाण्डोर्महात्मनः ॥ ५

सिंहोरस्कं गजस्कन्धमृषभाक्षं मनस्विनम् ।
पाण्डुं दृष्ट्वा नरव्याघ्रं व्यसयन्त नरा भुवि ॥ ६
कृतोद्वाहस्ततः पाण्डुर्बलोत्साहसमन्वितः ।
जिगीषमाणो वसुधां ययौ शत्रूननेकशः ॥ ७
पूर्वमागस्कृतो गत्वा दशार्णाः समरे जिताः ।
पाण्डुना नरसिंहेन कौरवाणां यशोभृता ॥ ८
ततः सेनामुपादाय पाण्डुर्नानाविधध्वजाम् ।
प्रभूतहस्त्यश्वरथां पदातिगणसंकुलाम् ॥ ९

C. 1. 4450
B. 1. 113. 26
K. 1. 122. 26

---

ददर्श राजशार्दूलं पाण्डुं भरतसत्तमम् ।
[ (L. 2) K1 B1.3.5 Dn D1.4 व्यावृण्वन्. — (L. 4) B1(m as in text).3 स्वयंवरा. — (L. 5) Ñ1.3 राजमध्यस्था; D5 °मध्यस्था. K1 °ज्ञां महात्मनां. — (L. 6) Ñ1 °शार्दूल; Dn3 नृपशा°. ]

2 a) K0.2.3 G1 सिंहोरस्कं; K4 Ñ B D °दर्पं (D5 °दीर्घ-). K4 Ñ B D महोरस्कं; S महा(G1 वृष)स्कंधं. — b) K0.4 Ñ3 B3 D T1 G (except G2.6) वृषभाक्षं. S यश(G6 मन)स्विनं. — After $2^{ab}$, S ins.:

1130* पतिं वव्रे महेष्वासं पाण्डुं कुन्ती यशस्विनी ।
[ G1.5 °स्विनं. ]

— cd) S °स्त्राणामग्रतः स तया वृतः. — For it, K4 Ñ B D subst.:

1131* आदित्यमिव सर्वेषां राज्ञां प्रच्छाद्य वै प्रभाः ।
तिष्ठन्तं राजसमितौ पुरंदरमिवापरम् ।
तं दृष्ट्वा सानवद्याङ्गी कुन्तिभोजसुता शुभा ।
पाण्डुं नरवरं रङ्गे हृदयेनाकुलाभवत् ।
ततः कामपरीताङ्गी सकृत्प्रचलमानसा । [5]
व्रीडमाना स्रजं कुन्ती राज्ञः स्कन्धे समासृजत् ।
तं निशम्य वृतं पाण्डुं कुन्त्या सर्वे नराधिपाः ।
यथागतं समाजग्मुर्गजैरश्वै रथैस्तथा ।
ततस्तस्याः पिता राजन्नुद्वाहमकरोत्प्रभुः ।

[ (L. 1) D3 राज्ञां पौढोथवा विभो (sic). — (L. 6) Ñ3 B1.3.6 Da Dn1 D1.5 समासजत्. — (L. 9) Ñ3 Dn D1 विवाहम्. ]

3 S om. $3^{ab}$. — a) D2 समये (for स तया). — b) Ś1 K4 Dn D1.5 °नंदन. — c) S °जे भरतश्रेष्ठः (G4 °ष्ठ; G5 °ष्ठं).

☞ For 4–7, K4 Ñ B (B3 om. line 3) D (D5 om. line 1) subst. a passage of 56 lines (with an additional colophon after line 7) given in App. I (No. 61). Particulars of the colophon are as follows. — *Adhy. name:* K4 Ñ3 B Da D2.4.5 कुंती विवाहः. — *Adhy. no.:* B1 Dn 110 (Dn3 111); Da1 108; D2.4 112. — *S'loka no.:* Dn 13. — *Aggregate s'loka no.:* Dn3 4470.

4 For K4 Ñ B D see above. — a) K0 गत्वा; Cd यात्वा (as in text). — The reading यात्वा of Cd suggests that Dev. had before him the shorter (text) version, and not the (inflated) version of the vulgate given in App. I, a surmise confirmed by his citing $7^{ab}$ *in toto*; cf. v. l. 1. 68. 72.

5 For K4 Ñ B D cf. v. l. 3. — a) G2 सर्वराजन्यवि°. — b) G1.6 °सदृशा. — c) Ś1 K1.3 परिक्रीय; S धनुष्क्रीता. — d) S मद्रराजेश्वरात्मजा.

6 For K4 Ñ B D cf. v. l. 3. Cf. $2^{ab}$ also. — a) G1 सिंहदंष्ट्रं. S महेष्वासं (G1 महास्कंधं) (for गज°). — b) K0 S वृषभाक्षं. Ś1 तपस्विनं; T G1–4 M6–8 यश°. — c) K0 S दृष्ट्वा पांडुं (by transp.). K1 T3 °व्याघ्र. — d) K0 विस्मयंत. K1(before corr.).3 नराधिपाः.

7 For K4 Ñ B D cf. v. l. 3. — Cd cites $7^{ab}$ *in toto* exactly as in text, a line unknown to the Newārī, Bangālī and Devanāgarī versions; cf. v. l. 4. — a) S (except G6) तदा (for ततः). — After $7^{ab}$, S ins.:

1132* गोप्ता भरतवंशस्य श्रीमान्सर्वास्त्रकोविदः ।

8 a) Ś1 K1 °मागस्कृतं; D5 °मार्गे ततो; G3 °मागस्कृता. D4 यात्वा; G3 भू°. — b) S (except G1) हताः (M3 *sup. lin.* जिताः as in text).

9 a) T G (except G4.6) उपागृह्य(T1 °ह्ण)त्. For it D2 subst. $11^{a}$. — b) K4 B1.3.6 Da D3 पांडुना विविध°. — cd) Da °प्रभूतां; Dn D1 °श्रुतां. K4 Ñ1.2 B D2.4 °जनसंकुलां; Ñ3 °शत°; Da Dn D1 °रथ°. S

C. 1. 4451 B. 1. 113. 27 K. 1. 122. 27

आगस्कृत्सर्ववीराणां वैरी सर्वमहीभृताम् ।
गोप्ता मगधराष्ट्रस्य दार्वो राजगृहे हतः ॥ १०
ततः कोशं समादाय वाहनानि बलानि च ।
पाण्डुना मिथिलां गत्वा विदेहाः समरे जिताः ॥११
तथा काशिषु सुह्मेषु पुण्ड्रेषु भरतर्षभ ।
स्वबाहुबलवीर्येण कुरूणामकरोद्यशः ॥ १२
तं शरौघमहाज्वालमस्त्रार्चिषमरिंदमम् ।
पाण्डुपावकमासाद्य व्यदह्यन्त नराधिपाः ॥ १३
ते ससेनाः ससेनेन विध्वंसितबला नृपाः ।
पाण्डुना वशगाः कृत्वा करकर्मसु योजिताः ॥ १४
तेन ते निर्जिताः सर्वे पृथिव्यां सर्वपार्थिवाः ।
तमेकं मेनिरे शूरं देवेष्विव पुरंदरम् ॥ १५
तं कृताञ्जलयः सर्वे प्रणता वसुधाधिपाः ।
उपाजग्मुर्धनं गृह्य रत्नानि विविधानि च ॥ १६
मणिमुक्ताप्रवालं च सुवर्णं रजतं तथा ।
गोरत्नान्यश्वरत्नानि रथरत्नानि कुञ्जरान् ॥ १७
खरोष्ट्रमहिषांश्चैव यच्च किंचिदजाविकम् ।
तत्सर्वं प्रतिजग्राह राजा नागपुराधिपः ॥ १८
तदादाय ययौ पाण्डुः पुनर्मुदितवाहनः ।
हर्षयिष्यन्स्वराष्ट्राणि पुरं च गजसाह्वयम् ॥ १९

---

सस्यद्धहय(G1 °रथ)पादाता(T1 सम्यदंगरवोपेता)मप्रमेयरथद्विपां (G3 °रथाधिपाः). — After 9, S reads 12.

10 a) Ś1 K0-3 Ñ3 D5 बहूनामागसां (Ś1 °मां; K1 °तां) कर्ता; K4 Ñ1.2 B Da Dn D1.2.4 आगस्(Ñ1 आज्ञा)कारी महीपानां (K4 °पालो). — b) Ś1 K1-3 °धनुर्भृतां; K0 D5 G1.5 m.6 °महीक्षितां; Ñ3 T1 G5 °कुरुक्षितां. K4 Ñ1.2 B Da Dn D1.2.4 बहूनां बलदर्पितः. — D5 om. 10c-11a. — c) K4 S म(G5 मा)गधवंशस्य; Ñ3 B (except B1) °राज्य(Ñ3 °ज)स्य. — d) K3 दार्घो; Ñ2 B6 Dn D1.4 दीर्घो; D2 राजा. Ś1 K1 ततः; D5 जि° (for ह°).

11 D5 om. 11 (cf. v. l. 10). — a) B Da कोषं. — b) K4 Ñ1.2 B D (D5 om.) वाहनानि च भूरिशः. — c) T1 G3.6 M (except M3) यात्वा (for ग°). — d) S मैथिलाः (for विदे°). T M5 °रे हताः.

12 S reads 12 after 9. — a) K3 D5 ततः. K0.2 कण्वेषु; Ñ3 काचे°. K0.2 D4 पौं(D4 पुं)ड्रे° (for सुह्म°). S हताः(G5.6 °त्वा) काशिषु वंगे(T2 G5.6 °के)षु. — b) K0.2 पांड्येषु; K4 Ñ B1 D2 T2 G4 पौंड्रे°; G5(m as in text).6 सुते°. K0.1.3 Ñ3 Da Dn D1 च नरर्षभ; D4 T G M3-5 च नरा(T1 वसुधा)धिपाः. M6-8 पुंड्रकेषु नराधिपाः. — c) K4 Ñ1.2 B D2 विजित्य पृथिवीपालान्.

13 M8 om. 13-14. — a) B5 °महाज्ञानम्; S (except T2 G6; M8 om.) °वेगम्. — b) Ñ3 D (except D2.4.5) शस्त्रार्चिषम्. S अस्त्रज्वलितपावकं. — cd) S पांडुमासाद्य राजानो न शेकुरतिवर्तितुं.

14 M8 om. 14 (cf. v. l. 13). — a) Ś1 K1.2.4 D5 ते समेताः. Ś1 समासेन; K1 समंते°; K3.4 D2 ससैन्ये°; D5 पुरा ते°; T1 G1.3.4-6 M (M8 om.) स्व(G5.6 स)याते°. K3 तेन सेनासमेतेन; G3 तेस्य सेनास्त्रघातेन. — b) S °सितमहाबलाः. — c) K1 वशमानीय; K4 स्ववशीकृत्य; Ñ1.2 B D2.4 करदीकृत्य; S (M8 om.) पृथिवीपालाः (for वशगाः कृ°). — d) N कु(K2 का)रुकर्मसु.

15 For 15ab, Ś1 K1 repeat 12ab! — b) Ñ1 पृथिवीपते; Ñ2 B (B5m as in text) D2.4 पृथिवीक्षिताः (for सर्वे°). — d) Ñ1.2 B (except B5) Da D2.4 दैत्या इव पुरं°.

16 M6-8 om. 16-17ab. — a) Ñ1.2 B वीरं; S (M6-8 om.) शूरं (for सर्वे). — b) S (M6-8 om.) आसाद्य. K0 सर्वपार्थिवाः; Ñ1 वसुधातले; G3 मनुजा°. — c) S (M6-8 om.) आजह्रुर्धनधान्यानि.

17 M6-8 om. 17ab (cf. v. l. 16). — a) S (M6-8 om.) मणिप्रवालमुक्तानि. — b) K3 T2 G (except G1) सुवर्णं-. N (except B D2.4) बहु (for तथा). — c) G5.6 °न्यश्व(G6 °नि च)मुख्यानि.

18 Ś1 K (except K4) Ñ3 om. 18ab. — a) Dn °महिषीश्चैव; S °महिषान्गाश्च (T1 °षाणां च). — After 18ab, N (except Ñ1) M5 ins. line 2 of 34* (cf. v. l. 1. 1. 87). — Ñ1 om. 18c-21b. — c) Ñ2 सर्वतः प्रति°. — d) Ñ2 B Da D2.4 °पुरेश्वरः.

19 Ñ1 om. 19 (cf. v. l. 18). — a) Ñ2 B (except B5) D2.4 ततो हृष्टमनाः; T1 तथा विनिर्ययौ. — b) Ñ2 B (except B5) D2.4 प्रायान्; S भृशं (for पुनर्). Ñ1 K3 °मानसः. — c) K0 S हर्षयन् सर्व(K0 स्वानि)रा°. — d) M7 om. 19d. G1 पुनश्च. G2 नगसाह्वयं.

20 Ñ1 om. 20 (cf. v. l. 18). M6-8 transp. 20 and 21. — c) B (B3 m as in text) Da1 D1 कीर्तितः. K3 प्रनष्टा श्रीश्च कीर्तिश्च; S नष्टा कीर्तिः स्ववंशस्य. — d) K3 S पुनरुद्धृता.

शंतनो राजसिंहस्य भरतस्य च धीमतः ।
प्रनष्टः कीर्तिजः शब्दः पाण्डुना पुनरुद्धृतः ॥ २०
ये पुरा कुरुराष्ट्राणि जहुः कुरुधनानि च ।
ते नागपुरसिंहेन पाण्डुना करदाः कृताः ॥ २१
इत्यभाषन्त राजानो राजामात्याश्च संगताः ।
प्रतीतमनसो हृष्टाः पौरजानपदैः सह ॥ २२
प्रत्युद्ययुस्तं संप्राप्तं सर्वे भीष्मपुरोगमाः ।
ते नदूरमिवाध्वानं गत्वा नागपुरालयाः ।
आवृतं ददृशुर्लोकं हृष्टा बहुविधैर्जनैः ॥ २३
नानायानसमानीतै रत्नैरुच्चावचैस्तथा ।
हस्त्यश्वरथरत्नैश्च गोभिरुष्ट्रैरथाविकैः ।
नान्तं ददृशुरासाद्य भीष्मेण सह कौरवाः ॥ २४
सोऽभिवाद्य पितुः पादौ कौसल्यानन्दवर्धनः ।
यथार्हं मानयामास पौरजानपदानपि ॥ २५
प्रमृद्य परराष्ट्राणि कृतार्थं पुनरागतम् ।
पुत्रमासाद्य भीष्मस्तु हर्षादश्रूण्यवर्तयत् ॥ २६
स तूर्यशतसंघानां भेरीणां च महास्वनैः ।
हर्षयन्सर्वशः पौरान्विवेश गजसाह्वयम् ॥ २७

C. 1. 4463
B. 1. 113. 45
K. 1. 122. 45

इति श्रीमहाभारते आदिपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

---

21 Ñ1 om. $21^{ab}$ (cf. v. l. 18). — M6-8 transp. 20 and 21. — $^{a}$) M7 om. $21^{a}$. Ś1 K1 पांडुना कुरु°; S (M7 om.) ये पूर्वं पर°. — $^{b}$) S परधनानि. — $^{d}$) Ñ B D करदी°; S वशगाः कृ°.

22 $^{a}$) S राष्ट्राणि (for राजा°). — $^{b}$) Ñ1.2 B (except B5) D2.4 राजपुत्राश्च; S भूमिपाला°. K0 सर्वशः. — After $22^{ab}$, S ins.:

1133* अभ्यनन्दन्त वै पाण्डुमाशीर्वादैः पृथग्विधैः ।
[ G2 °नंदन् स्तवैः. M6-8 ते (for वै). ]

— $^{c}$) S प्रसन्नमनसो. G5.6 भूत्वा; M6-8 दृष्ट्वा. — $^{d}$) S बांधवाः (T1 G2.4 पार्थिवाः) कुरुभिः सह.

23 $^{a}$) Ś1 च सं°; K1 स्म सं°; Ñ1.2 B D2.4 तमा(B8 °था)यांतं; Da Dn D1 च तं प्राप्तं; S (except G5.6) प्रहृष्टार्थाः (M6-8 °स्ते). — $^{b}$) S (except M8) °पुरःसराः. — $^{c}$) K2-4 ते सु(K3 त्व)दूरम्; S ते त्व(G5.6 तु)दीर्घम्. G5.6 इवायांतं. — $^{d}$) K0 Dn D1 °पुरालयात्; Ñ1.2 B (B5m as in text) D4 °पुराजनाः; D2.5 °पुरे (D5 °रं) जनाः. — $^{ef}$) N (except Ś1) हृष्टा लोकं (Ñ1.3 °का) (by transp.).

24 $^{a}$) Ś1 K °यानैः; Ñ3 °देश-; G3 °वास-. — $^{b}$) Ñ3 यानैः (for रत्नैः). K3 शुभैः; Ñ1.2 D (except D2.4.5) तदा; Ñ3 अपि (for तथा). — $^{cd}$) Da °रथयानैश्च; D1.2 °रथपत्रैश्च. Ś1 अश्वैः (for उष्ट्रैः). K Ñ3 Da Dn D1 त(K1 अ)थाविधैः (D1 °श्वभिः; Dn °विभिः; D1 नृभिः); Ñ1.2 B D2.4.5 अजैस्तथा. S अजाविकाश्वसंघानामुष्ट्रगोमहिषस्य च.

25 $^{b}$) MSS. indiscriminately read कौसल्या and °श°. K0.2 B (except B8) Da D4 T2 G1-3 M (except M5) °नंदि°. — $^{c}$) G5 तथार्हं. K0 पूज°.

26 $^{a}$) Dn D1.5 पुर°. — $^{b}$) B5 कृतास्त्रं; T1 स्वराष्ट्र. — $^{c}$) B D (except Da2 D1) पुत्रमाश्लिष्य. Ś1 K1.2.4 Ñ3 भीष्मस्य; Ñ1 B D2.4.5 गांगेयो. — $^{d}$) Ś1 K1.2 अश्रु प्र(K2 व्य)वर्तत; Ñ1 B D2.4.5 °व्यपातयत्; Ñ3 °व्यवर्तत.

27 $^{a}$) K3 S °संघैश्च (G1 °घोषैश्च; M5 °संघैस्तैः); Ñ1 B5.6 Dn D1.2.4 °शंखानां; B3 Da D5 °संख्यानां. — $^{c}$) K0 Ñ3 Da S सर्वभूतानि. Ś1 K1-4 हर्षयिष्यन्स्वराष्ट्राणि.

Colophon om. in S. — *Sub-parvan:* Ś1 K1.2.4 Ñ B5 Da Dn1.n2 D1.5 संभव. — *Adhy. name:* K0.2 Ñ1.2 B1 पांडुदिग्विजयः; B3.5.6 D2.4 पांडुविजयः. — *Adhy. no.* (figures, words or both): K0 108; B1 Dn D4 111 (Dn3 112); Da1 109. — *S'loka no.:* Da1 46; Dn 44 (Dn3 45); M8 28.

## १०६

S. 1. 4469
B. 1. 114. 1
K. 1. 123. 1

वैशंपायन उवाच ।
धृतराष्ट्राभ्यनुज्ञातः स्वबाहुविजितं धनम् ।
भीष्माय सत्यवत्यै च मात्रे चोपजहार सः ॥ १
विदुराय च वै पाण्डुः प्रेषयामास तद्धनम् ।
सुहृदश्चापि धर्मात्मा धनेन समतर्पयत् ॥ २
ततः सत्यवतीं भीष्मः कौसल्यां च यशस्विनीम् ।
शुभैः पाण्डुजितै रत्नैस्तोषयामास भारत ॥ ३
ननन्द माता कौसल्या तमप्रतिमतेजसम् ।
जयन्तमिव पौलोमी परिष्वज्य नरर्षभम् ॥ ४
तस्य वीरस्य विक्रान्तैः सहस्रशतदक्षिणैः ।
अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः ॥ ५
संप्रयुक्तश्च कुन्त्या च माद्र्या च भरतर्षभ ।
जिततन्द्रीस्तदा पाण्डुर्बभूव वनगोचरः ॥ ६
हित्वा प्रासादनिलयं शुभानि शयनानि च ।
अरण्यनित्यः सततं बभूव मृगयापरः ॥ ७
स चरन्दक्षिणं पार्श्वं रम्यं हिमवतो गिरेः ।
उवास गिरिपृष्ठेषु महाशालवनेषु च ॥ ८
रराज कुन्त्या माद्र्या च पाण्डुः सह वने वसन् ।
करेण्वोरिव मध्यस्थः श्रीमान्पौरंदरो गजः ॥ ९
भारतं सह भार्याभ्यां बाणखड्गधनुर्धरम् ।
विचित्रकवचं वीरं परमास्त्रविदं नृपम् ।
देवोऽयमित्यमन्यन्त चरन्तं वनवासिनः ॥ १०
तस्य कामांश्च भोगांश्च नरा नित्यमतन्द्रिताः ।
उपजह्रुर्वनान्तेषु धृतराष्ट्रेण चोदिताः ॥ ११

---

### 106

1 Ś1 K1 S om. उवाच (T2 M8 om. the ref.). — b) B5 °बाहूपार्जितं. B (except B5) Da D2.4 वसु (for धनम्). — d) S तत् (for सः).

2 a) Da D5 M6-8 स वै; D2 अथ वै. T1 वै सर्वं. — b) T1 वीर्यवान्; G5 वै धनं. — c) T1 विदुरश्चापि. — d) M6-8 समतोपयत्.

3 a) K3 Ñ3 D (except Da2) S सत्यवती. Ñ3 B (B1m as in text) D (except D5) M6-8 भीष्मं. — b) Here and below MSS. indiscriminately कौसल्या-, °श°, °शि°. Ñ3 S कौसल्या—°स्विनी. — c) T1 पराहृतैः; T2 G2-4 पांडुहृतैः. Ñ2 B3 Dn D1 S (except G5 M5) अर्थैः. — d) K4 तर्पया°. S भृशं तुतुपुराहृतैः (T2 G4 °वृताः).

4 d) M रथर्षभं.

5 After 5a, G1.2.4 ins.:

1134* पाण्डोर्बाहुविनिर्जितैः ।
असंख्येयैर्धनै राजा.

— c) T2 G3 °मेधमखै°; M8 °मेधवरै°.

6 a) K1 B1 D2 S Cd (the first) च (as in text); the rest तु. — b) K3 पुरुषर्षभः; S सततं नृपः. — c) Ñ1 S (except G6) जितेंद्रियः. Cd cites तंद्री. Ś1 K G1 Cd तथा (Ko °तः). — d) Ko मृगयापरः (cf. 7d); Cd वनगोचरः (as in text).

7 Ś1 K1 (hapl.) om. 7; G1 (? hapl.) om. 7-9ab. — a) S (G1 om.) °पंक्तीश्च. — b) Ñ1.3 B5 D4 शुभान्याभरणानि च. — c) S (G1 om.) चापपाणिर्मृगान्निघ्नन्. — d) Ko वनगोचरः (cf. 6d); Ñ1 °रतः; Ñ2 °रतिः; G3 °यां गतः.

8 G1 om. 8 (cf. v. l. 7). — a) Ko स वसन्. D5 णे पार्श्वे. — b) D5 रम्ये. — c) S (G1 om.) °श्रृंगेषु. — d) K1 S (except M3.5; G1 om.) °साल°.

9 G1 om. 9ab (cf. v. l. 7). — a) S (G1 om.) बभूव कुंत्या. D5 राजा कुंत्या च माद्र्या च. — b) D (except D2.4.5) वने चरन्; S (G1 om.) बनेचरः. — cd) S गज(G1.5.6 द्विप)राजः करेणुभ्यां यथा मध्यगतस्तथा.

10 a) S चरंतं. Ko पत्नीभ्यां. — b) Ñ1.2 B3 D (except D2.4.5) खड्गबाण° (by transp.). — e) Ko °मित्यजानंत. — f) S (except T1) चरंतो.

11 b) D4 देशम् (for नित्यम्). Ś1 चारा निन्युरतंद्रिताः; K1 सेवका व्याहृतंद्रिताः (sic). — T1 om. 11cd. — c) Ś1 उपा°; G M अनु°. — d) S (T1 om.) °राष्ट्रप्र-. Ko.4 नोदिताः.

☞ The arrangement of the subject-matter of the 9 adhy. 106-114 is entirely different in the two recensions. The transp. begin at 1. 106. 12 and end at 1. 114. 14 (both inclusive). The Table of Contents (*viṣayānukramaṇī*) of the Kumbh. ed.

अथ पारशवीं कन्यां देवकस्य महीपतेः ।
रूपयौवनसंपन्नां स शुश्रावापगासुतः ॥ १२
ततस्तु वरयित्वा तामानाय्य पुरुषर्षभः ।
विवाहं कारयामास विदुरस्य महामतेः ॥ १३
तस्यां चोत्पादयामास विदुरः कुरुनन्दनः ।
पुत्रान्विनयसंपन्नानात्मनः सदृशान्गुणैः ॥ १४

C. 1. 4462
B. 1. 114. 14
K. 1. 123. 3

इति श्रीमहाभारते आदिपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥

---

(which follows the Southern arrangement) gives the sequence of S, while the concordance accompanying it allows the reader to follow the sequence of the various units in N. The transpositions appear to be extremely arbitrary and complicated: in reality they follow a definite plan, which is of the most simple character. The whole passage as given in the constituted text divides itself naturally into two sections (adhy. 106–108 and 109–114), dealing respectively with the births of the sons of Dhṛtarāṣṭra and Pāṇḍu. N narrates first the birth of all the sons of Dhṛtarāṣṭra, the elder brother, and then that of all the sons of Pāṇḍu, the younger brother: S narrates the incidents as a correlated sequence, beginning with the birth of Yudhiṣṭhira, following the chronological order of the births of the hundred and five sons of Pāṇḍu and Dhṛtarāṣṭra together. The turning point in the rearrangement in S is adhy. 109 (Pāṇḍu's curse). After that point there is, as may be seen from the following table, a lateral shift in S, which involves merely a dovetailing of the various units of the two sections mentioned above (so as to synchronize the incidents), leaving the different units in each section (with but one exception) in the same relative sequence. The constituted text follows N. The critical notes give invariably the combined collations of the two recensions, irrespective of the place of the stanza in the scheme of S; the additions of S are likewise noted under that particular stanza of N after which the addition has been found. Here is the sequence of S:

1. 106. 11
    109. 5–end
        *Colophon.*
    110
    111. 1–11 (+1177*)
    111. 18–21
106. 12–end
        *Colophon.*
107. 1–8 (+1135*)
    111. 12–17 (+1181*)
    111. 22–end
    112
        *Colophon.*
    113. 1–37$^{ab}$ (+1197*)
        *Colophon.*
    113. 38–end
    114. 1–7
107. 9–24
    114. 8–14
107. 25–end
        *Colophon.*
    App. I, No. 63 (*Duḥś'alotpatti*)
        *Colophon.*
108
        *Colophon.*
    114. 15 ff.

(*N. B.*—S om. 1. 109. 1–4 and 1. 113. 37$^{cd}$.)

12 For sequence see above. Before 12, $T_1$ $G_{2-4}$ ins. वैशं°. — $^{a}$) $G_5$ ततः (for अथ). $K_{0.3.4}$ Ñ $B_5$ $D_{n2.n3}$ $D_5$ पारसवीं; $K_2$ °सवां; $T_2$ (*sup. lin.*) $G_6$ °वशीं; Cd as in text. — $^{b}$) T $G_{3.4}$ °स्य महात्मनः. — After $12^{ab}$, $D_1$ reads $14^{ab}$. — $^{d}$) $B_5$ तां; $D_5$ सं; $G_5$ वि- (for स).

13 $G_1$ om. 13. — $^{b}$) $Ñ_2$ $B_{3.5}$ m D (except $D_{2.4.5}$) आनीय. $K_{0.3.4}$ $Ñ_{1.2}$ Da Dn $D_{1.2}$ $T_2$ भरतर्षभः ($K_{0.2}$ $T_2$ °भ); $B_6$ $D_6$ $G_2$ $M_6$ °र्षभ. — $^{d}$) $K_1$ $B_1$ महीपतेः; $K_2$ $D_{a1}$ $D_2$ °मते; $B_5$ T $G_{3.4}$ M (except $M_5$) °त्मनः.

14 $M_7$ om. $14^{ab}$. For $D_1$ cf. v. l. 12. — $^{c}$) Ko om. च. — $^{b}$) $K_{2.4}$ Ñ Dn °नंदन.

Colophon om. in $G_3$. $G_1$ missing. — *Major parvan:* $T_2$ $G_{3.4-6}$ M संभव° (for आदि°). — *Sub-parvan:* Ś$_1$ $K_{1-4}$ Ñ B Da $D_{n1.n2}$ $D_{1-4}$ $T_1$ संभव. — *Adhy. name:* Ko विदुरवैवाहिकः; $Ñ_{1.2}$ विदुरपरिणयः;

## १०७

C. 1. 4463
B. 1. 115. 1
K. 1. 126. 4

वैशंपायन उवाच ।
ततः पुत्रशतं जज्ञे गान्धार्यां जनमेजय ।
धृतराष्ट्रस्य वैश्यायामेकश्चापि शतात्परः ॥ १
पाण्डोः कुन्त्यां च माद्र्यां च पञ्च पुत्रा महारथाः ।
देवेभ्यः समपद्यन्त संतानाय कुलस्य वै ॥ २
जनमेजय उवाच ।
कथं पुत्रशतं जज्ञे गान्धार्यां द्विजसत्तम ।
कियता चैव कालेन तेषामायुश्च किं परम् ॥ ३
कथं चैकः स वैश्यायां धृतराष्ट्रसुतोऽभवत् ।
कथं च सदृशीं भार्यां गान्धारीं धर्मचारिणीम् ।
आनुकूल्ये वर्तमानां धृतराष्ट्रोऽत्यवर्तत ॥ ४
कथं च शप्तस्य सतः पाण्डोस्तेन महात्मना ।
समुत्पन्ना दैवतेभ्यः पञ्च पुत्रा महारथाः ॥ ५
एतद्विद्वन्यथावृत्तं विस्तरेण तपोधन ।
कथयस्व न मे तृप्तिः कथ्यमानेषु बन्धुषु ॥ ६
वैशंपायन उवाच ।
क्षुच्छ्रमाभिपरिग्लानं द्वैपायनमुपस्थितम् ।
तोषयामास गान्धारी व्यासस्तस्यै वरं ददौ ॥ ७
सा वव्रे सदृशं भर्तुः पुत्राणां शतमात्मनः ।
ततः कालेन सा गर्भं धृतराष्ट्रादथाग्रहीत् ॥ ८

---

M3.5 पांडुतपश्चरणं. — *Adhy. no.* (figures, words or both): K0 109; B1 D4 112; Da1 110; Dn 113; T1 108; T2 58; G2.4–6 M 59 (M3 60). — *S'loka no.*: Dn 14; M3 73.

### 107

1 Ś1 K1 D2 S om. उवाच. — $^{d}$) T1 एकः पुत्र-; T2 G M3.5 °श्चैव. — After 1, G5.6 read $4^{cdef}$, repeating it in its proper place (cf. v. l. 2).

2 $^{b}$) = $5^{d}$. Ñ Dn D1 पुत्राः पंच (by transp.). B1.3 महाबलाः. — After $2^{ab}$, G5.6 read $5^{cd}$–6, $6^{cd}$ being repeated in its proper place (cf. v. l. 1). — In G1, $2^{c}$–$3^{b}$ is lost on a torn part of the fol. (75). — G5.6 om. $2^{c}$–$3^{d}$. — $^{c}$) T G1.3.4 M सम° देवेभ्यः (by transp.). — $^{d}$) K1 ते; B3 D2 च (for वै).

3 G5.6 om. 3 (cf. v. l. 2). — In G1, $3^{ab}$ is lost on a torn part of the fol. (75). — Ś1 K1 S om. उवाच. — $^{b}$) K1 B (except B1) Da D2.4.5 G2 M3 गांधार्यां. — K0 (hapl.) om. from द्विज° up to गांधारीं (in $4^{d}$). — $^{c}$) T2 G1.3.4 M चापि (for चैव).

4 K0 om. up to गांधारीं (cf. v. l. 3). T1 G1–4 M read 4 after 6. — $^{a}$) Ñ3 एकस्य; D5 स चैको (by transp.). K2 S चैव (G1.5.6 चापि) (for चैकः). K4 T G1.2.6 वेश्या°. — Ñ3 (? hapl.) om. $4^{bc}$. — $^{b}$) D5 °राष्ट्रात्सुतो. S एकश्चा(G3 °कं चा)पि शतात्परः (G3 °रं). — G5.6 read $4^{cdef}$ after 1 and repeat it here. — $^{e}$) Ś1 K1.3.4 स; G6 -चित् (for च). — $^{e}$) S वर्तमानां प्रियेष्वेव. — $^{f}$) Ś1 K1.4 Ñ B3.5 Dn1.n2 D1.2.4 T2 G2.4 M3 °ष्ट्रोभ्य°; K2 D5 °ष्ट्रो न्य°; T1 °ष्ट्रोप्य°; G5.6 °ष्ट्रोन्व°.

5 $^{a}$) G1 शप्तस्य च (by transp.). B3 T1 G1.2.4 M6–8 ततः (for सतः). — $^{b}$) Ś1 K Ñ3 D2.4.5 °स्तस्य महात्मनः (K0 °स्तेन तपस्विना). — $^{cd}$) G5.6 read $5^{cd}$–6 after $2^{ab}$. Ś1 पंच पुत्रा दैवतेभ्यो (by transp.). K3 Ñ B D (except D5) पुत्राः पंच (by transp.). — $5^{d}$ = $2^{b}$.

6 G5.6 read 6 (with $5^{cd}$) after $2^{ab}$ (repeating $6^{cd}$ here). — $^{a}$) S (G1 missing) एतत्सर्वं. Ś1 K1.2.4 Ñ1 D (except D2.4.5) यथान्यायं. — $^{c}$) S (except G5.6; G1 missing) कथय त्वं. K0 न तृप्यामि; D4 न मे तुष्टिः. — $^{d}$) B3.5 वस्तुषु (sic). — After 6, T1 G1–4 M read 4.

7 Ś1 K1 D5 S om. उवाच. — $^{a}$) K4 Ñ2 B3 Da1 °म्लानं; S (G1 missing) तृषितं क्षुधितं श्रां(G2–6 शां)तं (hypermetric!). — $^{d}$) S (G1 missing) स तु तस्यै.

8 $^{a}$) S सा वव्रे च (T2 G4 M3 by transp. च वव्रे) तदा. — $^{d}$) Ś1 K1–4 तदा(K2.4 °था)ग्रहीत्; K0 Ñ1 D5 अगृह्णत. S (except M5) अगृह्णाज्ज्ञानचक्षुषः. — After 8, S ins.:

1135* गान्धार्यामाहिते गर्भे पाण्डुरस्वालिकासुतः ।
अगच्छत्परमं दुःखमपत्यार्थमरिंदम ।
गार्भिण्यामथ गान्धार्यां पाण्डुः परमदुःखितः ।
मृगाभिशापादात्मानं शोचन्नुपरतक्रियः ।
स गत्वा तपसा सिद्धिं विश्वामित्रो यथा भुवि । [5]
देहन्यासे कृतमना द वचनमब्रवीत् ।

C. 1. 5810 B. 1. 147. 13 K. 1. 159. 12

वप्रान्ते निष्प्रतीकारमाश्लिष्येदं कृतं महत् ॥ १३
इदं तदशुभं नूनं तस्य कर्म चिकीर्षितम् ।
प्रागेव विदुरो वेद तेनास्मानन्वबोधयत् ॥ १४
सेयमापदनुप्राप्ता क्षत्ता यां दृष्टवान्पुरा ।
पुरोचनस्याविदितानस्मांस्त्वं विप्रमोचय ॥ १५
स तथेति प्रतिश्रुत्य खनको यत्नमास्थितः ।
परिखामुत्किरन्नाम चकार सुमहद्बिलम् ॥ १६
चक्रे च वेश्मनस्तस्य मध्ये नातिमहन्मुखम् ।
कपाटयुक्तमज्ञातं समं भूम्या च भारत ॥ १७
पुरोचनभयाच्चैव व्यदधात्संवृतं मुखम् ।
स तत्र च गृहद्वारि वसत्यशुभधीः सदा ॥ १८
तत्र ते सायुधाः सर्वे वसन्ति स्म क्षपां नृप ।
दिवा चरन्ति मृगयां पाण्डवेया वनाद्वनम् ॥ १९
विश्वस्तवदविश्वस्ता वञ्चयन्तः पुरोचनम् ।
अतुष्टास्तुष्टवद्राजन्नूषुः परमदुःखिताः ॥ २०
न चैनानन्वबुध्यन्त नरा नगरवासिनः ।
अन्यत्र विदुरामात्यात्तस्मात्खनकसत्तमात् ॥ २१

इति श्रीमहाभारते आदिपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

---

S (except T1) इह (for इदं).

14 D1 om. 14^c–15^b. — ^ab) G5 दहनं; G6 अशुभात् (for अशुभं). K3 इदं तु भवता दिष्टमाग्नेयं हर्म्यं कारितं. — ^cd) Ś1 K0.1 येनास्मान्; K2 स चास्मान्; D5 यो नोस्मान्. K3 यामाह विदुरः पूर्वं महाबुद्धिर्हिते रतः.

15 D1 om. 15^ab (cf. v. l. 14). — ^b) K3 M5 उक्तवान्पुरा; T2 G M3.6–8 पूर्वमुक्तवान्. — ^c) T2 G (except G3) अविदितं. — ^d) K0.3.4 Ñ2 B6 D T1 प्रति(D5 संप्र)मोचय.

16 Before 16, S (except T1 G3) ins. वैशं°. — ^a) G1 तथैवेति (for स तथे°). K3 G3 M5 प्रतिज्ञाय. — ^c) Ś1 K1 आस्ते (for नाम). — ^d) Ś1 च (for सु-). B1.3 G5 सुमहाविलं; Dn D1 च महाविलं.

17 Da om. 17^ab. — ^a) Ñ2 D1 बभूव; T2 G5 मध्ये च; G6 समीपे; M3 चकार (for चक्रे च). — ^b) T2 G5.6 M5 चक्रे (for मध्ये). K0.2 नापि; K3.4 नाथ (for नाति-). N (Da om.) -महद्विलं (K1 -महाबिलं); G1 -महासुखं. — ^c) Ś1 K1 Da G1.2 M6–8 कवाट°. — ^d) K (except K2) Ñ1 V1 समं भूम्याथ; Ñ2.3 Dn1.n2 D1 T1 °मं भूम्याश्च; B Da D2.4 समभूम्यथ; Dn3 D5 G1 °मं भूम्यां च.

18 ^a) Ś1 तत्र; V1 चापि; Dn D1.5 T1 एव (for चैव). G6 पुरोचनानयाच्चैव. — ^b) Ś1 विदधत्; K0 Ñ1 Da व्यदधत्; K1 विधदात् (sic); D1 G6 M6–8 व्यवधात्; G2 वितथात्; G3 व्यदधात्. — After 18^ab, K4 marg. ins.:

1472* स वै स्वर्गादिहायातः इन्द्रस्यातिप्रियंकरः ।
पाण्डवानां हितं कर्तुमिन्द्रेण प्रेषितस्तदा ।
नित्यमृन्द्रक्षणपरो दिनैर्दशभिरेव च ।
कृत्वा बिलं च सुमहत्पुनः स्वर्गमितो गतः ।
सर्वमिन्द्रे निवेद्याथ पुनः स्वर्गात्समागतः ।

— ^c) K1 हि (for च). K0.3 स हि तस्य; K2.4 Ñ1.3 V1 M5 स तस्य हि; B D T1 G3 स तस्य तु (D1 स च तस्य); T2 G1.2.4–6 स तस्मिन्हि (G1.2 °स्मि-; G6 °स्म). — ^d) Ś1 K0.1.4 अशुचिधीः; G1 अशुद्ध°; Cd as in text. Ś1 तथा (for सदा).

19 ^d) G2.4 महद्वनं; G3 वनाद्धुशं (for वना°).

20 ^b) Ś1 विरोचनं; K1 (as usual) प्ररोचनं. — ^c) K4 अहृष्टा हृष्टवद्. — ^d) Ñ V1 B D (except D5) T1 °विस्मिताः.

21 ^a) B3.5.6 D2.4 G (except G1.5) न चै(B5 वै)तान्. M तथैतान्नाव(M6 °न्व)बु°. — ^c) K3 विदुराद्वापि.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 V1 B6 Da Dn1.n2 D1.3 जतुगृह; B1.3.5 D4 जातुष; T1 संभव. — *Adhy. name:* Ś1 K1 Ñ3 D5 M3.5 जतुगृहदाहः; Ñ1.2 V1 G3 जतुगृहवासः. — *Adhy. no.* (figures, words or both): B1 144; Dn3 146; D4m 149; T1 142; T2 G5.6 93; G1.2 94; G3.4 M 92. — *S'loka no.:* Dn M3 21 (Dn1 22). — *Aggregate s'loka no.:* Dn2 5823.

## 136

1 Ś1 K1.3 D2 S om. उवाच. — ^a) M सुविश्वस्तान् (for सुम°). — ^c) Ñ3 S (except T1 G3) इति (Ñ3 इव) संप्रेक्ष्य. — ^d) G4 हंतुं चक्रे. — After 1, D4 marg. sec. m. ins.:

1473* स तु संचिन्तयामास प्रहृष्टेनान्तरात्मना ।
प्राप्तकालमिदं मन्ये पाण्डवानां विनाशने ।
तदस्यान्तर्गतं भावं विज्ञाय कुरुपुंगवः ।

## १३६

वैशंपायन उवाच ।

तांस्तु दृष्ट्वा सुमनसः परिसंवत्सरोषितान् ।
विश्वस्तानिव संलक्ष्य हर्षं चक्रे पुरोचनः ॥ १
पुरोचने तथा हृष्टे कौन्तेयोऽथ युधिष्ठिरः ।
भीमसेनार्जुनौ चैव यमौ चोवाच धर्मवित् ॥ २
अस्मानयं सुविश्वस्तान्वेत्ति पापः पुरोचनः ।
वञ्चितोऽयं नृशंसात्मा कालं मन्ये पलायने ॥ ३
आयुधागारमादीप्य दग्ध्वा चैव पुरोचनम् ।
षट्प्राणिनो निधायेह द्रवामोऽनभिलक्षिताः ॥ ४
अथ दानापदेशेन कुन्ती ब्राह्मणभोजनम् ।
चक्रे निशि महद्राजन्नाजग्मुस्तत्र योषितः ॥ ५
ता विहृत्य यथाकामं भुक्त्वा पीत्वा च भारत ।
जग्मुर्निशि गृहानेव समनुज्ञाप्य माधवीम् ॥ ६
निषादी पञ्चपुत्रा तु तस्मिन्भोज्ये यदृच्छया ।
अन्नार्थिनी समभ्यागात्सपुत्रा कालचोदिता ॥ ७
सा पीत्वा मदिरां मत्ता सपुत्रा मदविह्वला ।
सह सर्वैः सुतै राजंस्तस्मिन्नेव निवेशने ।
सुष्वाप विगतज्ञाना मृतकल्पा नराधिप ॥ ८
अथ प्रवाते तुमुले निशि सुप्ते जने विभो ।
तदुपादीपयद्भीमः शेते यत्र पुरोचनः ॥ ९

C. 1. 5828
B. 1. 149. 10
K. 1. 160. 14

---

चिन्तयामास मतिमान्धर्मपुत्रो युधिष्ठिरः ।

2 $T_2$ $G_5$ (hapl.) om. $2^{a}$–$3^{b}$. — $^{a}$) $\tilde{N}_2$ तुष्टे (for हृष्टे). $G_1$ °चनेथ संहृष्टे. — $^{b}$) $D_5$ [ऽ]पि (for ऽथ). — $^{c}$) $B_6$ D (except $D_{4.5}$) $T_1$ $M_5$ चोभौ; $G_{3.6}$ तौ च (for चैव). — $^{d}$) $Ś_1$ चैव च; $K_1$ वैवाच (sic); $\tilde{N}_3$ $V_1$ $B_{1.6}$ D (except $D_{4.5}$) $T_1$ प्रोवाच; M चैवाह ($M_3$ °थ) (for चोवा°).

3 $T_2$ $G_5$ om. $3^{ab}$ (cf. v. l. 2). — $^{a}$) $K_2$ सुविश्रब्धान्. — Before $3^{cd}$, $G_5$ ins. युधिष्ठिरः. — $^{c}$) $T_2$ G वंचकोयं. $D_5$ भृशं सोस्मान्. — $^{d}$) $G_1$ कालं मेने च लंघने.

4 $^{a}$) $V_1$ सायुधागारम्; T G (except $G_3$) जातुषागारम्. $K_3$ आश्रित्य; $\tilde{N}_1$ अप्येदं. — $^{b}$) $G_3$ M (except $M_5$) चैनं (for चैव). — $^{c}$) $Ś_1$ $K_3$ $D_5$ $G_{1.2}$ $M_{3.5}$ विधाये($G_{1.2}$ °थे)ह; $K_{0.2.4}$ $\tilde{N}_{1.3}$ वधायेह; $B_5$ निधायात्र. — $^{d}$) $\tilde{N}_1$ प्रयामो; $G_{4.5}$ द्रवाम. $Dn_3$ $T_2$ G [ऽ]नुप($G_3$ तूप)लक्षिताः; M नोपल°. $D_5$ व्रजामो नाभिलक्षिताः.

5 Before 5, $T_2$ G (except $G_6$) ins. वैशं°. — $^{a}$) $Dn_3$ धर्मराजनिदेशेन. — $^{c}$) M चक्रे च सु- ($M_5$ तत्र). $Ś_1$ $\tilde{N}_3$ महाराजन्; $K_3$ तदा राजन्; $\tilde{N}_2$ $V_1$ B D (except $D_5$) $T_1$ $G_5$ $M_5$ महाराज ($B_{1.3}$ महाबाहो). — $^{d}$) $Ś_1$ K तेन यो°.

6 $^{a}$) $D_5$ यथाकालं. — $^{b}$) $D_5$ भुक्त्वा भोज्यं यदृच्छया; $T_1$ श्रुत्वा भारतसत्तम; $G_1$ भुक्त्वा पीत्वा तथैव च. — $^{c}$) $\tilde{N}_1$ गृहानेत्य; $T_2$ G °ण्येव. — $^{d}$) Ko Arj. (comm.) यादवीं; Da (erroneously) Arjp Cd as in text. $Dn_3$ समस्तास्ताश्च योषितः. — After 6, S ins. ($T_1$ in reverse order):

1474* पुरोचनप्रणिहिता पृथां स्म किल सेवते ।
निषादी दुष्टहृदया नित्यमन्तरचारिणी ।

[ (L. 1) $T_1$ परिसे°; $G_6$ खलु से°. $G_3$ पृथां समुपसेवते. ]

7 After $7^{ab}$, S (except $G_3$) ins.:

1475* पुराभ्यासकृतस्नेहा सखी कुन्त्याः समा सुतैः ।
आनीय मधुमूलानि फलानि विविधानि च ।

[ (L. 1) $T_1$ समाहिता; $T_2$ $G_{2.4-6}$ समं सुतैः. $G_1$ कुंत्याश्च सह सा सुतैः. ]

— $^{d}$) $K_{0.2.4}$ $D_5$ °नोदिता. — After 7, T G ins.:

1476* पापा च पञ्चपुत्रा सा पृथायाः सखिमानिनी ।

[ $T_2$ $G_5$ सख्यमानिनी. $G_1$ °पुत्रा च सा पृथायाः सखी मता. ]

8 $^{c}$) $D_5$ S तत्र. — $^{e}$) $G_{3.6}$ सा हि सर्वैः. — $^{f}$) $\tilde{N}_2$ B (except $B_6$) $D_1$ मृतकल्पेव चा($\tilde{N}_2$ सा)भवत्.

9 $^{a}$) $Ś_1$ वाते तु; $K_4$ $\tilde{N}_{1.2}$ $B_{1.3}$ प्रयाते; $B_6$ $T_1$ $G_2$ °भाते; $D_2$ °जाते (cf. v. l. 10); Cd as in text. $K_{2.3}$ तुमले; $K_4$ $\tilde{N}_{1.2}$ B (except $B_5$) दिवसे; Cd as in text. — $^{b}$) $K_{0.2.4}$ $B_5$ $D_2$ S सुस-. $\tilde{N}_3$ $V_1$ B D (except $D_2$) तदा; $T_1$ तथा (for विभो). — $^{c}$) $T_2$ $G_{2.4.5}$ अदीपयद्भीमसेनः; M तनूनपाद्भयाद्भीमः. — $^{d}$) Ko यत्र शेते (by transp.). — After 9, $K_4$ $\tilde{N}$ $V_1$ B D $T_1$ ins.:

1477* ततो जतुगृहद्वारं दीपयामास पाण्डवः ।
समन्ततो ददौ पश्चादग्निं तत्र निवेशने ।
ज्ञात्वा तु तद्गृहं सर्वमादीप्तं पाण्डुनन्दनाः ।
सुरङ्गां (!) विविशुस्तूर्णं मात्रा सार्धमरिंदमाः ।

[ (L. 3) $Dn_3$ दीप्तं सर्वतः (for सर्वमादीप्तं). — (L. 4) $\tilde{N}_{1.3}$ $V_1$ Dn सुरुंगां. — For $T_1$ see below. ]

— On the other hand, S ($G_1$ om. line 1; for $T_1$ see

G. 1. 5631 B. 1. 148. 12 K. 1. 150. 18

ततः प्रतापः सुमहाञ्शब्दश्चैव विभावसोः ।
प्रादुरासीत्तदा तेन बुबुधे स जनव्रजः ॥ १०

पौरा ऊचुः ।

दुर्योधनप्रयुक्तेन पापेनाकृतबुद्धिना ।
गृहमात्मविनाशाय कारितं दाहितं च यत् ॥ ११
अहो धिग्धृतराष्ट्रस्य बुद्धिर्नातिसमञ्जसी ।
यः शुचीन्पाण्डवान्बालान्दाहयामास मन्त्रिणा ॥१२
दिष्ट्या त्विदानीं पापात्मा दग्धोऽयमतिदुर्मतिः ।
अनागसः सुविश्वस्तान्यो ददाह नरोत्तमान् ॥ १३

वैशंपायन उवाच ।

एवं ते विलपन्ति स्म वारणावतका जनाः ।
परिवार्य गृहं तच्च तस्थू रात्रौ समन्ततः ॥ १४
पाण्डवाश्चापि ते राजन्मात्रा सह सुदुःखिताः ।
बिलेन तेन निर्गत्य जग्मुर्गूढमलक्षिताः ॥ १५
तेन निद्रोपरोधेन साध्वसेन च पाण्डवाः ।
न शेकुः सहसा गन्तुं सह मात्रा परंतपाः ॥ १६
भीमसेनस्तु राजेन्द्र भीमवेगपराक्रमः ।
जगाम भ्रातॄनादाय सर्वान्मातरमेव च ॥ १७
स्कन्धमारोप्य जननीं यमावङ्केन वीर्यवान् ।
पार्थौ गृहीत्वा पाणिभ्यां भ्रातरौ सुमहाबलौ ॥१८
तरसा पादपान्भञ्जन्महीं पद्भ्यां विदारयन् ।
स जगामाशु तेजस्वी वातरंहा वृकोदरः ॥ १९

इति श्रीमहाभारते आदिपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

---

below) ins. after 9:

1478* पूर्वमेव बिलं शोध्य भीमसेनो महामतिः ।
पाण्डवैः सहितां कुन्तीं प्रावेशयत तद्बिलम् ।
दत्त्वाग्निं सहसा भीमो निर्जगाम बिलेन सः ।

[ T1 ins. lines 1–2 before 1477*, and line 3 after 1477*. — (L. 1) T1 सर्वमेव. — (L. 2) M5 °वैः सहिता कुंती प्रविष्टा च बिलं महत्. — (L. 3) After the prior half, G1 ins.:

1479* गृहे तत्परितः सुधीः ।
गृहस्थं द्रव्यसंजातं. ]

10 a) T2 G प्रवाते (G1 °भाते; G3 °चक्रे); M3.5 °वातः; M7.8 °पातः. — b) K0.2 D5 चापि (for चैव). — c) K Ñ1 D5 ततस्तेन; S (except T1) ततः सर्वो (G3 °र्वे). — d) K2 स जनोखिलः; D4 स जनः पुरः; D5 सकलो जनः; G1 नागरो जनः. — After 10, Ñ2.3 V1 B D T1 ins.:

1480* तदवेक्ष्य गृहं दीप्तमाहुः पौराः कृशाननाः ।
[ Dn2.n3 D5 कृशालुना. ]

11 S om. उवाच (G3 om. the ref.). — After the ref., D4 marg. sec. m. ins.:

1481* अहो धिक्पाण्डवाः सर्वे दह्यन्त इति चुक्रुशुः ।
चक्रुश्च परमं यत्नं नरास्तेषां प्रमोक्षणे ।
ततस्ते जातुषं वेश्म ददृशू रोमहर्षणम् ।
पाण्डवानां विनाशाय विहितं क्रूरकर्मणा ।

— d) All MSS. except Ś1 K2–4 D4.5 M च तत्. — After 11, D4 marg. sec. m. ins.:

1482* पुरोचनेन पापेन दुर्योधनहितेप्सया ।

12 a) Ñ3 हा हा (for अहो). — b) Ñ3 V1 Da D1 °समंजसा. — c) Ñ2 V1 B D (except D5) T1 पांडुदायादान् (for पाण्डवान्बा°). — d) K2 M शत्रुभिः; K3 Ñ1.2 V1 B D T1 शत्रुवत् (D6 मंत्रिणं); Ñ3 वह्निभिः; T2 G निर्घृणः.

13 b) Ś1 K1 D5 अपि; K2.3 Ñ1 Da1 D1 T1 इति (for अति-). T2 G M दग्ध्वा दग्धः पुरोचनः.

14 Ś1 K1 D2 S om. उवाच; Ñ2.3 B1 om. the ref. — a) K3.4 विलपंतो वै. — cd) K3 D5 transp. तच्च and तस्थुः. S (except T1) °हं सर्वे रात्रौ तस्थुः समं°.

15 a) Ñ1.2 V1 B D (except D5) T G सर्वे (for राजन्). — b) K0.2.3 Ñ1.2 V1 B D T1 G3 सह मात्रा (by transp.). K3 S (except T1) परंतपाः (cf. 16d). — c) K3 निष्क्रम्य; Ñ1 ते जग्मुः; S (except T1) महता; — d) Ñ1.2 तत्र; B3.5 ययुर् (for जग्मुर्). B D (except Da) T1 द्रुतम्; T2 G M वनम् (for गूढम्).

16 a) S (except T1 M3) ते तु. Ś1 K D5 नित्योपरो°. Ñ3 तेभ्योपरो°; T2 G निद्रावि(G1.3.6 °नि)रो°; Cd as in text. — b) Ś1 (by corr.) K1 तु (for च). — c) K0.2 S (except T1) त्वरितं (K0.2 G3.6 M3 °ता). — d) K0.2 Ñ3 D4 मात्रा सह (by transp.). Ś1 K1.4 निद्रया (Ś1 सहसा) च प्रवृद्धया; S (except T1) सह कुंत्या नराधिप (cf. v. l. 15).

17 cd) M om. 17cd. T2 G transp. भ्रातॄन् and सर्वान्.

18 G2 om. 18; G4 reads it in marg. — b) K3 (m as in text) G3 अंसेन (for अङ्के°). — d) Ñ V1 B D (except D5) T G1.5 सुमहाबलः; G1 °महद्बली. — After 18, T1 ins. 1483*, G2.4 only line 4 thereof.

19 a) V1 B (except B5) D (except D4.5) T1 उरसा. — b) B5 विचालयन्. — T1 G2.4 (the two

## १३७

वैशंपायन उवाच ।
अथ रात्र्यां व्यतीतायामशेषो नागरो जनः ।
तत्राजगाम त्वरितो दिदृक्षुः पाण्डुनन्दनान् ॥ १
निर्वापयन्तो ज्वलनं ते जना ददृशुस्ततः ।
जातुषं तद्गृहं दग्धममात्यं च पुरोचनम् ॥ २
नूनं दुर्योधनेनेदं विहितं पापकर्मणा ।
पाण्डवानां विनाशाय इत्येवं चुक्रुशुर्जनाः ॥ ३
विदिते धृतराष्ट्रस्य धार्तराष्ट्रो न संशयः ।
दग्धवान्पाण्डुदायादान्न ह्येनं प्रतिषिद्धवान् ॥ ४
नूनं शांतनवो भीष्मो न धर्ममनुवर्तते ।
द्रोणश्च विदुरश्चैव कृपश्चान्ये च कौरवाः ॥ ५
ते वयं धृतराष्ट्रस्य प्रेषयामो दुरात्मनः ।
संवृत्तस्ते परः कामः पाण्डवान्दग्धवानसि ॥ ६
ततो व्यपोहमानास्ते पाण्डवार्थे हुताशनम् ।

C. 1. 5562
B. 1. 150. 7
K. 1. 162. 9

---

latter om. lines 1–3) ins. after 18: G1, after 19^ab:

1483* बिलेन योजनं दूरं गत्वा सिद्धपदे शुभे ।
निश्चेरुर्वटमूले ते निद्रामुद्रितलोचनाः ।
बिलान्निर्गत्य सहसा भ्रातॄन्मातरमेव च ।
गङ्गातीरवनं प्राप्य वहन्प्रायात्स मारुतिः ।,

G1 thereafter *repeating* 19^ab. — ^c) Ñ1 अथ; Da G2 सु॰ (for आशु). K2.4 जगामाशु (K4 ॰थ) स ते॰. — ^d) Ś1 K4 Dn2.n3 G1 ॰रंहो. — After 19, G1 ins.:

1484* अव्यक्तवनमार्गः सन्भञ्जन्गुल्मलतागुरून् ।

Colophon. *Major parvan:* T2 G M संभव॰ (for आदि॰). — *Sub-parvan:* Ś1 K Ñ3 Da2 D1.5 M3.5 जतुगृह(D1 om. गृह)दाह (K3 ॰हदीपनं); Ñ1.2 V1 Da1 Dn1.n3 T1 जतुगृह; B D2.4 जातुष. — *Adhy. name:* K0.4 भीमसेनविक्रमः. — *Adhy. no.* (figures, words or both): B1 145; Dn3 147; D4m 150; T1 143; T2 G5.6 94; G1.2 95; G3.4 M 93. — *S'loka no.:* Dn M8 22. — *Aggregate s'loka no.:* Dn3 5843.

☞ After adhy. 136, K4 Ñ V1 B D M ins. an additional adhy. given in App. I (No. 85); T G ins. this passage (*without* the colophon) after 1. 137. 17 (*repeating* at the end 17^cd); but Cd (like Ś1 K0–3) ignores the adhy. *completely*.

[ The details of the colophon (om. in D5) of this *additional* adhy. are as follows. *Major parvan:* M संभव॰ (for आदि॰). — *Sub-parvan:* Ñ1.2 V1 Dn D1.2 जतुगृह; Ñ3 Da M5–8 जतुगृहदाह; B D4 जातुष. — *Adhy. name:* Ñ1.2 V1 गंगोत्तरणं. — *Adhy. no.* (figures, words or both): B1 146; Dn3 148; D4m 151; M 94. — *S'loka no.:* Dn1.n3 M8 14. — *Aggregate s'loka no.:* Dn3 5857. ]

### 137

1 Ś1 K1.2 D2 S (except G3) om. उवाच (G4 om. the ref.). — ^a) B3 राज्यामती॰. — ^b) K0.4 स सर्वो; K3 सशेषो; Ñ3 सर्वशो; S (except T1 G3) सशोको (for अशेषो).

2 ^a) M6–8 निर्वाण॰. — ^b) K4 G1 तदा (for जना). K1 Ñ3 S तदा (G1 जनाः; T1 as in text).

3 Before 3, B3 ins. पौरा ऊचुः. — ^a) G3 एवं (for इदं). — ^b) K3 कारितं (for विहि॰). — ^cd) G3 विनाशार्थं; M7 विचाशाय. Ś1 K2.4 Ñ V1 B (B3 marg.) D (except D5) T1 M ॰शायेत्येवं ते (Ś1 च; K4 तत्) (for ॰शाय इत्येवं).

4 ^a) D3 विदितो; S (except T1) ॰तं. — ^b) M6–8 धार्तराष्ट्रैर्. — ^c) M6–8 पांडवान् (for दग्धवान्). K3 पांडुतनयान्; T2 G पांडवान्बालान्. Ś1 दग्धान्पांडवदायादान्. — ^d) B6 Da T1 एवं; D5 एते; T2 G एतत् (for एनं).

5 ^a) Ñ1.3 M3.5 ॰नवो धीमान्; Ñ2 V1 B D (except D5) T1 ॰नवोपीह. — ^b) Ś1 K [ऽ]प्यधर्मम् (K3 अधर्मम्). — ^cd) Ś1 द्रोणश्चैव कृपश्चैव. Ś1 विदुरोन्ये च कौरवाः; K3 कृपश्चान्येपि बांधवाः. — After 5, G1.2 ins.:

1485* नावेक्षन्ते इतं धर्मं धर्मज्ञा अप्यहो विधे ।
श्रुतवन्तोऽपि विद्वांसो घनवद्वशगा अहो ।
साधूननाथान्धर्मिष्ठान्सत्यव्रतपरायणान् ।
नावेक्षन्ते महान्तोऽपि दैवं तेषां परायणम् ।

6 ^a) T2 G धृतराष्ट्राय. — ^b) D5 M प्रेषयाम. T2 G दुरात्मने. — After 6^ab, K3 reads 9^cd (v. l. अग्निनिर्दग्धान्), repeating it in its proper place. — ^c) K0.2 संभृतस्ते; G6 ॰तं ते. Ś1 महान्कामः; G3.6 परं कामं. K1 संप्रवृत्तो महाकामः.

7 ^a) G1.2 ततो व्यपोह्य॰; G3 तवाप्यपोह॰; Cd as in text. — ^b) K4 दह्यमाना हुताशने. — ^d) K3.4 D3

C. 1. 5862
S. 1. 150. 7
K. 1. 162. 9

निषादीं ददृशुर्दग्धां पञ्चपुत्रामनागसम् ॥ ७
खनकेन तु तेनैव वेश्म शोधयता बिलम् ।
पांसुभिः प्रत्यपिहितं पुरुषैस्तैरलक्षितम् ॥ ८
ततस्ते प्रेषयामासुर्धृतराष्ट्रस्य नागराः ।
पाण्डवानग्निना दग्धानमात्यं च पुरोचनम् ॥ ९
श्रुत्वा तु धृतराष्ट्रस्तद्राजा सुमहदप्रियम् ।
विनाशं पाण्डुपुत्राणां विललाप सुदुःखितः ॥ १०
अद्य पाण्डुर्मृतो राजा भ्राता मम सुदुर्लभः ।
तेषु वीरेषु दग्धेषु मात्रा सह विशेषतः ॥ ११
गच्छन्तु पुरुषाः शीघ्रं नगरं वारणावतम् ।
सत्कारयन्तु तान्वीरान्कुन्तिराजसुतां च ताम् ॥ १२
कारयन्तु च कुल्यानि शुभ्राणि च महान्ति च ।
ये च तत्र मृतास्तेषां सुहृदोऽर्चन्तु तानपि ॥ १३
एवंगते मया शक्यं यद्यत्कारयितुं हितम् ।
पाण्डवानां च कुन्त्याश्च तत्सर्वं क्रियतां धनैः ॥ १४
एवमुक्त्वा ततश्चक्रे ज्ञातिभिः परिवारितः ।
उदकं पाण्डुपुत्राणां धृतराष्ट्रोऽम्बिकासुतः ॥ १५
चुक्रुशुः कौरवाः सर्वे भृशं शोकपरायणाः ।

---

अनागसां; S (except T1 G4) °सीं. — G1-4 (G3 om. line 2) ins. after 7: T1, after 8:

1486* इतः पश्यत कुन्तीयं दग्धा शेते यशस्विनी ।
　　पुत्रैः सहैव वार्ष्णेयी हन्त पश्यत नागराः ।

8 a) Ś1 K0.1 च (for तु). — b) Ś1 K1 वेश्म गोपयता; K0 तदेवाच्छादितं. — c) Some MSS. पांशुभिः. Ś1 K1.4 G2 M5 प्रत्यभि(K1 °वि)हितं; Ñ2 V1 B D (except D4.5) T1 पिहितं तच्च (B Da तत्र; D2 तं तु); G3 प्रेक्ष्य पिहितं; Cd as in text. — d) K0 Ñ1.2 V1 B D T1 G3 न (for अ-). — After 8, T1 ins. 1486*; while K4 ins.:

1487* इत्येव सर्वे शोचन्तः पृथक्चैव तथाब्रुवन् ।

9 a) Ñ2 सं- (for ते). Ñ2 V1 B D ज्ञापया°. — b) B5 °राष्ट्रं च. — K3 reads $9^{cd}$ (for the first time) after $6^{ab}$, repeating it here. — c) K3 (both times) अग्निनिर्दग्धान्.

10 a) Ś1 K1 च (for तु). K3 Dn3 D1 °राष्ट्रस्य. B5 D5 G2 M6-8 तु; G1 अपि; G5 तं; M5 स (for तद्). — c) D5 निधनं; M विनाशे. T2 G पांडवेयानां (G5 पांडवानां तु). — After 10, T1 G1.2.4 ins.:

1488* अन्तर्हृष्टमनाश्चासौ बहिर्दुःखसमाकुलः ।
　　अन्तःशीतो बहिश्चोष्णो ग्रीष्मेऽगाधह्रदो यथा ।

11 Before 11, G1 M8 ins. धृतराष्ट्रः. — ab) Ñ3 भ्राता राजा (by transp.). Ñ2 V1 Dn मम भ्राता (by transp.). B6 D (except D2.4.5) महायशाः (for सुदु°). — c) G1.2.4.5 दग्धे° वीरे° (by transp.). — d) K3 सह मात्रा (by transp.). Ś1 K (except K3) D5 महात्मसु.

12 c) K3 Ñ1 Dn3 D4 S संस्कारयंतु. K4 तान्सर्वान्. — d) Ñ2 B (except B6) Da D1.2.4 कुंतिभोज°; S कुंतीं राज°. K0 Ñ3 तथा; B5 G6 तु तां; G1 अपि.

13 T2 G transp. $13^{ab}$ and $13^{cd}$. — a) G1 कार्याणि; M दारूणि; Cd कुल्या° (as in text). — b) Ñ2.3 V1 B D (except D5) T1 G3 M शुभानि. K3 Ñ V1 B D T1 G3-5 बृहंति. — d) K1 अपि तु; Ñ3 V1 B Da Dn D1.2.4 T1 यांतु; G1 तांस्तु; G3 बंधु (for अर्चन्तु). D5 सुहृदानां च सर्वशः. — After 13, T G ins.:

1489* मम दग्धा महात्मानः कुलवंशविवर्धनाः ।

14 b) K4 यथा कारयितुं; G1 यद्यत्कार्यं प्रियं. G6 वरं; M5 हि तत्. — c) D5 कुंत्या वा. — d) Ś1 K1 सर्वं तत् (by transp.). M इति (for धनैः). — After 14, D4 (marg. *sec. m.*) S ins.:

1490*　　　　वैशंपायनः ।
　　समेतास्तु ततः सर्वे भीष्मेण सह कौरवाः ।
　　धृतराष्ट्रः सपुत्रश्च गङ्गामभिमुखा ययुः ।
　　एकवस्त्रा निरानन्दा निराभरणवेष्टनाः ।
　　उदकं कर्तुकामा वै पाण्डवानां महात्मनाम् ।

[ T1 M om. वैशं°. — After line 1, G1.2 ins.:

1491* सपुत्रबान्धवामात्यास्त्यक्तमङ्गलवाहनाः ।
　　अच्छत्राश्चान्तरा राजन्गङ्गामभिमुखा ययुः ।,

the last pāda *repeating* the posterior half of line 2. ]

15 a) S (except G3) एवं गत्वा. — b) K3 स्वसुतैः; G1 बंधुभिः. — c) T2 G °पुत्रेभ्यो. — d) G1 °राष्ट्रो महामनाः.

16 a) K0.1.3 Ñ1.3 D5 T2 G (except G1.5) M (except M5) °शुः कुरवः; Ñ2 V1 B Da Dn D1.2.4 T1 रुरुदुः सहिताः. — After $16^{ab}$, K4 Ñ V1 B D T1 ins.:

1492* हा युधिष्ठिर कौरव्य हा भीम इति चापरे ।
　　हा फाल्गुनेति चाप्यन्ये हा यमाविति चापरे ।
　　कुन्तीमार्तांश्च शोचन्त उदकं चक्रिरे जनाः ।
　　अन्ये पौरजनाश्चैवमन्वशोचन्त पाण्डवान् ।

[ (L. 1) Ñ1 कौंतेय (for कौर°). — (L. 2) K4 हा धनंजय हा कुंति. D4 फल्गुनेति (by corr.). — After line 2, K4 ins.:

1493* अहो रूपं तु लावण्यमथ विद्याबलं मुहुः ।
　　औचित्यमथवा प्रेम किं किं शोचामहे वयम् ।

विदुरस्त्वल्पशश्चक्रे शोकं वेद परं हि सः ॥ १६
पाण्डवाश्चापि निर्गत्य नगराद्वारणावतात् ।
जवेन प्रययू राजन्दक्षिणां दिशमाश्रिताः ॥ १७
विज्ञाय निशि पन्थानं नक्षत्रैर्दक्षिणामुखाः ।
यतमाना वनं राजन्गहनं प्रतिपेदिरे ॥ १८
ततः श्रान्ताः पिपासार्ता निद्रान्धाः पाण्डुनन्दनाः ।
पुनरूचुर्महावीर्यं भीमसेनमिदं वचः ॥ १९
इतः कष्टतरं किं नु यद्वयं गहने वने ।
दिशश्च न प्रजानीमो गन्तुं चैव न शक्नुमः ॥ २०
तं च पापं न जानीमो यदि दग्धः पुरोचनः ।
कथं नु विप्रमुच्येम भयादस्मादलक्षिताः ॥ २१
पुनरस्मानुपादाय तथैव व्रज भारत ।
त्वं हि नो बलवानेको यथा सततगस्तथा ॥ २२
इत्युक्तो धर्मराजेन भीमसेनो महाबलः ।
आदाय कुन्तीं भ्रातॄंश्च जगामाशु महाबलः ॥ २३ C. 1. 5891 B. 1. 150. 29 K. 1. 161. 29

इति श्रीमहाभारते आदिपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

---

इत्येवं बहु भाषन्तो रुरुदुर्नागरा भृशम् । ]
— $^{cd}$) T2 G °स्त्वल्पशोकं च (G2.4 °कश्च) चक्रे. T2 G2-6 M3.5 वेद हि तत्परं; G1 M6-8 वेद हितं परं. — After 16, S (except G1.2) ins. a passage given in App. I (No. 86).

17 $^{a}$) K3 om. च. Ś1 K1 निष्क्रम्य; K0.2.4 Ñ1.3 D5 G3.6 M8 °गैम्य. — After 17$^{ab}$, K4 Ñ V1 B D (except D5) ins.:

1494* नदीं गङ्गामनुप्राप्ता मातृषष्ठा महाबलाः ।
दाशानां भुजवेगेन नद्याः स्रोतोजवेन च ।
वायुना चानुकूलेन तूर्णं पारमवाप्नुवन् ।

[ (L. 1) K4 °मनुप्राप्य मात्रा सह परंतपाः (cf. 1. 136. 16$^{d}$). — (L. 2) B3 पंचानां (m दाशानां); Da D1 दासानां. K4 भुजवीर्येण. ]
— $^{cd}$) K4 T G repeat 17$^{cd}$ (K4 with v. l.). T2 G वीरा (for राजन्). G1.2 °माश्रिताः. K4 (first time) त्यक्त्वा नावं ययुः पार्थाः (for °). Ñ2.3 V1 B D (except D5) ततो नावं परित्यज्य प्रययुर्दक्षिणां दिशं. — After 17, T G ins. a passage given in App. I (No. 85), followed by a *repetition* of 17$^{cd}$; cf. the note at the end of the previous adhy.

18 $^{a}$) Ś1 K (except K4) Ñ1 D5 M निदाघे; T G (except G1.2) विहाय (for विज्ञा°). T निद्रां (for निशि). — $^{b}$) K1 T2 G3.6 °मुखैः. Ñ2.3 V1 B D T1 नक्षत्रगणसूचितं (D5 नाविंदन्दक्षिणामुखाः). — K3 om. 18$^{c}$-19$^{b}$. — $^{c}$) T2 G5.6 गाहमाना; G3 जानमाना. G1.2 वनाद्वनं तदा राजन्. — $^{d}$) G4 गह्वरं; M6-8 गंतुं न (for गह°).

19 K3 om. 19$^{ab}$ (cf. v. l. 18). — $^{a}$) T2 G4.5 तत्र श्रांताः; G1 (by transp.) श्रांतास्ततः. — $^{b}$) Ñ1.3 निद्रार्ताः; T2 G4.5 प्रस्थिताः; G3 निषण्णाः; G6 M निःसृताः. G1.2 क्षुधिता भयकातराः. — $^{d}$) K0 D5 °सेनमरिंदमं.

20 $^{a}$) K0.4 D2 T2 G1-6 अतः; Ñ1 D5 इदं (for इतः). K2.3 Ñ V1 Da1 Dn D1 G1.2 किं तु; K4 किंचिद्; D5 वीर. — $^{c}$) B D T1 विजानीमो. Ś1 K1 दिशश्चैव न जा°; G3 देशान्वयं प्रजा°. — $^{d}$) G1.2 चैते (for चैव).

21 $^{b}$) Ś1 K1 यदि दग्धं प्ररोचनं; G1.2 दग्धो (G2 दंडो) वा न पुरो°. — $^{c}$) Ś1 न; K1-3 Ñ2 V1 B (except B5) D (except Da2) T1 M7 तु; K4 Ñ1 च (for नु). Ś1 प्रतिमुच्येम; K4 विप्रमुच्येत्स. — $^{d}$) Ñ1.3 वयम् (for भयाद्).

22 $^{a}$) T2 G शीघ्रम् (G3 श्रांतान्) (for पुनर्). — $^{b}$) G1.2 त्वरावान् (for तथै°). — $^{d}$) G3 अस्मान्नातुमिहार्हसि.

23 $^{ab}$) K3 °क्तो भीमसेनस्तु धर्मराजेन सद्बलः. — $^{c}$) Ś1 K1.2.4 पृष्ठमारोप्य बलवान्. — $^{d}$) B3 महाजवः; G1.2 स पावनिः. K1 जगाम भरतर्षभ; K3 D5 M5 जगाम सु(M3.5 स)महा°.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K0-2.4 Ñ3 Da D5 M5 जतुगृहदाह; Ñ1.2 V1 B6 Dn1.n2 D1.2 T1 जतुगृह (T1 *int. lin.* संभव); B1.5 जातुप. — *Adhy. name:* K0.4 वनप्रवेशः; K3 पांडवपलायनं; Ñ1.2 V1 पांडववनप्रवेशः; M6-8 वनगमनं. — *Adhy. no.* (figures, words or both): B1 147; Dn2 149; D4m 152; T1 146; T2 G5.6 M 96; G1.2 97; G3.4 95. — *S'loka no.:* Dn 26; M3 7. — *Aggregate s'loka no.:* Dn2 5883.

## 138

1 Ś1 K1.3 D2.3 S om. उवाच. The sequence of 1-2 in K4 is: 1$^{cd}$, 2$^{cd}$, 1$^{ab}$, 2$^{ab}$. — $^{a}$) Ś1 K तस्य विक्रमतस्तूर्णम्; Ñ2 V1 B D G3 तेन विक्रममाणेन (D5

## १३८

C. 1. 5882
B. 1. 151. 1
K. 1. 163. 1

वैशंपायन उवाच ।
तेन विक्रमता तूर्णमूरुवेगसमीरितम् ।
प्रववावनिलो राजञ्शुचिशुक्रागमे यथा ॥ १
स मृद्नन्पुष्पितांश्चैव फलितांश्च वनस्पतीन् ।
आरुजन्दारुगुल्मांश्च पथस्तस्य समीपजान् ॥ २
तथा वृक्षान्भञ्जमानो जगामामितविक्रमः ।
तस्य वेगेन पाण्डूनां मूर्च्छेव समजायत ॥ ३
असकृच्चापि संतीर्य दूरपारं भुजप्लवैः ।
पथि प्रच्छन्नमासेदुर्धार्तराष्ट्रभयात्तदा ॥ ४
कृच्छ्रेण मातरं त्वेकां सुकुमारीं यशस्विनीम् ।
अवहत्तत्र पृष्ठेन रोधःसु विषमेषु च ॥ ५
आगमंस्ते वनोद्देशमल्पमूलफलोदकम् ।
क्रूरपक्षिमृगं घोरं सायाह्ने भरतर्षभाः ॥ ६
घोरा समभवत्संध्या दारुणा मृगपक्षिणः ।

---

तस्यातिक्रमतस्तूर्णम्). — ᵇ) Ko.₂₋₄ Ñ1 D5 T2 G4-6 M °समीरितः. Ś1 K1 उरु(K1 मद)वेगसमन्वितः. — After 1ᵃᵇ, K4 Ñ2.3 V1 B D (except D5) T1 ins.:

1495* वनं सवृक्षविटपं व्याघूर्णितमिवाभवत् ।

— ᶜ) D2 मारुतो (for अनिलो). Ñ2.3 V1 B Da Dn D1.4 T1 जंघावातो ववौ चास्य. — ᵈ) G1-3 M6.8 शुचिः. Ś1 K1 D5 Cd °शुक्रागमे; Ko.2 °शक्रा°. — After 1, K4 Ñ3.3 V1 B D (except D5) T1 ins.:

1496* आवर्जितलतावृक्षं मार्गं चक्रे महाबलः ।

2 For K4 cf. v. l. 1 also. — ᵃ) K4 Ñ1 समृद्ध-; Ñ2 B1 m. 3. 5 D3.4.5 समृद्धा(B5m °द्धा)न्; B1.6 स मृदून्. Ko D5 वृक्षान् (for चैव). — ᵇ) T2 G (except G3) फलिनश्च. Ko D5 समंततः (for वन°). — ᶜ) K3 अभंजन् (for आरुजन्). Ś1 नव-; Ko.3.4 याति; K1 घन-; K2 एव; D5 अथ (for दारु-). T2 G4.5 °गुल्मं च. Ñ3 V1 B Da Dn D1.3.4 T1 अवरुज्य (Ñ3 B1.5.6 Da D1.2 °ह्य) ययौ गुल्मान्. — ᵈ) G3 पार्थः; M5 फलः (for पथः). Ko D5 T2 G M3 समीपगान्. — After 2, Ñ2.3 V1 B D (except D5; D3 om. line 2) T1 ins.:

1497* स रोपित इव क्रुद्धो वने भञ्जन्महाद्रुमान् ।
　　त्रिःप्रस्तुतमदः शुष्मी षष्टिवर्षो मतङ्गराट् ।
[ (L. 2) B5 यथा त्रिप्रस्तुतमदः (for the prior half.). ]

3 ᵃᵇ) G1.2 वृक्षांस्तथा (by transp.); G3 तदा वृक्षान्. Ñ2.3 V1 B D (except D5) T1 गच्छतस्तस्य वेगेन तार्क्ष्यमारुतरंहसः. — After 3ᵃᵇ, G1.2.4 ins.:

1498* तस्य कक्षद्वयोद्भूतपवनध्वनिरुत्थितः ।
　　शुम्भिताशेषदिग्भागः शुश्रुवेऽतिभयंकरः ।

— ᶜ) T2 G M पंचानां (for पाण्डू°). Ñ2.3 V1 B D (except D5) T1 भीमस्य पांडुपुत्राणां. — ᵈ) D5 मूर्छा च.

4 ᵃ) G1.2 च समुत्तीर्य; M चापि संतार्य. — ᵇ) K D5 दूरपारां (see below). T2 G4-6 पारावरं भुजप्लवाः; G1.2 भुजप्लावो (G2 °वा) नदीर्वने. — After 4ᵃᵇ, Ś1 K D5 ins.:

1499* उत्ततार नदीं गङ्गां विहंगासंगवाहिनीम् ।
　　[ Ko.3.4 °संगमालिनीं; D5 °संगपक्षिनीं. ]

On the other hand, G1.2 ins. after 4ᵃᵇ:

1500* मातरं च वहन्भ्रातृनश्रमेण समीरजः ।

— ᶜ) T2 G पार्थाः (G2.6 पथा) (for पथि). T2 G5 प्रच्छन्नमापेदुः; G1 °या चेरुः; G2 °मावेदे; G3 °रूपे तु; G4.6 °मापेतुः; M °मासाद्य. — ᵈ) K2 D5 °भयार्दिताः.

5 ᵃ) Ko.2 Ñ1.3 चैकां; Ñ2 V1 B D T1 चैव; T2 G3-6 M3.5 ह्येकां; M6-8 ह्येनां. — ᶜ) Ś1 Ko.1.4 आ(Ko.4 अ)वहन्. Ñ2 V1 B D T1 G3 स तु (for तत्र). — ᵈ) D5 समेषु; Cd रोधःसु (as in text).

6 ᵃ) Ñ2 V1 B D T1 अगम(D5 °च्छ)न्च; T2 G आगम्य च. Ñ1.3 M अगमन्नथ चोद्देशं. — ᵈ) Ś1 K (except Ko) पुरुषर्षभाः; Ñ2 V1 B D T1 °र्षभ. T2 G सायं समुपचक्रमुः.

7 ᵃ) K3 काष्ठा (for संध्या). — ᶜ) K3.4 अप्रसन्ना दि°. — ᵈ) Ko D2.5 तथार्तवैः; K3 तथाविधैः; G3 ततस्तदा (for अनार्तवैः). T2 G4-6 शनैरासंस्ततस्तदा (G4 °तः); G1.2 अंधकारे द्रुतं गताः. — K4 Ñ2.3 V1 B D (except D5) T1 ins. after 7: T2 G, after 8:

1501* शीर्णपर्णफलै राजन्बहुगुल्मक्षुपैर्द्रुमैः ।
　　भग्नावभुग्नभूयिष्ठैर्नानाद्रुमसमाकुलैः ।
[ (L. 1) T2 G वृक्षैः (for राजन्). B6 °गुल्मफलैर्द्रुमैः; T2 G4.5 °गुल्मावृत°; G1.2 °गुल्मलता°; G3 °गुल्मक्षुर°; G6 °गुल्मक्षुप°. — (L. 2) K4 B (except B1) Da D1 भग्नावभग्न°; T1 भग्नायतन°; T2 G4-6 प्रभग्नायन°; G1.2 प्रभग्नशाखा°. T G श्व(G1.2 श्वा)दंष्ट्रबहुलैः (T G3.5.6 °ले) तदा (T2 G1.2.4.5 सदा) (for नाना°). For G1.2.4

अप्रकाशा दिशः सर्वा वातैरासन्ननार्तवैः ॥ ७
ते श्रमेण च कौरव्यास्तृष्णया च प्रपीडिताः ।
नाशक्नुवंस्तदा गन्तुं निद्रया च प्रवृद्धया ॥ ८
ततो भीमो वनं घोरं प्रविश्य विजनं महत् ।
न्यग्रोधं विपुलच्छायं रमणीयमुपाद्रवत् ॥ ९
तत्र निक्षिप्य तान्सर्वानुवाच भरतर्षभः ।
पानीयं मृगयामीह विश्रमध्वमिति प्रभो ॥ १०
एते रुवन्ति मधुरं सारसा जलचारिणः ।
ध्रुवमत्र जलस्थायो महानिति मतिर्मम ॥ ११
अनुज्ञातः स गच्छेति भ्रात्रा ज्येष्ठेन भारत ।
जगाम तत्र यत्र स्म रुवन्ति जलचारिणः ॥ १२
स तत्र पीत्वा पानीयं स्नात्वा च भरतर्षभ ।
उत्तरीयेण पानीयमाजहार तदा नृप ॥ १३
गव्यूतिमात्रादागत्य त्वरितो मातरं प्रति । C. 1. 5901 B. 1. 151. 20 K. 1. 163. 25

---

cf. v. l. 8 also. ]

8 $^{a}$) G3 ते क्रमेण. G8 M6–8 तु (for च). D5 T2 G3–6 कौंतेयास्. Ñ1 तेन श्रमेण कौ°; G1.2 श्रमेण महता चैव. — $^{b}$) K0 Dn3 T2 G3.5.6 M3.5 तृषया. G1.2 क्षुत्तृष्णाभ्यां च पीडिताः. — $^{c}$) K2.4 तथा; T2 G (except G3) ततो. — $^{d}$) G1.2 सु- (for च). K3 चात्यनल्पया (for च प्र°). — After 8, T2 G ins. 1501*. — G1.2.4 cont.:

1502* अतीव गहनं घोरं दुर्विज्ञेयपथं क्वचित् ।

— K4 Ñ2.3 V1 B D T1 (om. lines 5–6) M ins. after 8: T2 G3.5.6, after 1501*: G1.2.4, after 1502*:

1503* न्यविशन्त हि ते सर्वे निरास्वादे महावने ।
ततस्तृषापरिक्षामा कुन्ती पुत्रानथाब्रवीत् ।
माता सती पाण्डवानां पञ्चानां मध्यतः स्थिता ।
तृष्णया हि परीतास्मि पुत्रान्भृशमथाब्रवीत् ।
तच्छ्रुत्वा भीमसेनस्य मातृस्नेहात्प्रजल्पितम् । [5]
कारुण्येन मनस्तप्तं गमनायोपचक्रमे ।

[(L. 1) D5 ततः; G3 वने; M तदा (for हि ते). T2 G4–6 M तत्र (for सर्वे). K4 प्राविशंस्तत्र ते सर्वे; G1.2 तत्र ते प्राविशन्घोरे. G3 वने तदा (for महा°). — T2 G ins. after line 1: T1, after line 4:

1504* राज्यामेव गतास्तूर्णं चतुर्विंशतियोजनम् ।

— (L. 2) Ñ3 Dn D1 G1 °परिक्रांता; T2 G3–6 M °म्लाना. T2 G M कुंती वचनमब्रवीत्. — (L. 4) Cf. line 2 above. Dn1 G3.6 तृषया. S (except T1) परितप्ता(G5 °वीता)स्मि (G1.2 °हं). K4 पुत्रका भृशमत्र वै; S अ(T1 ह्य-; M वि)नाथेव (G3 अकाले च) महावने. — After line 4, T1 ins. 1504*; while T2 G ins.:

1505* इतः परमहं शक्ता न गन्तुं च पदात्पदम् ।
शयिष्ये वृक्षमूलेऽत्र धार्तराष्ट्रा हरन्तु माम् ।
श्रृणु भीम वचो मह्यं तव बाहुबलात्पुरः ।
स्थातुं न शक्ताः कौरव्याः किं बिभेषि वृथा सुत ।

— (L. 5) D1 °सेनश्च; D5 T2 G °सेनस्तु (G1.2 °नः स). D5 मातुर्दुःखेन दुःखितः; T2 G मातृवाक्यप्रकंपितः; M मातृवाक्यमुदीरितं. — (L. 6) D5 परीतात्मा; T2 G मनश्चक्रे (for मनस्तप्तं). T2 G4–6 गमनायाथ सत्वरं; G1.2 गमनाय वृकोदरः; M दुःखेन च विशेषतः. — After line 6, G1.2.4 ins.:

1506* अन्येऽरयो न मे सन्ति भीमसेनादृते भुवि ।
धार्तराष्ट्राद्वृथा भीरो न मां त्वमिहेच्छसि ।
भीमपृष्ठस्थिता चेत्थं दूयमानेन चेतसा ।
साश्रुध्वनि रुदन्ती सा निद्रावशमुपागता । ]

9 T1 om. 9$^{ab}$. — $^{b}$) D5 G3 विपिनं म°. — $^{d}$) K3 उपाश्रयत्; Ñ1 °वहत्; Ñ2.3 V1 B D ददर्श ह.

10 $^{b}$) K0 स नरर्षभः; K1.2 B5.6 S (except T G3 M5) °र्षभ. — $^{cd}$) T2 G °यं मृगये यावत्तावद्विश्रम्यतामिह.

11 $^{a}$) Ñ2 B1 ब्रुवंति. G5 रुचिरं. — $^{b}$) M6–8 वनचारिणः. — $^{c}$) K2 Cd (before corr.) जलच्छायो; K3 जलाधारो; Ñ2 जलं स्थायि; Ñ1 V1 B (except B6) D T G जल(G4 °ला)स्थानं. — $^{d}$) Ñ1.2 V1 B (except B6) D (except Da) T1 महच्चेति; T2 G अहं(G3 भव)तीति. M भविष्यति न संशयः.

12 $^{a}$) K0.2 च; M5 तु (for स). — $^{c}$) Dn3 G4 M3 यत्र तत्र स्म (by transp.); T1 तत्र यत्तस्मात्; G5 तत्र तत्र स्म. D1 स जगाम वनात्तस्मात्. — $^{d}$) Ñ1 V1 B D T1 M3 सारसा; Ñ2 द्रुवंति. M6–8 वनचारिणः.

13 $^{a}$) G1.2 तत्र पीत्वा च पा°. — $^{b}$) K0.1 B1 Da1 Dn3 D1 T G3.6 M3.5 °र्षभः; K2 पुरुषर्षभः; G1 विगतश्रमः. G2 स्नात्वा भूत्वा गतक्लमः. — After 13$^{ab}$, V1 B (except B1) D (except D1) T1 ins.:

1507* तेषामर्थे च जग्राह भ्रातॄणां भ्रातृवत्सलः ।

T1 ins. after 1507*: M, after 13$^{ab}$: T2 G, after 13$^{cd}$:

1508* पङ्कजानामनेकैश्च पत्रैर्बद्ध्वा जलाशयान् ।

— $^{d}$) Ñ3 स जहार. K0.2m S परंतपः; Ñ1.3 नरोत्तमः; D5 स भारत. K2 जहार भरतर्षभ; Ñ2 V1 B D T1 आनयामास भारत.

14 $^{a}$) K0 Ñ3 G1 गव्यूतिमात्रम्; G2 °मार्गाद्. K (except K4) Ñ1.2 T2 G2.4–6 M आगम्य. — $^{b}$) G2 त्वरया. — After 14$^{ab}$, N (Ś1 K1 hapl. om. the

C. 1. 5902
B. 1. 151. 21
K. 1. 163. 20

स सुप्तां मातरं दृष्ट्वा भ्रातॄंश्च वसुधातले ।
भृशं दुःखपरीतात्मा विललाप वृकोदरः ॥ १४
शयनेषु परार्ध्येषु ये पुरा वारणावते ।
नाधिजग्मुस्तदा निद्रां तेऽद्य सुप्ता महीतले ॥ १५
स्वसारं वसुदेवस्य शत्रुसंघावमर्दिनः ।
कुन्तिभोजसुतां कुन्तीं सर्वलक्षणपूजिताम् ॥ १६
स्नुषां विचित्रवीर्यस्य भार्यां पाण्डोर्महात्मनः ।
प्रासादशयनां नित्यं पुण्डरीकान्तरप्रभाम् ॥ १७
सुकुमारतरां स्त्रीणां महार्हशयनोचिताम् ।
शयानां पश्यताद्येह पृथिव्यामतथोचिताम् ॥ १८
धर्मादिन्द्राच्च वायोश्च सुषुवे या सुतानिमान् ।
सेयं भूमौ परिश्रान्ता शेते ह्यद्यातथोचिता ॥ १९
किं नु दुःखतरं शक्यं मया द्रष्टुमतः परम् ।
योऽहमद्य नरव्याघ्रान्सुप्तान्पश्यामि भूतले ॥ २०
त्रिषु लोकेषु यद्राज्यं धर्मविद्योऽर्हते नृपः ।
सोऽयं भूमौ परिश्रान्तः शेते प्राकृतवत्कथम् ॥ २१
अयं नीलाम्बुदश्यामो नरेष्वप्रतिमो भुवि ।
शेते प्राकृतवद्भूमावतो दुःखतरं नु किम् ॥ २२

---

posterior half) $T_1$ ins.:

1509* शोकदुःखपरीतात्मा निशश्वासोरगो यथा ।;

while $G_{1.2.4}$ ins.:

1510* भ्रातॄंश्च मातरं चैव जलं शीतमपाययत् ।
पीतोदकास्ते सर्वेऽपि परिश्रमवशात्पुनः ।
निद्रापहृतधैर्याश्च सुषुपुर्भृशविह्वलाः ।

— $Ś_1$ $K_1$ (hapl.) om. $14^{cde}$. — $^c$) $D_5$ $G_{1.4}$ प्रसुप्तां. $T_2$ $G_{3.5.6}$ M प्रेक्ष्य; $G_{1.2.4}$ भ्रातॄन् (for दृष्ट्वा). — $^d$) $G_{1.2.4}$ निद्राविगतचेतसः. — After $14^{cd}$, $G_{1.2.4}$ ins.:

1511* महारौद्रे वने घोरे वृक्षमूले सुशीतले ।
विक्षिप्तकरपादांश्च दीर्घोच्छ्वासमहारवान् ।
ऊर्ध्ववक्त्रान्महाकायान्पञ्चेन्द्रानिव भूतले ।
अज्ञातवृक्षनिलयप्रेतराक्षससाध्वसान् ।

— $^{ef}$) $Ñ_2$ $V_1$ B D $T_1$ शोकपरी°. $G_{1.2.4}$ दृष्ट्वैव भृशशोकार्तो विललापानिलात्मजः. — After 14, $K_4$ Ñ $V_1$ B D $T_1$ ins.:

1512* अतः कष्टतरं किं नु द्रष्टव्यं हि भविष्यति ।
यत्पश्यामि महीसुप्तान्भ्रातॄनद्य सुमन्दभाक् ।
[ (L. 2) $K_4$ °तॄंश्च वसुधातले. ]

15 Before 15, $T_2$ $G_{1.2.6}$ ins. भीमः; $K_{0.3.4}$ भीम उ°. — $^a$) $K_3$ महार्हेषु (for परा°). — $^b$) $T_2$ G प्रसुप्ता; M शयाना (for ये पुरा). — $^c$) $K_1$ $G_3$ $M_{6-8}$ नाभि°; $M_5$ नाति° (for नाधि°). — $^d$) $K_3$ धरातले.

16 $^b$) $K_{0.3}$ $D_1$ °संघातमर्दिनः; $K_2$ $T_2$ G °संघविमर्दि($G_2$ °र्दं)नः; $K_4$ °संघातभेदिनः. — $^c$) $K_2$ Ñ $V_1$ B Da Dn $D_{1.2.4}$ $T_1$ कुंतिराज°; $D_5$ $T_2$ G M भोजराज°. — $^d$) $Ś_1$ $K_1$ दिव्य°; $K_3$ °संयुतां; $D_5$ °लक्षितां.

17 $^b$) $K_3$ $Ñ_3$ $T_2$ $G_{4-6}$ M पांडोर्भार्यां (by transp.). $Ś_1$ मनस्विनीं (for महा°). — $^c$) $Ñ_{2.3}$ $V_1$ B D $T_1$ तथैव चास्मजननीं. — $^d$) Ñ $V_1$ B D $T_1$ पुंडरीकोदर° ($N_1$ °कानन°).

18 $^a$) $Ñ_2$ $V_1$ B D (except $D_5$) $T_1$ एनां (for स्त्रीणां). — $^b$) $Ś_1$ K $Ñ_{1.3}$ अना($K_4$ परा)गसमनर्हतीं. — $^c$) $Ś_1$ $K_{1-4}$ $Ñ_{1.3}$ पश्यताद्येमां ($Ś_1$ °नां); $D_5$ तां तथाप्येवं; S अद्य पश्यामि. $K_0$ शयनातीं तथाप्येनां. — $^d$) $T_2$ $G_{3-6}$ असुखोचितां; $G_2$ तां तथाविधे. $K_0$ $D_5$ पश्य कालविपर्ययः.

19 $Ś_1$ (hapl.) om. 19. — $^a$) $Ñ_{2.3}$ $V_1$ B D (except $D_5$) $T_1$ वाताच्च. — $^b$) $G_3$ च (for या). — $^c$) $K_1$ इह श्रांता. — $T_2$ om. $19^d$; $G_6$ M (hapl.) om. $19^d$–$21^c$. — $^d$) $K_1$ $Ñ_{1.3}$ $D_5$ ह (for हि). $K_4$ नार्हा (for ह्यद्य). $K_{0.3.4}$ अयथोचिता. $Ñ_2$ $T_1$ $G_{1-5}$ शेते प्राकृतवत् कथं ($G_2$ विधे; $G_3$ तदा) (=$21^d$); $V_1$ B Da Dn $D_{1.2.4}$ $T_1$ शेते प्रासादशायिनी.

20 $G_6$ M om. 20 (cf. v. l. 19); $T_2$ (hapl. om. them here) reads 20–21 after 23. — $^{ab}$) $K_3$ किंचित् (for किं नु). $D_5$ दुःखम् (for द्रष्टुम्). $T_2$ $G_{1-5}$ द्रष्टुं ($G_3$ दृष्टं) मया शक्यम् ($T_2$ दुःखम्) (by transp.). — $^c$) $Ś_1$ इमानद्य; $K_{1.4}$ इमान्योद्य; $Ñ_1$ $G_{1.2}$ सोहमद्य. $K_{0.3}$ $D_5$ यानहं पुरुषव्याघ्रान्. — $^d$) $T_2$ G ($G_6$ om.) पश्यामि धरणीगतान् ($G_{1.2}$ °शयान्).

21 $G_6$ M om. $21^{abc}$ (cf. v. l. 19); for $T_2$ cf. v. l. 20, 23 also. — $^a$) $Ś_1$ K Ñ $V_1$ $B_{5.6}$ Dn $D_{1.5}$ $T_1$ यो राज्यं; $T_2$ $G_{3-5}$ वै राज्यं; $G_{1.2}$ राजत्वं. — $^b$) $K_3$ च (for यः). $V_1$ $B_6$ Dn $D_{1.4}$ T $G_{3-5}$ धर्मनित्यो; $G_{1.2}$ धर्मपुत्रो. $T_2$ $G_{1-5}$ [ऽ]र्हति प्रभुः. $K_1$ अर्हते धर्मविन्नृपः; $K_{3.4}$ धर्मतोर्हति वै नृपः. — $^c$) $G_{1.2}$ सोयमद्य. $K_1$ इह श्रांतः. — $^d$) M तथा ($M_5$ यथा) (for कथम्).

22 $^a$) $K_1$ अयं भूमाविह श्रांतः; $T_2$ G अयं नीलांबुद° प्रख्यो; M इमौ नीलोत्पलश्यामौ. — $^b$) $M_{6-8}$ °प्रतिमौ. $Ś_1$ $Ñ_2$ $V_1$ B D (except $D_5$) $T_1$ [ऽ]र्जुनः (for भुवि). $G_3$ नीलोत्पलसमो भुवि. — M om. $22^{cd}$. — $G_5$ (? hapl.)

अश्विनाविव देवानां याविमौ रूपसंपदा ।
तौ प्राकृतवदद्येमौ प्रसुप्तौ धरणीतले ॥ २३
ज्ञातयो यस्य नैव स्युर्विषमाः कुलपांसनाः ।
स जीवेत्सुसुखं लोके ग्रामे द्रुम इवैकजः ॥ २४
एको वृक्षो हि यो ग्रामे भवेत्पर्णफलान्वितः ।
चैत्यो भवति निर्ज्ञातिरर्चनीयः सुपूजितः ॥ २५
येषां च बहवः शूरा ज्ञातयो धर्मसंश्रिताः ।
ते जीवन्ति सुखं लोके भवन्ति च निरामयाः ॥ २६
बलवन्तः समृद्धार्था मित्रबान्धवनन्दनाः ।
जीवन्त्यन्योन्यमाश्रित्य द्रुमाः काननजा इव ॥ २७
वयं तु धृतराष्ट्रेण सपुत्रेण दुरात्मना ।
विवासिता न दग्धाश्च कथंचित्तस्य शासनात् ॥ २८
तस्मान्मुक्ता वयं दाहादिमं वृक्षमुपाश्रिताः ।
कां दिशं प्रतिपत्स्यामः प्राप्ताः क्लेशमनुत्तमम् ॥ २९
नातिदूरे च नगरं वनादस्माद्धि लक्षये ।
जागर्तव्ये स्वपन्तीमे हन्त जागर्म्यहं स्वयम् ॥ ३०
पास्यन्तीमे जलं पश्चात्प्रतिबुद्धा जितक्लमाः ।
इति भीमो व्यवस्यैव जजागार स्वयं तदा ॥ ३१

C. 1. 5926
B. 1. 151. 45
K. 1. 163. 54

इति श्रीमहाभारते आदिपर्वणि अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥ समाप्तं जतुगृहदाहपर्व ॥

---

om. $22^{d}$–$23^{a}$. — $^{d}$) Ñ2 V1 B D (except D5) T1 ततो (for अतो). K0 भुवि; G1.2 तु मे. — After 22, T G (except G5) ins.:

1513* इमौ नीलोत्पलश्यामौ नरेष्वप्रतिमौ भुवि ।

(cf. $22^{ab}$ and v. l.).

23 G5 om. $23^{abc}$ (cf. v. l. 22). — $^{a}$) G3 अपि (for इव). — $^{b}$) T2 G3.4.6 M अ(G3 M5.7 आ)श्विनौ; G1.2 अन्वितौ (for याविमौ). — $^{c}$) Ñ1 °वदद्यैतौ; K3 प्राकृताविवाद्येमौ; D5 T2 G3.4.6 M तु (G3 च) प्राकृतवत् चेमौ (D5 भीमौ; T2 G3 भूमौ; G1.6 चोभौ; M3 हीमौ). G1.2 माद्रेयौ सुकुमारांगौ. — $^{d}$) G1 शयाते; G2 शेरते (for प्रसु°). — After 23, T2 (wrongly) reads 20–21, having (hapl.) om. them in their proper place.

24 $^{c}$) K2.4 जीवेद्विसु(K4 °सु)खं; Ñ2 V1 B D T1 जीवेत्त सुखं (D3 जीवेत्सुखसं-); T2 G M जीवेत्सुखितो. — $^{d}$) Ś1 Ñ V1 B Dn D1.2.4 T1 G2.3 ग्रामद्रुम; K1 ग्रामे वृक्ष. Ś1 K1 D2 इवैकक:; K3 Ñ3 इवौकसः; Cd as in text.

25 $^{a}$) Ś1 K1 एकवृक्षेपि; K0.4 Ñ1.2 एकवृक्षो हि; D3 एको हि वृक्षो. — $^{b}$) K0 Ñ3 D5 G1.2 पुष्प°; Ñ1 पूर्ण°; D4 फल्गु° (for पर्ण°). G3 फलेत्पत्रफला°. — D1 om. $25^{cd}$. — $^{d}$) B3 वचनीयः; T2 G1.2.4.5 अध्वनीनैः. G1 स पूजितः; M6–8 तथैव सः.

26 $^{b}$) K0 °संमताः; K2 °संहिताः; K4 °संस्थिताः; Ñ2 V1 B D T1 °माश्रिताः; T2 G M °वत्सलाः. — $^{c}$) T2 G3–6 चिरं (for सुखं).

27 $^{a}$) Ñ3 सुसिद्धार्थाः. — $^{b}$) G1.2 M पितृ°. — $^{c}$) K0 D5 आसाद्य (for आश्रित्य). — $^{d}$) G1.2 वंशाः (for द्रुमाः). K3 वनभवा इव.

28 $^{b}$) G1.2 दुष्पुत्रेण. — After $28^{ab}$, T1 G1.2.4 ins.:

1514* राज्यलुब्धेन मूर्खेण दुर्मन्त्रिसहितेन च ।
दुष्टेनाधर्मशीलेन स्वार्थनिष्ठैकबुद्धिना ।

— $^{c}$) Ñ1 G6 च (for न). M तु (for च). — $^{d}$) K3 हि पुरोदिताः; Ñ2 V1 B D (except D5) T1 दैवसंश्रयात् (for तस्य शा°). T2 G M क्षत्तुर्बुद्धिपराक्रमात्.

29 $^{d}$) Ś1 क्लेशं प्राप्ताः (by transp.). — After 29, K4 Ñ V1 B D T1 ins.:

1515* सकामो भव दुर्बुद्धे धार्तराष्ट्राल्पदर्शन ।
नूनं देवाः प्रसन्नास्ते नानुज्ञां मे युधिष्ठिरः ।
प्रयच्छति वधे तुभ्यं तेन जीवसि दुर्मते ।
नन्वद्य ससुतामात्यं सकर्णानुजसौबलम् ।
गत्वा क्रोधसमाविष्टः प्रेषयिष्ये यमक्षयम् । [5]
किं नु शक्यं मया कर्तुं यत्ते न क्रुध्यते नृपः ।
धर्मात्मा पाण्डवश्रेष्ठः पापाचार युधिष्ठिरः ।
एवमुक्त्वा महाबाहुः क्रोधसंदीप्तमानसः ।
करं करेण निष्पिष्य निःश्वसन्दीनमानसः ।
पुनर्दीनमना भूत्वा शान्तार्चिरिव पावकः । [10]
भ्रातॄन्महीतले सुप्तानवैक्षत वृकोदरः ।
विश्वस्तानिव संविष्टान्पृथग्जनसमानिव ।

[ (L. 2) K4 B1.3.5 D5 नाज्ञां मम युधि°. — (L. 4) B (except B3) न त्वाद्य. B5 D3 D5 त्वां सहामात्यं. — (L. 8) K4 D3 क्रोधसंदीप्त(K4 °रक्त)लोचनः. — (L. 9) K4 Ñ3 B1.3m.5 D5 संस्पृश्य; Ñ1.2 B3 संपिष्य. K4 दीनमातुरः; Ñ1.2 D1.4 T1 दीप्तमानसः; B5 दीप्तलोचनः. ]

30 $^{a}$) V1 B1.5 Dn D1 °दूरेण; B6 G5 °दूरेति. — $^{b}$) Ś1 K1 च; Ñ वि-; G3 तु (for हि). D5 G1–3 लक्ष्यते. — $^{c}$) B (except B3) D3 D2.4 जागृतव्ये. — $^{d}$) Ñ1.2 जागर्म्येतामहं क्षपां.

# १३९

G. 1. 5027
B. 1. 152. 1
K. 1. 154. 1

वैशंपायन उवाच ।

तत्र तेषु शयानेषु हिडिम्बो नाम राक्षसः ।
अविदूरे वनात्तस्माच्छालवृक्षमुपाश्रितः ॥ १
क्रूरो मानुषमांसादो महावीर्यो महाबलः ।
विरूपरूपः पिङ्गाक्षः करालो घोरदर्शनः ।
पिशितेप्सुः क्षुधार्तस्तानपश्यत यदृच्छया ॥ २
ऊर्ध्वाङ्गुलिः स कण्डूयन्धुन्वन्रूक्षाञ्शिरोरुहान् ।
जृम्भमाणो महावक्त्रः पुनः पुनरवेक्ष्य च ॥ ३
दुष्टो मानुषमांसादो महाकायो महाबलः ।
आघ्राय मानुषं गन्धं भगिनीमिदमब्रवीत् ॥ ४
उपपन्नश्चिरस्याद्य भक्षो मम मनःप्रियः ।
स्नेहस्रवान्प्रस्रवति जिह्वा पर्येति मे मुखम् ॥ ५
अष्टौ दंष्ट्राः सुतीक्ष्णाग्राश्चिरस्यापातदुःसहाः ।
देहेषु मज्जयिष्यामि स्निग्धेषु पिशितेषु च ॥ ६

---

31 a) Ñ3 V1 प्राइयंतीमे; Cd as in text. — b) K (except K1) गतक्लमाः; G1.2.4 च शेषितं; G3 जितश्रमाः; Cd as in text. T2 G5 प्रबुद्धा विजितक्लमाः. — c) Ś1 K1 विवस्यैव; K0 D5 °स्येदं; K2.4 M3.5 Cd °स्यैवं; K3 °स्याथ; T2 G विनिश्चित्य. — d) S जागर्ति स्म (for जजा°). T2 G प्रतापवान्. — Cd cites the *entire* line $31^{cd}$ (v. l. एवं for एव).

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K1.2 Ñ V1 B Da Dn1.n2 D1.2.4.5 T1 जगृतुह(D1 om. गृह)दाह (Ñ1.2 V1 जतुगृह; B1.5 जातुष); to it K1.2 Ñ3 B3 Dn1.n2 D1.2.4.5 add समाप्त. — *Adhy. name:* K0.4 भीमसेनप्रलापः; K3 पांडवप्रवासः; Ñ1.2 V1 भीमजलाहरणं; M5-8 हिडिंबवनप्रवेशः (M6.8 °शनं). — *Adhy. no.* (figures, words or both): B1 148; Dn3 150; D4m 153; T1 147; T2 G5.6 M 97; G1.2 98; G3.4 96. — *S'loka no.:* Dn 45; M8 33. — *Aggregate s'loka no.:* Dn2 5913.

## 139

1 Ś1 K1.3 D2.4.5 S om. उवाच. — a) Ñ3 तेषु तत्र (by transp.); T2 G4.5 ततस्तेषु. — b) A few MSS. हिडंबो. — c) K3 नातिदूरे. — d) S सालवृक्षं. Ñ V1 B5.6 D (except D5) G1 समाश्रितः.

2 b) K0 महाकायो (for °वीर्यो). Ñ3 V1 B D (except D5) T1 महावीर्यपराक्रमः. — After $2^{ab}$, Ñ (Ñ3 om. lines 1–2; Ñ1.2 om. lines 4–5) V1 B D (except D5) T1 ins.:

1516* प्रावृड्जलधरश्यामः पिङ्गाक्षो दारुणाकृतिः ।
दंष्ट्राकरालवदनः पिशितेप्सुः क्षुधार्दितः ।
लम्बस्फिग्लम्बजठरो रक्तश्मश्रुशिरोरुहः ।
महावृक्षगलस्कन्धः शङ्कुकर्णो विभीषणः ।
यदृच्छया तानपश्यत्पाण्डुपुत्रान्महारथान् ।

[ (L. 4) B3m Da महापृष्ठगल°. Ñ3 transp. विभीषणः and यदृच्छया (in line 5). — With line 5 cf. $2^{ef}$. ]
— G2.3.6 (hapl.) om. $2^{e}$–$4^{b}$. — d) T2 G1.5 M भीमदर्शनः. — e) K0.4 T2 G5 M6-8 सन्; Ñ2 V1 B D (except D5) G4 च; T1 G1 M3.5 स (for तान्). — f) K3 Ñ1.3 D5 अपश्यत्स; K4 अपश्यत्तान्; Ñ2 V1 B Da Dn D1.2.4 T1 तानपश्यद्; T2 G1.4.5 M जिघ्रन्गं(M3.5 °द्रं)धं.

3 G2.3.6 om. 3 (cf. v. l. 2). — b) Some MSS. धून्वन्. Ñ1 चैव (for रूक्षान्). — c) Ñ1 महद्वक्त्रः. — d) Ś1 K1-3 Ñ1.2.3 (by corr.) ह (for च). K0.4 D1.2 अवैक्षत; D5 उदैक्षत.

4 G1-3.6 om. $4^{ab}$ (cf. v. l. 2). — a) K1 लब्धो; Ñ2.3 V1 B D (except D5) T हृष्टो; B3m कृष्णो; G4.5 M तुष्टो (M5 तृप्तो). K1 Ñ2 V1 B1.6 Dn1.n2 D1.2 T G5 M °मांसस्य; B3.5 Da Dn3 D4 G4 °मांसाशी. — After $4^{ab}$, Ś1 K B3 D5 read 1. 140. $2^{cd}$, repeating it in its proper place.

5 Before 5, M ins. हिडिंबः. — b) Some MSS. भक्ष्यो. K4 मे मनसेप्सितः; N2 V1 B D (except D5) T1 [ऽ]यं मम सुप्रियः (Ñ2 तुष्टिदः). — c) Ñ2 स्नेहस्रवं; Ñ3 °स्रवः; D4 °स्रावान्; T1 °स्रावं. Ś1 K प्रस्र(K0.2.3 °श्र)वंती; B5 Da प्रसर°; D2 प्रसव°. D5 स्नेहास्रावातिप्रवणा; T2 G जिघ्रतः प्रसृतस्नेहा; M स्नेहास्रावं विसृजति. — d) M वै (for मे). K2 Ñ2.3 V1 B1m.3 Da Dn1.n2 G5 सुखं; K3 मुखे.

6 a) G6 दंताः (for दंष्ट्राः). S (except T1) सिता(G1.2 समा)स्तीक्ष्णाः (G4 सुतीक्ष्णाश्च also). — b) T1 M बत; T2 G5 हंत; G1.2 मम (for आपात-). — G3 om. $6^{c}$–$8^{b}$. — c) K3 पातयिष्यामि; G4 M °यिष्यंति. — d) K0.2

आक्रम्य मानुषं कण्ठमाच्छिद्य धमनीमपि ।
उष्णं नवं प्रपास्यामि फेनिलं रुधिरं बहु ॥ ७
गच्छ जानीहि के त्वेते शेरते वनमाश्रिताः ।
मानुषो बलवान्गन्धो घ्राणं तर्पयतीव मे ॥ ८
हत्वैतान्मानुषान्सर्वानानयस्व ममान्तिकम् ।
अस्मद्विषयसुप्तेभ्यो नैतेभ्यो भयमस्ति ते ॥ ९
एषां मांसानि संस्कृत्य मानुषाणां यथेष्टतः ।
भक्षयिष्याव सहितौ कुरु तूर्णं वचो मम ॥ १०
भ्रातुर्वचनमाज्ञाय त्वरमाणेव राक्षसी ।
जगाम तत्र यत्र स्म पाण्डवा भरतर्षभ ॥ ११
ददर्श तत्र गत्वा सा पाण्डवान्पृथया सह ।
शयानान्भीमसेनं च जाग्रतं त्वपराजितम् ॥ १२
दृष्ट्वैव भीमसेनं सा शालस्कन्धमिवोद्गतम् ।
राक्षसी कामयामास रूपेणाप्रतिमं भुवि ॥ १३
अयं श्यामो महाबाहुः सिंहस्कन्धो महाद्युतिः ।
कम्बुग्रीवः पुष्कराक्षो भर्ता युक्तो भवेन्मम ॥ १४
नाहं भ्रातृवचो जातु कुर्यां क्रूरोपसंहितम् ।
पतिस्नेहोऽतिबलवान्न तथा भ्रातृसौहृदम् ॥ १५

C. 1. 5644
B. 1. 152. 19
K. 1. 164. 23

---

Ñ1 स्नेहेषु पि°.

7 G3 om. 7 (cf. v. l. 6). — a) Ko D5 आछिद्य (for आक्रम्य). Ñ1 मूर्ध्नि; Ñ3 मूर्ध्नं; G1.2 कर्णं. — b) Ś1 Ko.2.4 D5 उच्छिद्य. K2 G1 M6–8 धमनीरपि; Cd as in text. — c) D5 नारं (for नवं). — d) K4 D2 मुहुः.

8 G3 om. $8^{ab}$ (cf. v. l. 6). — a) B1.6 G5 Cd नु (for तु). — b) K3 वृक्षमाश्रिताः.

9 a) Ñ1 इह; M6–8 गत्वा (for हत्वा). Ñ3 इमान्; T2 G M6–8 तान्. T2 G एतान् (for सर्वान्). — b) Ś1 K1 D2 आनयेह; K4 °येति; T2 G °याशु; M °येथा. Ś1 K1 मदंतिकं. Ko.2.3 Ñ1.3 D5 आनयेहांतिकं मम. — D5 om. $9^{c}$–$10^{b}$. — d) Ś1 न तेभ्यो; Ko न ह्येभ्यो; K4 ह्यन्येभ्यो; B3 मैतेभ्यो. B3 G1.2 भयमस्तु. Ś1 K (except K3) Cd नौ.

10 D5 om. $10^{ab}$ (cf. v. l. 9). — a) K3 M तेषां; T2 G ततो. Ś1 K1–4 M6–8 सत्कृत्य; M3 चोत्कृत्य. Ko सत्कृत्य मांसानि; Ñ2 V1 B D (D5 om.) T1 उत्कृत्य मांसानि. — b) T2 G मानुषाणि. K3 विशेषतः; Ñ2 यथेप्सितं. — c) Ś1 सुखिनौ (for सहि°). T G सहितौ भक्षयिष्यावः. — d) T2 G कुरु क्षिप्रं. — After 10, K4 Ñ V1 B D (except D5) S (T2 G M om. line 1) ins.:

1517* भक्षयित्वा च मांसानि मानुषाणां प्रकामतः ।
नृत्याव सहितावावां दत्ततालावनेकशः ।
एवमुक्त्वा हिडिम्बा तु हिडिम्बेन तदा वने ।

[ (L. 2) Ñ3 B5 Da2 Dn1.n3 D1.2.4 नृत्यावः. T2 G M ततस्तुष्टौ प्रनृत्यावः प्रगीतौ करतालकौ. — (L. 3) Before line 3, S ins. वैशं°. K4 Ñ3 D4 S (except T1) एवमुक्ता हिडिंबेन हिडिंबा (G1–3 M °बी) राक्षसी तदा (K4 Ñ3 D4 तु तदा वने). ]

— S cont.:

1518* आप्लुत्याप्लुत्य च तरूनगच्छत्पाण्डवान्प्रति ।

11 M om. 11. — b) Ko G6 त्वरमाणैव; K3 D5 T G4.5 °णा च. — c) K1 यत्र यत्र (*sup. lin.* as in text); B1.3 T2 G1.2.4.5 (by transp.) यत्र तत्र. — d) Ś1 K2.3 Ñ1.3 भरतर्षभाः; Ko पुरुषर्षभाः; D5 पृथया सह. T2 G शेरते पाण्डवा वने.

12 a) Ko गत्वा सा तत्र; Ñ1.2 V1 B5 Dn D1.5 T1 G6 तत्र सा गत्वा; T2 G4.5 सा तत्र गत्वा (by transp.); G2 तान्तत्रगतान्. G1.3 गत्वा सा ददर्श तत्र. — K4 (hapl.) om. $12^{b}$–$13^{a}$. — d) K1 T2 G3–6 M च (for तु). Ko.2.3 Dn1 G3 जाग्रंतमपरा°. — After 12, T2 G ins.:

1519* उपास्यमानान्भीमेन रूपयौवनशालिना ।
सुकुमारांश्च पार्थांश्च व्यायामेन च कर्शितान् ।
दुःखेन संप्रयुक्तांश्च सहज्येष्ठान्प्रमाथिनः ।
रौद्री सती राजपुत्रान्दर्शनीयप्रदर्शनम् ।

[ (L. 1) G1.3 भीमेन पालितांश्चैव (for the prior half). — (L. 2) G3 सुकुमारान्सुरूपांश्च. — (L. 4) G3.4 रौद्रा सती. ]

13 K4 om. $13^{a}$ (cf. v. l. 12). — b) Ś1 K1 S सालस्कंधमि° (G1 °स्कंधोपमद्युतिं); Ñ2 V1 B D शालपोतमि°. — G1 om. $13^{c}$–$14^{b}$. — d) G3 स्वरूपेप्रतिमं भुवि. — After 13, S (except G1) ins.:

1520* अन्तर्गतेन मनसा चिन्तयामास राक्षसी ।

14 G1 om. $14^{ab}$ (cf. v. l. 13). — a) B6 गौरः श्या°. — b) Ś1 K1.2 सा(K2 श्या)लस्कंधो. — d) K3 युक्तो भर्ता (by transp.). — After 14, M (which om. 15–16) ins. line 2 of 1521* (cf. v. l. 16).

15 M om. 15–16. — a) T G1.3 भ्रातुर्वचो; G6 भ्रातुर्वशे. — b) Ñ3 क्रूरोपबृंहितं; T2 G क्रूरमसांप्रतं. — c) T2 G पतिहेतुर्. K1 अपि; K2.3 Ñ1.3 B (except B5) Da1 D2.4 T2 G हि (for अति-). — d) Ś1 K1 पुनर् (for तथा). K3 N3 G5 °संगतं; T2 G2–4.6 °संगमः (G4m

C. 1. 5045
B. 1. 152. 20
K. 1. 164. 23

मुहूर्तमिव तृप्तिश्च भवेद्भ्रातुर्ममैव च ।
हतैरेतैरहत्वा तु मोदिष्ये शाश्वतीः समाः ॥ १६
सा कामरूपिणी रूपं कृत्वा मानुषमुत्तमम् ।
उपतस्थे महाबाहुं भीमसेनं शनैः शनैः ॥ १७
विलज्जमानेव लता दिव्याभरणभूषिता ।
स्मितपूर्वमिदं वाक्यं भीमसेनमथाब्रवीत् ॥ १८
कुतस्त्वमसि संप्राप्तः कश्चासि पुरुषर्षभ ।
क इमे शेरते चेह पुरुषा देवरूपिणः ॥ १९
केयं च बृहती श्यामा सुकुमारी तवानघ ।
शेते वनमिदं प्राप्य विश्वस्ता स्वगृहे यथा ॥ २०
नेदं जानाति गहनं वनं राक्षससेवितम् ।
वसति ह्यत्र पापात्मा हिडिम्बो नाम राक्षसः ॥ २१
तेनाहं प्रेषिता भ्रात्रा दुष्टभावेन रक्षसा ।
बिभक्षयिषता मांसं युष्माकममरोपम ॥ २२
साहं त्वामभिसंप्रेक्ष्य देवगर्भसमप्रभम् ।
नान्यं भर्तारमिच्छामि सत्यमेतद्ब्रवीमि ते ॥ २३
एतद्विज्ञाय धर्मज्ञ युक्तं मयि समाचर ।
कामोपहतचित्ताङ्गीं भजमानां भजस्व माम् ॥ २४
त्रास्येऽहं त्वां महाबाहो राक्षसात्पुरुषादकात् ।
वत्स्यावो गिरिदुर्गेषु भर्ता भव ममानघ ॥ २५

---

as in text).

16 M om. 16 (cf. v. l. 15). — ab) K2 Ñ1.3 अपि; Dn T2 G5.6 एव (for इव). Ś1 वा तृप्तिर्; K2.4 B5 तृप्तिस्तु. K1.4 ममैव हि; K3 B5 D6 ममापि च. G1–4 मुहूर्तमपि चानेन (G3 भार्या च; G4 चाद्याहं) प्राप्नुयां तृप्तिमुत्तमां (G3 वृत्तिरुत्तमां). — c) D5 मृतैर् and अमृत्वा (for हतैर् and अहत्वा respectively). T2 G6 अहं नैव (for अहत्वा तु). G1–4 भर्त्रा त्वहं वने रम्ये (G3 वनेनेन; G4 अनेनेह). — d) D5 रोदिष्ये. G1–4 बहुलाः समाः. — T G ins. after 16: M (om. line 1), after 14:

1521* हिडिम्बी तु महारौद्रा तदा भरतसत्तम ।
उत्सृज्य राक्षसं रूपं मानुषं रूपमास्थिता ।

17 Before 17, T2 G5.6 ins. वैशं°. — b) S कृत्वा मदनमोहिता (G1 °तं); cf. 1521*. — c) Ś1 K1.2.4 संप्रतस्थे. K0.3 Ñ1.3 S (except T1) महात्मानं. — d) S अनिंदिता (G1.2 मनोहरा; M6 अतंद्रिता). — After 17, S ins. (M om. from line 3 onward):

1522* इङ्गिताकारकुशला ह्युपासर्पच्छनैः शनैः ।
विनम्यमानेव लता सर्वाभरणभूषिता ।
शनैः शनैः स तां भीमः समीपमुपसर्पतीम् ।
वीक्षमाणस्तदापश्यत्तन्वीं पीनपयोधराम् ।
चन्द्राननां पद्मनेत्रां नीलकुञ्चितमूर्धजाम् । [5]
कृष्णां सुपाण्डुरैर्दन्तैर्बिम्बोष्ठीं चारुदर्शनाम् ।
दृष्ट्वा तां रूपसंपन्नां भीमो विस्मयमागतः ।
उपचारगुणैर्युक्तां लालितैर्हास्यसंस्थितैः ।
समीपमुपसंप्राप्य भीमस्याथ वरानना ।
वचो वचनवेलायामिदं प्रोवाच पाण्डवम् । [10]

[ (L. 1) T2 G4.5 उचिताकार°. — (L. 2)=(var.) 18ab. T2 G4.5 विनम्यमाना ललना. — (L. 3) G3 वृतां (for स तां). — (L. 4) G3 वीक्ष्यमाणां तथा. — (L. 6) G6 वस्त्रैः (for दन्तैः). — (L. 8) T2 G4–6 ललितैर्. T1 हावसंस्थितैः; G1 हासगर्वितैः; G2 हास°; G6 भाव°. — (L. 9) G1.6 भीमं साथ. T1 वरांगना. — (L. 10) T1 भीमं प्रोवाच कामिनी. ]

18 S repeats 18ab; cf. 1522*. — a) K2 विपज्जमानेव; M विना(M3.5 °न)म्य°. K0.4 B6 D2.5 तदा; K1.3 च सा; Ñ2 Da नता; B3m सती (for लता). Ñ3 V1 Dn D1.4 लज्जमानेव ललना; B6 संलज्जमाना ललना; T G लज्जया नम्यमानेव. — b) T G सर्वा°.

19 Before 19, M ins. हिडिंबी. — b) K3 पुरुषोत्तम; G4 भरत°. — c) G1.2 इमे के (by transp.). — d) Ś1 K1 दिव्यरूपिणः.

20 a) N1 का चेयं; Ñ3 कथं च. Ñ2 V1 B D (except D5) T G3–6 वै (for च). — b) K (except K1) D5 M तथानघ (K2 D5 °घा); G4 तदा°. — c) G5 प्राप्ता. — d) K2 विश्रब्धा; D5 °स्तब्धा. G5 स्वगृहेष्विव.

21 a) K3 नेयं; G5 इमं. Ś1 K1 जानासि; T2 G1.2 M °नीथ; G4–6 °नीहि. — c) K2–4 D5 दुष्टात्मा; G5 पापो हि. — d) MSS. (indiscriminately) हिडिंबो and हिडंबो.

22 b) B1(m as in text).3.5 Da D2 °न चेतसा. — c) Ś1 K2 B1.3.5m.6 G2 विभक्षयिष्यता. — d) Ś1 K Ñ V1 B3.6 Da Dn1.n3 D4.5 M (except M3) अमरोपमाः (K1 असुरोपमः).

23 a) K2 अपि; T2 G इह (for अभि-). K0 ईदृशं प्रेक्ष्य. G3 संप्राप्य (for -संप्रेक्ष्य). — c) K3 Ñ3 अन्विच्छे (for इच्छामि). G3 भर्तारमहमिच्छामि.

24 a) Ñ3 एवं वि°. Ś1 धर्मात्मन्. — b) K4 मम (for मयि). — c) D5 °चित्तांगां; T2 G °चित्तां हि.

25 a) K0.2.3 Ñ V1 B (except B1) D त्रास्यामि; K4 रक्षामि; Cd as in text. Some MSS. त्वा (for त्वां).

अन्तरिक्षचरा ह्यस्मि कामतो विचरामि च ।
अतुलामाप्नुहि प्रीतिं तत्र तत्र मया सह ॥ २६

भीम उवाच ।

मातरं भ्रातरं ज्येष्ठं कनिष्ठानपरानिमान् ।
परित्यजेत को न्वद्य प्रभवन्निव राक्षसि ॥ २७
को हि सुप्तानिमान्भ्रातॄन्दत्त्वा राक्षसभोजनम् ।
मातरं च नरो गच्छेत्कामार्त इव मद्विधः ॥ २८

राक्षस्युवाच ।

यत्ते प्रियं तत्करिष्ये सर्वानेतान्प्रबोधय ।
मोक्षयिष्यामि वः कामं राक्षसात्पुरुषादकात् ॥ २९

भीम उवाच ।

सुखसुप्तान्वने भ्रातॄन्मातरं चैव राक्षसि ।
न भयाद्बोधयिष्यामि भ्रातुस्तव दुरात्मनः ॥ ३०
न हि मे राक्षसा भीरु सोढुं शक्ताः पराक्रमम् ।
न मनुष्या न गन्धर्वा न यक्षाश्चारुलोचने ॥ ३१
गच्छ वा तिष्ठ वा भद्रे यद्वापीच्छसि तत्कुरु ।
तं वा प्रेषय तन्वङ्गि भ्रातरं पुरुषादकम् ॥ ३२

G. 1. 5561
B. 1. 152. 36
K. 1. 164. 50

इति श्रीमहाभारते आदिपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

— $^{b}$)=29$^{d}$. — $^{c}$) K (except K2) Ñ1 G1.2 वत्स्यामो; M °मि. T2 G (except G4) °श्रृंगेषु. — $^{d}$) T2 G3 भर्ता त्वं मम चानघ. — After 25, T G ins.:

1523* इच्छामि वीर भद्रं ते मा मा प्राणान्विहासिषुः ।
त्वया ह्यहं परित्यक्ता न जीवेयमरिंदम ।

[ (L. 1) G6 मम प्राणान्. G1 विहास्यसि. T1 मा प्राणान्भो विहासिषुः. — (L. 2) G1 त्वयास्म्यहं. ]

26 $^{a}$) Ñ1.2 V1 B D (except D5) T1 °चरी (for °चरा). S (except T1 G3) चास्मि. — $^{b}$) K2.4 D5 अहं (for च). S (except T1) कामरूपधरापि च. — $^{c}$) D5 अचलां. Ś1 K1.2.4 Da1 D5 प्राप्नुहि.

27 Ś1 K1 भीमसेनः; Ñ V1 B1 D (except Da) भीमसेन उ°; S भीमः. — Ś1 K1 (hapl.) om. 27$^{a}$–29$^{d}$ and भीम उ° (before 30). — After the ref., S ins.:

1524* एष ज्येष्ठो मम भ्राता नान्यः परमको गुरुः ।
अनिविष्टश्च तं नाहं परिविद्यां कथंचन ।

[ (L. 1) T2 परमतो गुरुः. — (L. 2) G1 अनिर्दिष्टश्च; G2 अनिर्विण्ण°; G3 अविनष्ट°; G6 अग्निमिष्ट°. G5 अनिष्टकथनं नाहं. G1.2.4.5 परिवेत्ता; G3 °वित्ता. ]

— $^{b}$) Ñ2 B Da D2.4 अपरानपि; T2 G1.2 अपराजितान्. Ñ1.3 कनीय(Ñ3 °यां)सोपरानिमान्; V1 Dn1.n2 D1 सुखसुप्तान्कथं त्विमान्. — $^{c}$) K3 G1.2 M परित्यजति; T2 G3-6 °त्यजेद्धि. — $^{d}$) K3 प्रमादादिह; Ñ V1 Dn D1.4 T1 प्रभवन्निह; T2 G M भयादपि च.

28 Ś1 K1 Da om. 28 (cf. v. l. 27). — $^{a}$) G1.2 सुखसुप्तान्. K (K1 om.) Ñ1.3 वने भ्रातॄन्. — $^{c}$) M5 तथा गच्छेत्. — $^{d}$) Ñ1.3 कामार्थमिव (Ñ3 °ह) त(Ñ3 म)द्विधः. — S ins. after 28 (M om. all but line 1):

1525* राक्षसी ।
एकं त्वां मोक्षयिष्यामि सह मात्रा परंतप ।
सोदराजुत्सृजैतांस्त्वमारोह जघनं मम ।
भीमः ।
नाहं जीवितुमाशंसे भ्रातॄनुत्सृज्य राक्षसि ।
यथागतं व्रजैका त्वं विप्रियं मे प्रभाषसे ।

[ (L. 1) M6-8 अहं त्वां. — (L. 4) T1 G1.2.6 यथाश्रद्धं व्रजैका हि. ]

29 Ś1 K1 M om. 29 (cf. v. l. 27). — T1 G1.2 राक्षसी; T2 G3-6 हिडिंबी (all om. उवाच). — $^{a}$) T2 G न तेप्रियं चिकीर्षामि. — $^{b}$) K2 G5 विबो°; K4 निबोध मे. — $^{c}$) Ñ2 V1 B D (except D2.5) T1 अहं (for वः). — $^{d}$)=25$^{b}$.

30 K0.2 Ñ1.2 V1 B1 Dn2.n3 D4.5 भीमसेन उ°; T G भीमः (om. उ°); Ś1 K1.4 M om. the ref. (cf. v. l. 27). — T2 G transp. 30$^{ab}$ and 30$^{cd}$. — $^{a}$) S (except T1) इमान् (for वने). — $^{b}$) M राक्षसात्. — After 30$^{ab}$, M ins. भीमः. — $^{c}$) G3 न भिया.

31 $^{b}$) T2 G शक्ताः सोढुं (by transp.). — $^{d}$) D2 चारुहासिनि.

32 $^{d}$) S राक्षसं.

Colophon om. in B1. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K1.2 Ñ V1 B3.5.6 Da Dn1.n2 D1.2.4.5 T2 हिडिंबवध. — *Adhy. name:* K0 हैडंबागमः; K4 हिडंबागमनं; Ñ1.2 V1 T1 भीमहिडिंबा(T1 °राक्षस)संवादः; G3 हिडिंबिसंवादः; G4 हिडिंबप्रयोगः. — *Adhy. no.* (figures, words or both): Dn3 151; D4m 154; T1 148; T2 G1.2 M 98; G1.2 99; G3.4 97. — *S'loka no.:* Dn 34 (Dn3 37); M3 33.

# १४०

C. 1. 5062
B. 1. 153. 1
K. 1. 160. 1

वैशंपायन उवाच ।
तां विदित्वा चिरगतां हिडिम्बो राक्षसेश्वरः ।
अवतीर्य द्रुमात्तस्मादाजगामाथ पाण्डवान् ॥ १
लोहिताक्षो महाबाहुरूर्ध्वकेशो महाबलः ।
मेघसंघातवर्ष्मा च तीक्ष्णदंष्ट्रोज्ज्वलाननः ॥ २
तमापतन्तं दृष्ट्वैव तथा विकृतदर्शनम् ।
हिडिम्बोवाच वित्रस्ता भीमसेनमिदं वचः ॥ ३
आपतत्येष दुष्टात्मा संक्रुद्धः पुरुषादकः ।
त्वामहं भ्रातृभिः सार्धं यद्ब्रवीमि तथा कुरु ॥ ४
अहं कामगमा वीर रक्षोबलसमन्विता ।
आरुहेमां मम श्रोणीं नेष्यामि त्वां विहायसा ॥ ५
प्रबोधयैनान्संसुप्तान्मातरं च परंतप ।
सर्वानेव गमिष्यामि गृहीत्वा वो विहायसा ॥ ६
भीम उवाच ।
मा भैस्त्वं विपुलश्रोणि नैष कश्चिन्मयि स्थिते ।
अहमेनं हनिष्यामि प्रेक्षन्त्यास्ते सुमध्यमे ॥ ७
नायं प्रतिबलो भीरु राक्षसापसदो मम ।
सोढुं युधि परिस्पन्दमथवा सर्वराक्षसाः ॥ ८

## 140

1 Ś$_{1}$ K$_{1.3}$ D$_{5}$ S om. उवाच. — $^{b}$) Ś$_{1}$ K$_{1}$ T$_{1}$ G$_{2}$ नाम राक्षसः (cf. 1. 139. 1); G$_{3}$ राक्षसोत्तमः. — $^{c}$) Ñ$_{3}$ द्रुमादस्माद्. — $^{d}$) Ñ$_{3}$ V$_{1}$ B$_{1.3}$ Dn आशु (for अथ).

2 $^{b}$) K$_{4}$ भयानकः; Ñ$_{2}$ V$_{1}$ B (except B$_{3}$) D (except D$_{2.5}$) T$_{1}$ महाननः. — For 2$^{cd}$, cf. v. l. 1. 139. 4 also. — $^{c}$) Ś$_{1}$ M$_{5-8}$ °संकाशवर्ष्मा (D$_{5}$ वर्णश्च) च; T$_{2}$ G °श्यामो महावर्ष्मा; Cd as in text. — $^{d}$) Ñ$_{2}$ V$_{1}$ B D (except D$_{5}$) T$_{1}$ °ष्ट्रो भयानकः. — After 2, S ins.:

1526* तलं तलेन संहत्य बाहू विक्षिप्य चासकृत् ।
उद्वृत्तनेत्रः संक्रुद्धो दन्तान्दन्तेषु निष्पिषन् ।

[ (L. 1) G$_{1.2}$ विस्फार्य; M चोत्क्षिप्य. — (L. 2) T$_{2}$ निष्कूषन्; G$_{1.2.6}$ M निष्कषन्. ]
Thereafter T G$_{1.2.4-6}$ read (for the first time) 17$^{ab}$ (v. l. कोऽयमे) and then cont.:

1527* न बिभेति हिडिम्बी च प्रेषिता किमनागता ।

(which is a v. l. of 17$^{cd}$). — After 1526*, G$_{6}$ ins. 1531* (cf. v. l. 20).

3 G$_{3}$ (hapl.) om. 3–20. Before 3, T G$_{5.6}$ ins. वैशं°. — $^{a}$) T$_{2}$ G$_{2.5}$ तमागतं तु. — $^{b}$) S (except T$_{1}$; G$_{3}$ om.) तथारूपं भयंकरं (M$_{6-8}$ भयानकं). — Before 3$^{cd}$, D$_{5}$ ins. राक्षस्युवाच. — $^{c}$) S (except T$_{1}$; G$_{3}$ om. हिडिंबी (for हिडिम्बा). D$_{5}$ वित्रस्तनेत्रा सुमुखी.

4 G$_{3}$ om. 4 (cf. v. l. 3). Before 4, K$_{3}$ ins. राक्षस्यु°; M$_{3.6-8}$ हिडिंबी. — $^{a}$) K$_{1}$ T$_{2}$ G$_{1.3.5}$ एव (for एष). — $^{c}$) Ñ$_{1.2}$ V$_{1}$ B D (except D$_{5}$) साहं त्वां; T G (G$_{3}$ om.) त्वं चापि (for त्वामहं).

5 G$_{3}$ om. 5 (cf. v. l. 3). — $^{a}$) K$_{0}$ Ñ$_{3}$ भीम; K$_{1}$ भीरु; T$_{2}$ G (G$_{3}$ om.) चैव (for वीर). — $^{c}$) S (except T$_{1}$; G$_{3}$ om.) आरोहेमां. Ñ$_{3}$ आरुहेमं मम पृष्ठं. — $^{d}$) K$_{0}$ Ñ$_{3}$ D$_{5}$ नयिष्ये त्वां. B$_{1}$m D$_{5}$ M$_{8}$ विहायसं.

6 K$_{1}$ M (hapl.) om. 6; G$_{3}$ om. 6 (cf. v. l. 3). — $^{a}$) B (except B$_{6}$) D$_{2}$ एनान् (for एतान्). T$_{2}$ G (G$_{3}$ om.) सोदर्यान् (for संसुप्तान्). — $^{b}$) T$_{2}$ G (G$_{3}$ om.) नरर्षभ (for परं°). — $^{c}$) Ś$_{1}$ विने°; K$_{4}$ Ñ$_{3}$ नयि°; G$_{6}$ ग्रही° (for गमि°). K$_{2}$ °नेवाद्य नेष्यामि. — $^{d}$) D$_{1}$ निबोध त्वं; D$_{5}$ नयिष्ये वो (for गृहीत्वा वो). Ñ$_{1}$ विहायसः; Ñ$_{2}$ B (except B$_{6}$) Dn D$_{2.4}$ T$_{1}$ नभः प्रति. T$_{2}$ G (G$_{3}$ om.) गृहीत्वा ख(G$_{4}$ -ह; G$_{6}$ व्यो)मसत्त्वत्.

7 G$_{3}$ om. 7 (cf. v. l. 3). Ś$_{1}$ K$_{1}$ भीमसेनः; K$_{3}$ D$_{3}$ S (G$_{3}$ om.) भीमः; K$_{4}$ भीमसेन उ°. — $^{a}$) Ś$_{1}$ K$_{1.3.4}$ Ñ$_{3}$ पृथुल°; K$_{3}$ V$_{1}$ Dn D$_{1}$ T$_{1}$ पृथुसु°. — $^{b}$) K$_{0.2.4}$ D$_{5}$ T G$_{1.2.4.6}$ नैष किंचिन्. — After 7$^{ab}$, Ś$_{1}$ K Ñ$_{2}$ B$_{3.6}$ Dn D$_{4.5}$ ins.:

1528* हिंसितुं शक्नुयाद्रक्ष इति मे निश्चिता मतिः ।

[ K$_{0.2}$ निश्चला मतिः. K$_{1}$ prior half corrupt. K$_{3}$ °क्नुयात्पापो राक्षसस्त्विति मे मतिः. D$_{5}$ शक्नुयात्पापः. ]
— On the other hand, D$_{2}$ ins. after 7$^{ab}$:

1529* एतान्बाधयितुं शक्तो देवो वा दानवोऽपि वा ।

— $^{c}$) G$_{1.2}$ वधिष्यामि. — $^{d}$) K$_{3}$ T$_{2}$ G (G$_{3}$ om.) पश्यंत्यास्ते. M$_{5}$ नायं प्रतिबलो मम (cf. 8$^{a}$).

8 G$_{3}$ om. 8 (cf. v. l. 3). — $^{a}$) K$_{2}$ D$_{5}$ नाल(D$_{5}$ °य)मल्पबलो ह्येष (D$_{5}$ भीरु); M$_{5}$ बलं न सहते भीरु. — $^{b}$) D$_{4}$ S (G$_{3}$ om.) °सापशदो. — $^{c}$) Dn सोयं. Ñ$_{1}$

पश्य बाहू सुवृत्तौ मे हस्तिहस्तनिभाविमौ ।
ऊरू परिघसंकाशौ संहतं चाप्युरो मम ॥ ९
विक्रमं मे यथेन्द्रस्य साद्य द्रक्ष्यसि शोभने ।
मावमंस्थाः पृथुश्रोणि मत्वा मामिह मानुषम् ॥ १०

हिडिम्बोवाच ।

नावमन्ये नरव्याघ्र त्वामहं देवरूपिणम् ।
दृष्टापदानस्तु मया मानुषेष्वेव राक्षसः ॥ ११

वैशंपायन उवाच ।

तथा संजल्पतस्तस्य भीमसेनस्य भारत ।
वाचः शुश्राव ताः क्रुद्धो राक्षसः पुरुषादकः ॥ १२
अवेक्षमाणस्तस्याश्च हिडिम्बो मानुषं वपुः ।
स्रग्दामपूरितशिखं समग्रेन्दुनिभाननम् ॥ १३
सुभ्रूनासाक्षिकेशान्तं सुकुमारनखत्वचम् ।
सर्वाभरणसंयुक्तं सुसूक्ष्माम्बरवाससम् ॥ १४
तां तथा मानुषं रूपं बिभ्रतीं सुमनोहरम् ।
पुंस्कामां शङ्कमानश्च चुक्रोध पुरुषादकः ॥ १५
संक्रुद्धो राक्षसस्तस्या भगिन्याः कुरुसत्तम ।
उत्फाल्य विपुले नेत्रे ततस्तामिदमब्रवीत् ॥ १६
को हि मे भोक्तुकामस्य विघ्नं चरति दुर्मतिः ।
न बिभेषि हिडिम्बे किं मत्कोपाद्विप्रमोहिता ॥ १७
धिक्त्वामसति पुंस्कामे मम विप्रियकारिणि ।
पूर्वेषां राक्षसेन्द्राणां सर्वेषामयशस्करि ॥ १८

C. 1. 5979
B. 1. 153. 18
K. 1. 165. 20

---

Ds M शक्तः; T2 G4.5 मम (for युधि). M5 परं हंतुं. — d) T G (G3 om.) अशक्ताः (for अथवा).

9 G3 om. 9 (cf. v. l. 3). — a) Ñ1 विवृत्तौ. — b) Ko Ñ1.3 °निभावुभौ; K3 °हस्तोपमाविमौ; S (except T1; G3 om.) °हस्तोपमौ शुभौ (G2 शुभे; G4 भुजौ). — d) Ñ3 संघातं. K1.2 Ñ V1 B D (except D5) T1 M महत् (for मम).

10 G3 om. 10 (cf. v. l. 3). — a) D5 G1.2 M महेंद्रस्य. — b) K3 D1 साक्षाद्; S (except T1; G3 om.) यथा (for साद्य). — d) Ñ3 °ह मानवं.

11 G3 om. 11 (cf. v. l. 3). Ko.1.3 हिडिंबा; T2 G (G3 om.) M हिडिंबी (M5 राक्षसी); K4 T1 om. the ref. — a) G5 नरश्रेष्ठ. — b) K3 मत्वा त्वां देव°. — c) Ko दृष्टा युवानस्तु; K2 B5m D1.5 दृष्टावदासस् (B5m °नास्; D1 °नस्; D5 °नं) तु; K3 दृष्टावदानासु; K4 V1 B1m.5.6 Dn D2.4 दृष्टप्रभाव(B5.6 °वा)स्तु; Ñ B1.3 दृष्टा(Ñ3 °ष्ट्वा)वदानं (B1.3 °नस्) तु; Da S (G3 om.) °प(Da T1 °व)दानास्तु. — d) K3 अथ; K4 B3m Da D1 T G (G3 om.) इह (for एव). K3 B5.6 Da S (G3 om.) राक्षसाः. Ko राक्षसश्चैव मानवाः.

12 G3 om. 12 (cf. v. l. 3). Ś1 K1 D2 S om. उवाच (G3 om. the ref.). — a) Ñ3 D2.5 T2 G1.4-6 M तया. Ñ3 संजल्पमानस्य. — c) G1.2.4 M3 वचः. T2 G (G3 om.) श्रुत्वा ततः; M3 श्रुत्वाभ्ययात्; M5-8 श्रुत्वा च (M5 तु) ताः. K4 तद् (for ताः). Ś1 Ko.2.3 Ñ1 क्षुद्रो; K4 रक्षो (for क्रुद्धो). — d) G1 पुरुषाकृतिः.

13 G3 om. 13 (cf. v. l. 3); G6 om. 13c-15b. — a) Ko D5 निरीक्षमाणस्. K2 M3 तस्यास्तु; K4 D5 तस्याशु. — Ko om. 13c-15a. — c) D5 M °शिखां; T2 G1.2.5 °भूषित(G5 °पण)शिखां. — d) K4 संपूर्णेंदु°; D5 °शुभाननां; S (except T1; G3.6 om.) °निभाननां.

14 Ko G3.6 om. 14 (cf. v. l. 3, 13). — a) D5 T2 G1.2.4.5 M2.5.8 °केशांतां. — c) K1 °पूर्ण°; K3 °पन्नं; S (except T1; G3.6 om.) °युक्तां. — d) Ś1 K1 Ñ1 सुसूक्ष्मांतर°; K2-4 B5 D5 °क्ष्मोत्तर°; Ñ3 सुसूक्ष्मं तनु°; S (except T1; G3.6 om.) °धारिणीं.

15 G3 om. 15; G6 om. 15ab; Ko om. 15a (cf. v. l. 3, 13). — a) S (except T1; G3.6 om.) भगिनीं (for तां तथा). Ñ2 °पं कल्पं. — b) T2 G1.2.5 M5-8 °हरां; M3 °रमां. — After 15ab, S (except T1 G3.6) ins.:

1530* स ददर्शाग्रतस्तस्य भीमस्य पुरुषादकः ।

— d) G3 चुक्रोश; G6 °कोप. S (except T1; G3 om.) स निशाचरः.

16 G3 om. 16 (cf. v. l. 3). — a) T2 G4.5 M3 तत्र; G2 M4 तस्य; M6-8 तं च (for तस्या). — b) T2 G4.5 M तां (M6-8 तान्) दृष्ट्वा; (for भगि°). Ś1 भरतर्षभ; K2.3 पुरुषादकः (for कुरु°). — c) S (G3 om.) विस्फार्य; Cd उत्फाल्य (as in text). K3 विकटे ने°. — d) Ko D5 M भगिनीं; Ñ3 ततस्तान्; G1.2 हिडिंबां (G2 °बीं).

17 Cf. v. l. 2 and 1527*. — G3 om. 17 (cf. v. l. 3). Before 17, M3.6-8 ins. हिडिंबः. — a) T1 G1.2.6 M3 कस्मान्मे. — b) T1 G1.2 M दुर्मते. Ko.4 विघ्नं कर्तुमिहेच्छति. — c) T2 G2.4.5 हिडिंबि. K3 T2 G4.5 त्वं; M मां (for किं). — d) T G4-6 कामाद्वै; G1.2 केन

C. 1. 6090 B. 1. 159. 19 K. 1. 160. 21

यानिमानाश्रितां कार्षीरप्रियं सुमहन्मम ।
एष तानद्य वै सर्वान्हनिष्यामि त्वया सह ॥ १९
एवमुक्त्वा हिडिम्बां स हिडिम्बो लोहितेक्षणः ।
वधायाभिपपातैनां दन्तैर्दन्तानुपस्पृशन् ॥ २०
तमापतन्तं संप्रेक्ष्य भीमः प्रहरतां वरः ।
भर्त्सयामास तेजस्वी तिष्ठ तिष्ठेति चाब्रवीत् ॥ २१

इति श्रीमहाभारते आदिपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

## १४१

वैशंपायन उवाच ।
भीमसेनस्तु तं दृष्ट्वा राक्षसं प्रहसन्निव ।
भगिनीं प्रति संक्रुद्धमिदं वचनमब्रवीत् ॥ १
किं ते हिडिम्ब एतैर्वा सुखसुप्तैः प्रबोधितैः ।
मामासादय दुर्बुद्धे तरसा त्वं नराशन ॥ २
मय्येव प्रहरैहि त्वं न स्त्रियं हन्तुमर्हसि ।
विशेषतोऽनपकृते परेणापकृते सति ॥ ३
न हीयं स्ववशा बाला कामयत्यद्य मामिह ।
चोदितैषा ह्यनङ्गेन शरीरान्तरचारिणा ।
भगिनी तव दुर्बुद्धे राक्षसानां यशोहर ॥ ४
त्वन्नियोगेन चैवेयं रूपं मम समीक्ष्य च ।
कामयत्यद्य मां भीरुर्नैषा दूषयते कुलम् ॥ ५

---

त्वं; M मत्क्रोधाद्.

18 G3 om. 18 (cf. v. l. 3). — a) S (except T1; G3 om.) धिक्त्वां पुरुषकामां वै. — b) S (G3 om.) कारिणीं (T1 °णी). — c) S (except T1; G3 om.) कुलस्य. — d) K4 अयशस्विनि; S (except T1; G3 om.) °स्करीं.

19 G3 om. 19 (cf. v. l. 3). — a) B1 आश्रितान्कार्षीर्. M यानिहाश्रित्य कार्षीस्त्वं. — b) Ñ2 V1 B D (except D5) T1 G4 विप्रियं. K0 सुमहद्विप्रियं मम; M विप्रियाणि ममांतिके. — cd) T2 G (G3 om.) एष तानाशु सर्वांस्तु. Ñ3 सह त्वया (by transp.). D5 एतानद्य हनिष्यामि भर्त्रांनेन त्वया सह.

20 G3 om. 20 (cf. v. l. 3). Before 20, S (except T1 G3 M5) ins. वैशं°. — a) T2 G (G3 om.) तां (for स). — b) K3 लोहिताशनः; M5 राक्षसेश्वरः. — c) Ś1 अनु-; G2 हि; M6-8 एव (for अभि-). — d) T2 G4-6 दंतान्दंतेषु निष्पि(T2 °ष्कृ-; G5 °ष्कु-; G6 °ष्क)षन्; G1.2 दंतान्दंतेन निष्कषन्; M8 दंतान्दंतैरनुस्पृशन्. — G3 resumes. — T G ins. after 20 (G3, after 2):

1531* गर्जन्तमेवं विजने भीमसेनोऽभिवीक्ष्य तम् ।
रक्षन्प्रबोधं भ्रातॄणां मातुश्च परवीरहा ।

21 a) T2 G आपतंतं च (T2 तु) संप्रेक्ष्य (G3 °तंतं समुद्वीक्ष्य). — d) G2 चाब्रुवन्.

Colophon om. in V1 B1.3.6 Da Dn D1.2.4 T1. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K0-3 Ñ B5 D5 M8 हिडिंबवध. — *Adhy. name:* K4 हिडिंबकोपः. — *Adhy. no.* (figures, words or both): T2 G5.6 M 99; G1.2 100; G3.4 98. — *S'loka no.:* M8 22.

### 141

1 Ś1 K1.3 D2.5 S (except T2 G6!) om. उवाच. — a) G1.2 स (G2 तं) भीमसेनस्तं दृष्ट्वा. — c) K3 °ति संरब्धाम्.

2 Before 2, M (except M5) ins. भीमः. — a) Ś1 ह्येतैर्वा; K4 तैः सर्वैः; G4 एष्टव्यं (for एतैर्वा). K0-3 Ñ3 B Da किं ते हिडिंबयैतैर्वा; T G3.5.6 किं ते प्रियं हिडिंबैतैः; G1.2 किं कार्यं ते हिडिंबैतैः. — b) T G विबोधितैः. — c) T2 G मामादाय सुदुर्बुद्धे. — d) Ñ3 राक्षसानां यशोहर (=4d); B3 m तव नैषापराध्यति (cf. v. l. 5).

3 a) K2 प्रहरेह त्वं; D5 प्रहर त्वं वै; M6-8 प्रहरैहि त्वं. T2 G राक्षस त्वमिमां चैव. — b) = 6a. — G3 (hapl.) om. 3c-6d. — c) Ś1 -नपेक्षाते; K0 नापकृतां; K3.4 -नपकृतां; B (except B1) D5 T2 G2.4.5 M नापकृते.

4 G3 om. 4 (cf. v. l. 3). — b) Ñ3 एव (for अद्य). Ś1 अपि (for इह). T2 G4.5 मां तु कामयतेद्य वै; G1.2 मयि कामातुराभवत्. — c) K0.2 नोदितैषा; G1.2 संप्रेषिता. — d) G1.2 सर्वप्राणिषु चारिणा. — ef) Ñ V1 B D T1 दुर्वृत्त (D1 दुष्टेयं; D5 as in text). रक्षसां वै यशो°.

5 G3 om. 5 (cf. v. l. 3). — a) Ś1 Da Cd मन्नियोगेन. K4 B. चैवैषा; T2 G (G3 om.) चायाता. — b) Ñ1 निरीक्षते; G1.2 M निरीक्ष्य च. — c) K2 भीरुः कामयते माद्य; T2 G (G3 om.) कामयत्येवमवशा; M

अनङ्गेन कृते दोषे नेमां त्वमिह राक्षस ।
मयि तिष्ठति दुष्टात्मन्न स्त्रियं हन्तुमर्हसि ॥ ६
समागच्छ मया सार्धमेकेनैको नराशन ।
अहमेव नयिष्यामि त्वामद्य यमसादनम् ॥ ७
अद्य ते तलनिष्पिष्टं शिरो राक्षस दीर्यताम् ।
कुञ्जरस्येव पादेन विनिष्पिष्टं बलीयसः ॥ ८
अद्य गात्राणि क्रव्यादाः श्येना गोमायवश्च ते ।
कर्षन्तु भुवि संहृष्टा निहतस्य मया मृधे ॥ ९
क्षणेनाद्य करिष्येऽहमिदं वनमकण्टकम् ।
पुरस्ताद्दूषितं नित्यं त्वया भक्षयता नरान् ॥ १०
अद्य त्वां भगिनी पाप कृष्यमाणं मया भुवि ।
द्रक्ष्यत्यद्रिप्रतीकाशं सिंहेनेव महाद्विपम् ॥ ११
निराबाधास्त्वयि हते मया राक्षसपांसन ।
वनमेतच्चरिष्यन्ति पुरुषा वनचारिणः ॥ १२

हिडिम्ब उवाच ।

गर्जितेन वृथा किं ते कत्थितेन च मानुष ।
कृत्वैतत्कर्मणा सर्वं कत्थेथा मा चिरं कृथाः ॥ १३
बलिनं मन्यसे यच्च आत्मानमपराक्रमम् ।
ज्ञास्यस्यद्य समागम्य मयात्मानं बलाधिकम् ॥ १४
न तावदेतान्हिंसिष्ये स्वपन्त्वेते यथासुखम् ।

C. 1. 5597
B. 1. 153. 36
K. 1. 165. 39

---

कामयत्यवशा भीरुः. — d) V1 B6 D (except D5) T1 तव (D4 तुभ्यं) नैषापराध्यति (cf. v. l. 2).

6 G3 om. 6 (cf. v. l. 3). — a) K0.4 Ñ1 कृतो दोषो. — b) K0 न मां; Ñ2 B1 नैनां. K4 Ñ2 V1 B D (except D5) T1 गर्हितुमर्हसि (for त्वमिह रा°). — After 6ab, G1.2 ins.:

1532* हन्तुमर्हसि दुर्बुद्धे शूरश्चेत्संहर स्मरम् ।

— D4 om. 6cd. — d)=3b. Ś1 K3 त्वं स्त्रियं; Ñ1.3 स्त्रियं वै (for न स्त्रियं). G1.2 यदि मां हंतुमिच्छसि. — After 6, G1.2 ins.:

1533* मदर्थं कामबाणार्तां त्वामहं हन्मि राक्षस ।

7 a) Ñ2 V1 B D (except D5) T1 G2.3 संगच्छस्व मया. Ś1 K1 साकं (for सार्धं). — c) V1 Dn अहमेको. Ś1 D1 हनिष्यामि; K1.3 Ñ1 B5 D4 M हि नेष्यामि; D5 Nil. (comm.) गमिष्यामि; T2 G3-6 तु नेष्यामि; Dn (erroneously) Nilp as in text. G1.2 एकोहमेव नेष्यामि.

8 a) Ñ2 V1 B D (except D5) T1 अद्य मद्तलनि°; G3 तत्ते तलत्रिनि°. — b) M3.5 दीर्यते; M6-8 शीर्यते. G1.2 शिरस्ते राक्षसाधम. — After 8ab, G1.2 ins.:

1534* शतधा भेदमायाति पूर्णकुम्भ इवाश्मनि ।

— cd) G6 om. 8cd. S (except T1; G6 om.) °स्येव निष्पिष्टं सिंहेनेव (T2 °नाति°; G4.5 M3.5 °न हि) बलीयसा.

9 a) K0 D5 गृध्राद्याः; Ñ1 चक्रांगाः; Ñ2.3m V1 B D (except D5) T1 ते कंकाः; Ñ3 वक्त्रांगाः; T2 G M गृध्राश्च (for क्रव्यादाः). K1 क्रव्यादा अद्य गात्राणि. — b) D5 श्वानो; S बला (M5 व्याला; T1 श्येना as in text). Ś1 K Ñ3 च ते (as in text); D5 च ये; the rest तथा. — c) G3 भक्षंतु. K3 तव (for भुवि). Ñ1.3 संप्रहृष्टास्ते (Ñ3 °ष्टा वै); Ñ2 B1.3.5 भृशसंहृष्टा; B6 Da D2.4 सुभृशं हृष्टा (for भुवि संहृष्टा). K0 कर्षयंतु सुसंहृष्टा. — d) Ś1 B3 महामृधे; G3 मया रणे; G5 मया वने.

10 a) S (except T1 G2) करिष्यामि. — b) Ñ2 V1 B D (except D5) T1 वनमराक्षसं. T2 G M वनं निहतकंटकं. — c) Ñ2 V1 B D (except D5) T1 पुरा यद्दूषितं. K3 नूनं; M6-8 तस्य.

11 a) K1 D5 T2 G M पापं; Ñ2 V1 B Da Dn D1.2.4 T1 रक्षः. — b) Ñ2 V1 B D (except D5) T1 मयासकृत्. — c) Ś1 K0.4 Ñ3 D5 द्रक्ष्यते°. — d) K1 महागजं.

12 M om. 12. — a) T2 G (except G6) निराबाधं. — b) Ñ2 °पांसुल. — c) K0 वनमेते; K4 सुखमेतच्.

13 K0.3 राक्षस उ°; T1 G1.2 M5 हिडिंबः; T2 G3-6 M3.6-8 राक्षसः. — K1 om. 13a-14b. — a) G1.2 गर्जनेन. T2 G भृशं किं ते. — b) G1.2.6 M6-8 कत्थनेन; Cd as in text. T2 G मानव. — After 13ab, M3 ins.:

1535* शारदस्येव मेघस्य गर्जितं निष्फलं हि ते ।

— c) Ñ1 त्वत्कृते कर्मणा. Ś1 K0.2.4 D5 पूर्वं; D2 सार्धं (for सर्वं). — d) Ñ2 B6 D4 कत्थ मा; M कत्थ्यतां (for कत्थे°). G1.3 वृथा (for कृथाः). K0 D5 कथय त्वं नराधिप (D5 °धम).

14 K1 om. 14ab (cf. v. l. 13); B6 om. 14a-17b. — a) K2 Ñ1 यत्त्वम्; D5 S यस्माद् (G3 यन्माम्; T1 यच्च as in text). — b) Ś1 K0.3 Ñ2.3 V1 B3 Dn D1 T1 ins. अपि between the two halves of the line (to avoid the hiatus). Ś1 च पराक्रमः; K0 त्वं न मांसभुक्; K2 D2 स्वपराक्रमात् (D2 °क्रमं); K4 Ñ V1 B3 Dn D1.4 सपरा°; B1.5 Da सुपरा°; M3 अपराजितं. G2 आत्मनस्तु पराक्रमं. — c) T2 G (except G3) ज्ञास्यसे. K3 त्वं (for अद्य). D5 समागत्य; T2 G मयागम्य (G1.2 °त्य). — d) T2 G बलहीनं ततो भुवि.

15 B6 om. 15 (cf. v. l. 14). — a) M6-8 एनान्.

C. 1. 5697 B. 1. 153. 30 M. 1. 165. 30 एष त्वामेव दुर्बुद्धे निहन्म्यद्याप्रियंवदम् ॥ १५
पीत्वा तवासृग्गात्रेभ्यस्ततः पश्चादिमानपि ।
हनिष्यामि ततः पश्चादिमां विप्रियकारिणीम् ॥ १६
वैशंपायन उवाच ।
एवमुक्त्वा ततो बाहुं प्रगृह्य पुरुषादकः ।
अभ्यधावत संक्रुद्धो भीमसेनमरिंदमम् ॥ १७
तस्याभिपततस्तूर्णं भीमो भीमपराक्रमः ।
वेगेन प्रहृतं बाहुं निजग्राह हसन्निव ॥ १८
निगृह्य तं बलाद्भीमो विस्फुरन्तं चकर्ष ह ।
तस्माद्देशाद्धनूंष्यष्टौ सिंहः क्षुद्रमृगं यथा ॥ १९
ततः स राक्षसः क्रुद्धः पाण्डवेन बलाद्धृतः ।
भीमसेनं समालिङ्ग्य व्यनदद्भैरवं रवम् ॥ २०
पुनर्भीमो बलादेनं विचकर्ष महाबलः ।
मा शब्दः सुखसुप्तानां भ्रातॄणां मे भवेदिति ॥ २१
अन्योन्यं तौ समासाद्य विचकर्षतुरोजसा ।
राक्षसो भीमसेनश्च विक्रमं चक्रतुः परम् ॥ २२

---

T2 G नेमांस्तावद्धनि( T2 G3.6 °द्गधि )ष्यामि. — $^{b}$) K1.4 B5 D2 स्वपंते ते. — $^{c}$) D5 दुर्बुद्धि. G1.2 हत्वा त्वां प्रथमं हन्मि. — G1.2 om. 15$^{d}$–16$^{a}$. — $^{d}$) K0 निहन्म्याम॰प्रियंवदं; T2 G3–6 हनिष्येप्रियवादिनं.

16 B6 om. 16 (cf. v. l. 14); G1.2 om. 16$^{a}$. — $^{b}$) Ñ3 तथा; D5 च्युतं; T2 G3–6 पुनः (for ततः). Ś1 असूनपि. G1.2 पश्चात्सुप्तानिमानपि (G2 °न्नर). — $^{c}$) K0 D5 T2 G3–6 M ततः क्षुद्राम्; B1 ततः पापाम्. G1.2 तत्पश्चात्कामिनीमेनां. — $^{d}$) K0 एनां (for इमां). K0.3 M चाप्रियका°. G1.2 हिडिंबीं त्वयि कौतुकां.

17 B6 om. 17$^{ab}$ (cf. v. l. 14). Ś1 K1.3 D5 om. उवाच; B (except B6) Da D2.4 G4 om. the ref. — $^{a}$) K0.3.4 ततो बाहू; Ñ2 B (B6 om.) Da D2.4 T2 G3–6 महाबाहुं (T2 G3–6 °हुः). G1.2 इत्युक्त्वाभ्यद्रवद्भीमं. — $^{b}$) K3 प्रस्फोट्य; Ñ1 निगृह्य; T2 G3–6 संनद्धः. G1.2 संक्रुद्धो भैरवं नदन्. — $^{c}$) Ñ2 V1 B D (except D5) T1 अभ्यद्रवत (D1 °त्स) सं°; T2 G3–6 °धावत्सुसं°; G1.2 विवृत्तास्यो विवृत्ताक्षो. — $^{d}$) G1.2 भुजमुद्यम्य वेगवान्.

18 $^{a}$) Ñ2 V1 B D (except D5) T1 अभिद्रवतस्. — $^{c}$) K (except K1) Ñ3 V1 B D (except D5) T1 M5 प्रहितं; Ñ1 T2 G प्रसृ°. — $^{d}$) T2 G4–6 प्रसन्निव.

19 $^{a}$) Ś1 K1.3 D5 प्रगृह्य; G3 प्रहृत्य. G5 एनं (for तं). D1 निगृह्य पुरुषव्याघ्रो. — $^{d}$) K3 क्रुद्धो मृगं.

20 $^{a}$) T2 G तथा (G1 °दा). — $^{b}$) K1 D1 बलादितः; Ñ2 V1 B Da Dn D2.4 T1 बलार्दितः; G1.2 बलीयसा. — $^{c}$) K1 समागम्य; K3 °श्लिष्य (cf. v. l. 22). — G1 (hapl.) om. 20$^{d}$–22$^{a}$. — $^{d}$) G6 भैरवस्वनं.

21 G1 om. 21 (cf. v. l. 20). Before 21, M (except M5) ins. वैशं°. — $^{b}$) Ñ3 महाबलं. — $^{d}$) B (except B6) Da D2.4 समभूदिति. — After 21, T1 G1.2 ins.:

1536* हस्ते गृहीत्वा तद्रक्षो दूरमन्यत्र नीतवान् ।
पुच्छे गृहीत्वा तुण्डेन गरुडः पन्नगं यथा ।

22 G1 om. 22$^{a}$ (cf. v. l. 20). — $^{a}$) S (except T1 G2; G1 om.) वै (for तौ). K0 S (except T1; G1 om.) समालिंग्य; K3 °श्लिष्य (cf. v. l. 20). — $^{c}$) K0.2.4 V1 Dn D1.5 T1 M5 हिडिंबो भीम°. — $^{d}$) S (except T1) भृशं (for परम्). — After 22, G3 ins. 1538* (cf. v. l. 23). — G1.2 (both om. 23$^{ab}$).4 (om. 23) ins. after 22: T1 (om. line 1), after line 9 of 1538*:

1537* भङ्क्त्वा वृक्षान्महाशाखांस्ताडयामासतुः क्रुधा ।
सालतालतमालाम्रवटार्जुनविभीतकान् ।
न्यग्रोधप्लक्षखर्जूरपनसानश्मकण्टकान् ।
एतानन्यान्महावृक्षानुत्खाय तरसाखिलान् ।
उत्क्षिप्यान्योन्यरोषेण ताडयामासतू रणे । [5]
यदाभवद्वनं सर्वं निर्वृक्षं वृक्षसंकुलम् ।
तदा शिलाश्च कुञ्जांश्च वृक्षान्कण्टकिनस्तथा ।
ततस्तौ गिरिशृङ्गाणि पर्वतांश्चाभ्रलेलिहान् ।
शैलांश्च गण्डपाषाणानुत्खायादाय वैरिणौ ।
चिक्षेपतुरुपर्याजावन्योन्यं विजयैषिणौ । [10]
तद्वनं परितः पञ्च योजनं निर्महीरुहम् ।
निर्लतागुल्मपाषाणं निर्मृगं चक्रतुर्भृशम् ।
तयोर्युद्धेन राजेन्द्र तद्वनं भीमरक्षसोः ।
मुहूर्तेनाभवत्कूर्मपृष्ठवच्छ्लक्ष्णमव्ययम् ।

[ (L. 3) T1 °पनसानश्वकर्णकान्. — (L. 9) T1 शिलाश्च गंड°. — (L. 10) T1 अन्योन्यमरणैषिणौ. — (L. 12) T1 °पाषाणपर्वतं. — (L. 14) T1 अव्रणं (for अव्ययम्). ]

23 G1.2 om. 23$^{ab}$; G3.4 om. 23. — $^{a}$) K1 महावृक्षां; Ñ2 V1 B D (except D5) T1 G5 M5 तदा वृक्षान्. — $^{b}$) K0.2–4 शिलाः (for लताः). K0 om. च. K0.2–4 Ñ2.3 V1 B1 Dn D1.5 T1 तदा; Ñ1 तथा (for ततः). Ś1 K1 शिलाश्चैव चकर्षतुः; T2 G5.6 M3.5 लताश्च विचकर्षतुः; M6–8 लताश्चापि चकर्षतुः. — $^{c}$) V1 B6 Da Dn D1 T1 च (for सु-). Ñ3 S (except T1; G3.4 om.) च (G1.2 M5

बभञ्जतुर्महावृक्षाल्लँताश्चाकर्षतुस्ततः ।
मत्ताविव सुसंरब्धौ वारणौ षष्टिहायनौ ॥ २३

तयोः शब्देन महता विबुद्धास्ते नरर्षभाः ।
सह मात्रा तु ददृशुर्हिडिम्बामग्रतः स्थिताम् ॥ २४

इति श्रीमहाभारते आदिपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

## १४२

वैशंपायन उवाच ।
प्रबुद्धास्ते हिडिम्बाया रूपं दृष्ट्वातिमानुषम् ।
विस्मिताः पुरुषव्याघ्रा बभूवुः पृथया सह ॥ १
ततः कुन्ती समीक्ष्यैनां विस्मिता रूपसंपदा ।
उवाच मधुरं वाक्यं सान्त्वपूर्वमिदं शनैः ॥ २
कस्य त्वं सुरगर्भाभे का चासि वरवर्णिनि ।
केन कार्येण सुश्रोणि कुतश्चागमनं तव ॥ ३
यदि वास्य वनस्यासि देवता यदि वाप्सराः ।
आचक्ष्व मम तत्सर्वं किमर्थं चेह तिष्ठसि ॥ ४
हिडिम्बोवाच ।
यदेतत्पश्यसि वनं नीलमेघनिभं महत् ।
निवासो राक्षसस्यैतद्धिडिम्बस्य ममैव च ॥ ५

C. 1. 6011
B. 1. 154. 5
K. 1. 166. 5

---

सु-) संक्रुद्धौ. — d) Ko T2 G (G3.4 om.) मातंगौ (for वारणौ). T2 G1.2 M (except M5) षाष्टि°. — T G1.2.4.5 (om. lines 8–12).6 ins. after 23: G3 (om. lines 1, 11, 12), after 22:

1538* पादपानुद्धरन्तौ तावूरुवेगेन वेगितौ ।
स्फोटयन्तौ लताजालान्यूरुभ्यां गृह्य सर्वशः ।
वित्रासयन्तौ तौ शब्दैः सर्वतो मृगपक्षिणः ।
बलेन बलिनौ मत्तावन्योन्यवधकाङ्क्षिणौ ।
भीमराक्षसयोर्युद्धं तदावर्तत दारुणम् । [5]
ऊरुबाहुपरिक्लेशात्कर्षन्तावितरेतरम् ।
उत्कर्षन्तौ विकर्षन्तौ प्रकर्षन्तौ परस्परम् ।
ततः शब्देन महता गर्जन्तौ तौ परस्परम् ।
पाषाणसंघातनिभैः प्रहारैरभिजघ्नतुः ।
अन्योन्यं तौ समालिङ्ग्य विकर्षन्तौ परस्परम् । [10]
बाहुयुद्धमभूद्घोरं बलिवासवयोरिव ।
युद्धसंरम्भनिर्गच्छत्फूत्काररवनिस्वनम् ।

[ (L. 5) T1 तदा तु दारुणं युद्धं चक्रतुर्भीमराक्षसौ. — After line 5, G1.2.4 ins.:

1539* पुरा देवासुरे युद्धे वृत्रवासवयोरिव ।

— (L. 7) Cf. 1. 142. 12ab. T G3–6 उत्कर्षणं विकर्षणमपकर्षणमेव च. — (L. 8) Cf. 1. 142. 12ab. G1.2 तौ शब्देन विना राजन् (for the prior half). — (L. 9) G1.2 °संघट्टनिभैः. — (L. 12) T2 G4.6 °फूत्काराराव°. ]

24 b) Dn3 M3.5 प्रबुद्धास्. G1.2 पांडुसंभवाः (for ते नर°). — c) K2.3 Ñ1 V1 B D T1 च; Ñ2 हि; Ñ3 T2 G अथ (for तु). M सह मात्रा ददृशिरे. — d) G1–3 हिडिंबीं. Ñ3 तु स्थितामिति; T1 अग्रचेष्टितां; G1.2 पुरतः स्थितां.

Colophon om. in Ñ2 D1. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K0–3 Ñ1.3 V1 B1.5.6 Da Dn D2.4 T1 M3.6–8 हिडिंबवध. — *Adhy. name:* K4 D5 भीमसेनहिडिंबयोर् (D5 °डिंब) युद्धं. — *Adhy. no.* (figures, words or both): B1 T1 149; Dn3 152; D4 m 155; T2 G5.6 M 100; G1.2 101; G3.4 99. — *S'loka no.:* Dn 45; M3 25. — *Aggregate s'loka no.:* Dn2 5994.

### 142

1 Ś1 K1.3 D5 S om. उवाच; D1 om. the ref. — a) K1 विबुद्धास्ते. — b) T2 G रूपमालोक्य शोभनं. — c) G1.2 °ता रूपसंपस्या (cf. 2b).

2 a) G3 समेत्य (for समीक्ष्य). — d) K3.4 D5 G7 वचः; K4 यथा (for शनैः).

3 Before 3, K0 D5 ins. कुंती उ°; K3.4 D4 (marg. *sec. m.*) कुंत्युवाच; M (except M5) कुंती. — b) K0.2 Ñ1.2 V1 B Dn D2 G1 M5 वा (for च). — c) Ñ2 V1 B D (except D5) T1 संप्राप्ता; G6 सुभगे (for सुश्रो°).

4 a) Ś1 K2 चास्य; K0 M6.7 वापि; K1 Ñ1 T2 G (except G3) M3 वासि; K4 Ñ2.3 M5 चापि; M8 नापि. Ś1 K1–4 V1 Dn D1 T1 °स्य त्वं; K0 Ñ B D5 T2 G M °स्यास्य (G3 °स्य). — b) A few MSS. °प्सरा. — c) M भद्रे (for मम). — d) K0.2 om. च.

5 K1.3 Ñ3 S om. उवाच. — b) G1.2 °मेघसमप्रभं. — c) K0.4 Ñ3 D5 M इह; K1–3 Ñ1.2 V1 B D12 Dn2.n3 D1.2.4 T1 एष; Da1 Dn1 एव; G4 इति (for एतद्). — d)

C. 1. 6012
B. 1. 154. 6
K. 1. 166. 6

तस्य मां राक्षसेन्द्रस्य भगिनीं विद्धि भामिनि ।
भ्रात्रा संप्रेषितामार्ये त्वां सपुत्रां जिघांसता ॥ ६
क्रूरबुद्धेरहं तस्य वचनादागता इह ।
अद्राक्षं हेमवर्णाभं तव पुत्रं महौजसम् ॥ ७
ततोऽहं सर्वभूतानां भावे विचरता शुभे ।
चोदिता तव पुत्रस्य मन्मथेन वशानुगा ॥ ८
ततो वृतो मया भर्ता तव पुत्रो महाबलः ।
अपनेतुं च यतितो न चैव शकितो मया ॥ ९
चिरायमाणां मां ज्ञात्वा ततः स पुरुषादकः ।
स्वयमेवागतो हन्तुमिमान्सर्वांस्तवात्मजान् ॥ १०
स तेन मम कान्तेन तव पुत्रेण धीमता ।
बलादितो विनिष्पिष्य व्यपकृष्टो महात्मना ॥ ११
विकर्षन्तौ महावेगौ गर्जमानौ परस्परम् ।
पश्यध्वं युधि विक्रान्तावेतौ तौ नरराक्षसौ ॥ १२

वैशंपायन उवाच ।

तस्याः श्रुत्वैव वचनमुत्पपात युधिष्ठिरः ।
अर्जुनो नकुलश्चैव सहदेवश्च वीर्यवान् ॥ १३
तौ ते ददृशुरासक्तौ विकर्षन्तौ परस्परम् ।
काङ्क्षमाणौ जयं चैव सिंहाविव रणोत्कटौ ॥ १४
तावन्योन्यं समाश्लिष्य विकर्षन्तौ परस्परम् ।
दावाग्निधूमसदृशं चक्रतुः पार्थिवं रजः ॥ १५
वसुधारेणुसंवीतौ वसुधाधरसंनिभौ ।

---

K0.2.3 अपि (for एव). G1.2 नृभोजिनः (for ममैव च).

6 ᵇ) Ñ3 V1 B Da Dn1.n3 D1.2 भाविनि. — ᵈ) K2 D4 transp. त्वां and सपुत्रां. Ñ2.3 V1 B D जिघांसितुं (D5 °सया).

7 ᵃ) K2 दुष्टबुद्धेर्. — ᵇ) Ś1 K Ñ1 V1 B5.6 Dn D1.5 T1 °ता त्विह; Ñ2 B1.3 Da D2.4 °तास्मि ह. — D2 om. 7ᶜ–9ᵇ. — ᶜ) Ś1 K3.4 हेमगर्भाभं; Ñ1 मेघ°; Ñ2 V1 B Da Dn D1.4 T1 नवहेमाभं; D5 अब्जगर्भाभं. — ᵈ) K3 Ñ1 T2 G M वृकोदरं; Ñ2 V1 B D (D2 om.) T1 महाबलं (D5 °लः).

8 D2 om. 8 (cf. v. l. 7). — ᶜ) K0.2.4 D5 नोदिता; K3 देशिता. S पुत्रार्थं. — ᵈ) M3.5.7 मन्मथस्य; M6.8 °नस्य. B3 वशीकृता; M8 शरानुगा.

9 D2 om. 9ᵃᵇ (cf. v. l. 7). — ᵃ) Ñ3 transp. वृतो and मया. — ᵇ) K3 वृकोदरः; T2 G त्वनिंदिते. — ᶜ) M5 अनुनेतुं; Cd as in text. S व्यवसितो (for च य°). — ᵈ) Ś1 एनं; K (except K3) S (except M3.5) एवं (for एव). K4 D1 T G M6–8 शंकितो (T1 शक्यते); M3.5 कथितो.

10 ᵃ) T2 G अयं (for स). — K0 om. 10ᶜ–11ᵇ. — ᵈ) Ś1 K1 तदा; M8 तथा (for तव).

11 K0 om. 11ᵃᵇ (cf. v. l. 10). — ᵃᵇ) S (except T1) transp. मम कान्तेन and तव पुत्रेण. — ᶜ) K2 Da1 बलार्दितो. K0 विनिष्क्रम्य; K3.4 Ñ1 D5 M3.5 °ष्कृष्य. — ᵈ) Ś1 K (except K3) V1 Dn D1.5 व्यपनीतो.

12 M8 om. 12ᵃ–14ᵇ. — ᵃ) G1.2 व्याकर्ष°. B3 महात्मानौ. — ᵇ) T2 G (except G3) गर्जंतौ च. K3 यथा घनौ. — ᶜ) K0 Ñ1.3 M (M8 om.) पश्यस्व; K1.2.4 Ñ2 B (except B1) Da D5 T2 G (except G5) पश्य त्वं; V1 Dn पश्यैवं; T1 पश्य तौ. — ᵈ) K0.2 T2 G M (M8 om.) transp. एतौ and तौ. K3 तु; Ñ1.2 V1 B D (except D5) च (for तौ). — After 12, K0 ins.:

1540* युध्यन्तौ विजयाकाङ्क्षी राक्षसो मन्दबुद्धिमान् ।
न वाञ्छे(ऽहं) जीवितं भ्रातुः कदा ये दुष्टकर्मणः ।

13 M8 om. 13 (cf. v. l. 12). Ś1 K1.3 D2.5 T G M8 om. उवाच; M5–7 om. the ref. — ᵃ) T2 G तस्यास्तद्वचनं श्रुत्वा.

14 M8 om. 14ᵃᵇ (cf. v. l. 12). — ᵃ) Ś1 K3 T2 G1.3–5 ते तौ (by transp.); G2 M3.5 ततो. Ś1 K0–2 B1m.3m Da1m D5 Cd Arjp °रायत्तौ; Ñ1 °रासन्नौ. — ᵇ)=15ᵇ. Ñ1 गर्जमानौ (for विक°). — K1 (hapl.) om. 14ᶜ–15ᵇ. — ᶜ) K2.4 D5 युद्धे (for चैव). G1.2 विजयं कांक्षमाणौ च. — ᵈ) M मत्तौ (for सिंहौ). K0.2 D5 G3 मदोत्कटौ; K3 Ñ V1 B Da Dn D1.2.4 T1 बलो°; M महागजौ.

15 K1 om. 15ᵃᵇ (cf. v. l. 14). — ᵃ) K3 Ñ2 V1 B D (except D5) T1 अथ (for तौ). Ś1 K2.4 D5 समासाद्य; K0 Ñ1.3 M6–8 °लिंग्य (cf. v. l. 1. 141. 20, 22). — ᵇ)=14ᵇ. T2 G1.4.5 निष्पिपंतौ; G2.3.6 निष्पतंतौ. K0 D5 महाबलौ; Ñ V1 B Da Dn D1.2.4 T1 पुनः पुनः. — ᶜ) T2 G4 M3.5 दवा°; G1.2 °संकाशं.

16 ᵃ) M5 पांसुधारेण सं°. — K0 om. 16ᵇᶜᵈ. — ᵇ) D5 वसुवासवसं°. — ᶜ) Ś1 व्यभ्रा°; K3 Ñ V1 B Da Dn3 D1.4 M बभ्राजतुर्; K4 भ्राजेतां तौ; Dn1.n3 D1 T1 विभ्राजतुर्; D5 विभ्राजंतौ; T2 G विभ्राजेते. K3 वृक्षौ (for शैलौ). — ᵈ) Ñ1 °रेणैव सं°. — After 16, T G ins.:

विभ्राजेतां यथा शैलौ नीहारेणाभिसंवृतौ ॥ १६
राक्षसेन तथा भीमं क्लिश्यमानं निरीक्ष्य तु ।
उवाचेदं वचः पार्थः प्रहसञ्शनकैरिव ॥ १७
भीम मा भैर्महाबाहो न त्वां बुध्यामहे वयम् ।
समेतं भीमरूपेण प्रसुप्ताः श्रमकर्शिताः ॥ १८
साहाय्येऽस्मि स्थितः पार्थ योधयिष्यामि राक्षसम् ।
नकुलः सहदेवश्च मातरं गोपयिष्यतः ॥ १९

भीम उवाच ।

उदासीनो निरीक्षस्व न कार्यः संभ्रमस्त्वया ।
न जात्वयं पुनर्जीवेन्मद्बाह्वन्तरमागतः ॥ २०

अर्जुन उवाच ।

किमनेन चिरं भीम जीवता पापरक्षसा ।
गन्तव्यं न चिरं स्थातुमिह शक्यमरिंदम ॥ २१
पुरा संरज्यते प्राची पुरा संध्या प्रवर्तते ।
रौद्रे मुहूर्ते रक्षांसि प्रबलानि भवन्ति च ॥ २२
त्वरस्व भीम मा क्रीड जहि रक्षो विभीषणम् ।
पुरा विकुरुते मायां भुजयोः सारमर्पय ॥ २३

वैशंपायन उवाच ।

अर्जुनेनैवमुक्तस्तु भीमो भीमस्य रक्षसः ।
उत्क्षिप्याभ्रामयद्देहं तूर्णं गुणशताधिकम् ॥ २४

C. 1. 6031
B. 1. 154. 25
K. 1. 166. 31

---

1541* ते पश्यन्तो महद्युद्धं सर्वे व्यथितचेतसः ।
[ G1.2 transp. ते and पश्यंतः. ]

17 $^{a}$) K1 ततो; K4 Ñ1.2 V1 Dn D1 M3 तदा; T2 G बलाद्. — $^{b}$) K4 कृष्यमाणौ; T2 क्लिष्य°; G3 पीड्य°. Ko.3 समीक्ष्य. V1 B Dn D1 T G च; D2 इ; M तं (for तु). — After 17$^{ab}$, T G ins.:

1542* चिरप्रयुद्धौ तौ दृष्ट्वा त्वयोन्यवधकाङ्क्षया ।
[ G1 चिरयुद्धौ कृतौ द°; G6 °द्धौ दृष्ट्वा च. T1 G2.4 च (for तु). G6 om. तु. G1.2 °कांक्षिणौ. ]

— $^{c}$) B (B1 marg.) Da D2 ततः (for वचः). K3 उवाच वचनं पा°. — $^{d}$) K1 तदा (for इव). T2 G प्रहसन्निव भारत.

18 Before 18, D4 (marg. *sec. m.*) ins. अर्जुन उ°; G1 M अर्जुनः. — $^{a}$) Ñ3 transp. भीम and मा भैर्. G1.2 M भीम (for मा भैर्). — $^{b}$) Some MSS. त्वा (for त्वां). — $^{d}$) Ñ2 V1 B D (except D5) T1 रक्षसा (for प्रसु°). Ś1 K2.4 Ñ V1 B Da Dn1.n2 D1 °कर्पिताः (B5.6 °तं); K1 °कल्पिताः; D4 °कर्शितं; G1 °निर्जिताः.

19 $^{a}$) Ko T1 M3 सहाये; K1.2.4 T2 G (except G4) सहायो. G (except G4.5) पार्श्वे (for पार्थ). — $^{b}$) Ñ2 V1 B D (except D5) T1 पातयि°; G1.2 यो वधिष्या°. — $^{c}$) M यमौ च राजा कौंतेयो. — $^{d}$) Ś1 पालयिष्य°.

20 K1 S om. उवाच. Ś1 Da2 भीमसेनः (for भीम उ°). — $^{d}$) T2 G मद्भुजांतरम्. M आश्रितः (for आग°). Ko Da D5 मम बाह्वंतरे स्थितः (Da °तरं गतः). — After 20, T G (T2 G3.5.6 om. lines 1–2) ins.:

1543* भुजयोरन्तरं प्राप्तो भीमसेनस्य राक्षसः ।
अमुक्त्वा पार्थ वीर्येण मृतो मा भूदिति ध्वनिः ।
अयमस्मान्न नो हन्याज्जातु वै पार्थ राक्षसः ।
जीवन्तं न प्रमोक्ष्यामि मा भैषीर्भरतर्षभ ।

[ (L. 2) G1.2 अमुक्त्वा. — (L. 4) T2 G4 हि (for प्र°). ]

21 Ś1 K1 S om. उवाच. — After अर्जुनः, T G ins.:

1544* पूर्वरात्रे प्रबुद्धोऽसि भीम क्रूरेण रक्षसा ।
क्षपा व्युष्टा न चेदानीं समाप्तोऽसि महारणम् ।
[ (L. 1) G3-5 प्रयु°. — (L. 2) T1 G1 समाप्तस्तु; T2 G6 °माप्तोपि; G2 °माप्तं तु. T1 G1 °रणः; G3 त्वया रणं. ]

— $^{a}$) B5 वीर; G1.2 भूप (for भीम). — $^{b}$) T2 G दुष्टचारिणा (for पाप°). — $^{c}$) Ko Ñ V1 B D T1 गंतव्ये न (D5 °व्योपि; T1 °व्यो न); T2 G नांतरेण. — $^{d}$) S (except T1) परंतप (for अरिंदम).

22 $^{a}$) Ñ1 दिशा; D5 यावत्; Arj. (comm.) Cd पुरः (=अग्रतः); Da (erroneously) Arjp पुरा (as in text). D5 न रज्यते काष्टा. — $^{b}$) D5 पूर्वसंध्या. — $^{d}$) Ś1 बलवंति (for प्रब°). K1 इ; K4 M3.5 हि; Ñ V1 B D (except D5) T1 उत (for च). T2 G भवंति बलवंति च.

23 $^{a}$) Ko भैस्त्वं; Ñ2 B1.2 ह्यासीर्; Ñ3 भीत; S (except T1 G1) लीला (G3.5 °ल; G4 °लां) (for क्रीड). — $^{b}$) Many MSS. विभी°. — $^{d}$) Ś1 K भुजाभ्यां साधु योक्त्रय (K4 योधयन्); D5 जानुभ्यां साधु योजय. — After 23, T2 G ins.:

1545* माहात्म्यमात्मनो वेत्थ नराणां हितकाम्यया ।
रक्षो जहि यथा शक्रः पुरा वृत्रं महावने ।
[ (L. 2) T2 G4 महाहवे; G1.2 महासुरं. ]

Thereafter T G read 26–27.

24 Ś1 K1.2.4 S om. उवाच (K4 M6-8 om. the ref.). — After 24$^{a}$, K4 Ñ V1 B D (for D5 see below) T1 ins.:

1546* भीमो रोषाज्ज्वलन्निव ।
बलमाहारयामास यद्वायोर्जगतः क्षये ।
ततस्तस्याम्बुदाभस.

C. 1. 6052
B. 1. 154. 20
K. 1. 160. 33

भीम उवाच ।

वृथामांसैर्वृथा पुष्टो वृथा वृद्धो वृथामतिः ।
वृथामरणमर्हस्त्वं वृथाद्य न भविष्यसि ॥ २५

अर्जुन उवाच ।

अथ वा मन्यसे भारं त्वमिमं राक्षसं युधि ।
करोमि तव साहाय्यं शीघ्रमेव निहन्यताम् ॥ २६
अथ वाप्यहमेवैनं हनिष्यामि वृकोदर ।
कृतकर्मा परिश्रान्तः साधु तावदुपारम ॥ २७

वैशंपायन उवाच ।

तस्य तद्वचनं श्रुत्वा भीमसेनोऽत्यमर्षणः ।
निष्पिष्यैनं बलाद्भूमौ पशुमारममारयत् ॥ २८
स मार्यमाणो भीमेन ननाद विपुलं स्वनम् ।
पूरयंस्तद्वनं सर्वं जलार्द्र इव दुन्दुभिः ॥ २९
भुजाभ्यां योक्त्रयित्वा तं बलवान्पाण्डुनन्दनः ।
मध्ये भङ्क्त्वा स बलवान्हर्षयामास पाण्डवान् ॥ ३०
हिडिम्बं निहतं दृष्ट्वा संहृष्टास्ते तरस्विनः ।

---

D5 (om. line 1) ins. the rest after 24ab, completing the last half line by repeating (with v. l.) 24b. — b) N2.3 V1 B D (D5 second time) T1 रोषात्तु (for भीमस्य). K3 G1 M भीमो भीमपराक्रमः. — cd) B1 D3.4 T G M3 °प्य भ्रामयत्. T2 G transp. देहं and तूर्णं. K0.2 D5 °प्य भ्रामयामास. K0.2 देहं; Ñ1 देशं; B5 हंतुं (for तूर्णं). Ś1 Ñ गुणशतादपि; K0 V1 B3m.5.6 Dn D1.2.4.5 शतगुणं तदा (K0 D5 बहिः); K2.4 शतगुणादधि; K3 °शतावधि; S (except G6 M6–8) शतगुणाधिकं; Cd as in text. — After 24, T G ins.:

1547* इति चोवाच संक्रुद्धो भ्रामयन्राक्षसं तु सः ।
भीमसेनो महाबाहुरभिगर्जन्मुहुर्मुहुः ।

[ (L. 1) T2 भ्रामयामास राक्षसं; G2 °न्राक्षसीं तनुं. ]

25 T2 G M om. भीम उ°. Ś1 K1 B3 भीमसेनः; T1 भीमः (for भीम उ°). — ab) Ś1 K Ñ3 D5 °मांसो; G1.2 नरमांसैर्. T2 G4 transp पुष्टो and वृद्धो. G1 जीवन्; G3 पुष्टो (for वृद्धो). — c) Ñ1.3 °दर्पस्त्वं; D1 °वृद्धस्त्वं. — d) Ñ1 तथैव; Ñ3 वृथैवं; D1 वृथा च. D5 वृथैव स विनंक्षसि; T2 G वृथैव विनशिष्यसि. — After 25, V1 Dn D1.4.5 S ins.:

1548* क्षेममद्य करिष्यामि यथा वनमकण्टकम् ।
न पुनर्मानुषान्हत्वा भक्षयिष्यसि राक्षस ।

[ (L. 1) Cf. 1. 141. 10ab. S (except T1) एतत् (for अद्य). D1.4.5 तथा; T2 G3–5 M वनं; G1.2.6 शिवं (for यथा). G3.5 शिवं (for वनं). T2 G4 M निहतकंट° (for वन°). — (L. 2) M6–8 मानवान्. ]

26 For T G, cf. v. l. 23. Ś1 K1 om. उवाच; T G om. the ref. — a) V1 B D (except D5) यदि (for अथ). — c) K0 D5 करिष्ये; T G1.2.4–6 आतिष्ठे. G3 अतिष्ठेत वनं हार्यं. — d) M क्षिप्रं (for शीघ्रं). Ś1 K2 Ñ2 V1 B D (except D5) एष (for एव). Ś1 K3.8 विहन्य°; Ñ V1 B D (except D5) M निपात्य°; T G तु हन्य°.

27 For T G, cf. v. l. 23. — a) G6 कथं (for अथ) G1 तु; G2.3.6 हि (for अपि). — c) Ñ1 महेष्वास (for परि°). G1.2 पूर्वं कृतपरि°.

28 Ś1 K1.3 D2 T2 M3.6–8 om. उवाच; Ñ3 Dn D5 T1 G M5 om. the ref. — a) T G इत्युक्त्वा (G2 °क्तो) भीमसेनस्तं (T2 G3–5 °स्तु). — b) K3 °नो महाबलः; T G निष्पिष्य धरणीतले. — c) Ñ1 इमं (for एनं). M3 भीमः (for भूमौ). T2 G भुजाभ्यामवपीड्याशु. — After 28, T2 G ins.:

1549* अथैनमाक्षिप्य बलात्पशुवच्चाप्यमारयत् ।,

the posterior half *repeating* (with v. l.) 28cd.

29 b) Ś1 K1 सुमहास्वनं; K3 तुमलं स्वनं; Ñ1 °लं वने; B5 Da S (except T1 G2 M7) °लस्वनं.

30 a) K4 जानु°; Ñ V1 B Da Dn D1.2.4 T1 G3 बाहु° (for भुजा°). B5 पोथयित्वा; M (except M8) योज°; Cd as in text. Ñ3 B5 D1 S (except T1) तु (for तं). K0 D5 स भुजाभ्यां योक्त्र(D5 °ध)यित्वा. — c) K0 D5 राक्षसं (for बलवान्). Ś1 K1 बलात्पांडवनं°. — After 30ab, T G (G2.3.6 om. line 2) ins.:

1550* समुत्क्राम्य शिरश्चास्य सग्रीवं तदुदावहत् ।
मध्ये भित्त्वा शिरश्चास्य सुग्रीवं तदुपाक्षिपत् ।
तस्य निष्कर्णनयनं निर्जिह्वं रुधिरोक्षितम् ।
प्रविद्धं भीमसेनेन शिरो विदशनं बभौ ।
प्रसारितभुजोद्धृष्टो भिन्नमांसत्वगन्तरः । [5]
कबन्धभूतस्तत्रासीदद्रिर्वज्रहतो यथा ।

[ (L. 1) T1 स संभ्राम्य; G6 समुद्धृत्य. T2 G1.6 सुग्रीवं. G1 तदुपाहरत्; G2 तदुदक्षिपत्; G3.6 तदुपाक्षिपत्. — (L. 2) T2 G1.6 ततो (for मध्ये). G1 तदुदक्षिपत्. — (L. 4) T2 G6 प्रवृद्धं; G2 प्राविध्य; G6 प्रपीडं. — (L. 6) T1 G2 गिरिः (for अद्रिः). ]

— T2 G om. 30cd. — c) Ś1 K0.1 Ñ3 सुबल°; Ñ2 V1 B D (except D5) T1 महाबाहुः. Ñ1 °ध्ये बभंज बल°; M

अपूजयन्नरव्याघ्रं भीमसेनमरिंदमम् ॥ ३१
अभिपूज्य महात्मानं भीमं भीमपराक्रमम् ।
पुनरेवार्जुनो वाक्यमुवाचेदं वृकोदरम् ॥ ३२
नदूरे नगरं मन्ये वनादस्मादहं प्रभो ।
शीघ्रं गच्छाम भद्रं ते न नो विद्यात्सुयोधनः ॥३३
ततः सर्वे तथेत्युक्त्वा सह मात्रा परंतपाः ।
प्रययुः पुरुषव्याघ्रा हिडिम्बा चैव राक्षसी ॥ ३४

C. 1. 6041
B. 1. 154. 56
K. 1. 168. 43

इति श्रीमहाभारते आदिपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥ समाप्तं हिडिम्बवधपर्व ॥

---

°ध्ये तु मंक्त्वा बल°.

31 $^b$) K2 संतुष्टास्; B3 प्रहृ°. Ñ3 M3 तपस्विनः. K0 D5 हृष्टास्ते कुरुनंदनाः; T2 G प्रहृष्टास्तत्र पांडवाः (G5 बांधवाः). — After 31$^{ab}$, T G ins.:

1551* हिडिम्बा चैव संप्रेक्ष्य निहतं राक्षसं रणे ।
अदृश्याश्चैव ये स्वस्थाः समेता भूतवादिकाः ।
पूजयन्ति स्म संहृष्टाः साधु साध्विति पाण्डवम् ।
भ्रातरश्चापि संहृष्टा युधिष्ठिरपुरोगमाः ।

[ (L. 1) T1 हिडिंबं; T2 G3-6 हिडिंबी. G1.2 सा च (for चैव). T1 वने (for रणे). — (L. 2) T1 अदृश्यांगाश्च. G3 सिद्धाश्च; G4 मेघस्थाः (for ये स्वस्थाः). G1 सर्वे तं (for समेता). T1 भूतचारकाः; G1 °देवताः; G3 °वादिनः; G4 सर्पिचारणाः G6 °वादकाः. ]

— $^c$) Ñ1 पूजयंतो नरव्याघ्रा.

32 K0 om. 32$^{ab}$. — $^a$) T2 G अथ (for अभि°). Ñ3 महात्मानः; M2.5 यथान्यायं. M6-8 °पूज्याथ तं भीमं. — $^b$) Ñ3 भीमसेनपरा°. — $^{cd}$) M °रेवाब्रवीद्वाक्यमर्जुनस्तु वृ°.

33 $^a$) Ñ1.2 V1 B (except B6) Dn1.n3 D2 न दूरं; T G2-6 M अदूरे. G1 पथा तु तेन गंतव्यं. — $^b$) G1 इह (for अहं). Ñ1 V1 B (except B1) D (except D5) T1 विभो. — $^d$) K0.3.4 D1.5 G3 विंद्यात्.

34 $^a$) G3 ते तु (for ततः). B6 Da transp. ततः सर्वे and तथे°. D2 तथेत्युक्त्वा तु ते सर्वे. — $^b$) Ñ1.2 V1 B6 Dn D1 transp. सह and मात्रा. Ś1 K0.1 परंतप (K0 °पः); Ñ1.3 m V1 B D (except D5) T2 G महारथाः; Ñ2 महाबलाः; Ñ3 नरर्षभाः; T1 महायशाः. — $^c$) K3.4 ते नरव्याघ्रा; T1 M6-8 °व्याघ्र.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K Ñ1.2 V1 B D (D4 *sec. m.*) M6-8 Cd हिडिंबवध; to it Ś1 K0-3 Ñ1 D5 M6-8 add समाप्त. — *Adhy. name:* Ñ1.2 V1 T G1 M हिडिंबवधः; G3 हिडिंबिसंवादः. — *Adhy. no.* (figures, words or both): B1 T1 150; Dn3 153; D4 m 156; T2 G5.6 M 101; G1.2 102; G3.4 100. — *S'loka no.:* Dn 36; M8 35. — *Aggregate s'loka no.:* Dn3 6030.

## 143

1 Before भीमः (see below), D4 (marg. *sec. m.*) (M om. lines 3, 6) ins.:

1552* वैशंपायनः ।
सा ततो न्यपतत्तूर्णं भगिनी तस्य रक्षसः ।
अब्रुवाणा हिडिम्बा तु राक्षसी पाण्डवान्प्रति ।
अभिवाद्य ततः कुन्तीं धर्मराजं च पाण्डवम् ।
अभिपूज्य च तान्सर्वान्भीमसेनमभाषत ।
अहं ते दर्शनादेव मन्मथस्य वशं गता । [5]
क्रूरं भ्रातृवचो हित्वा सा त्वामेवानुरुन्धती ।
राक्षसे रौद्रसंकाशे तवापश्यं विचेष्टितम् ।
अहं शुश्रूषुरिच्छेयं तव गात्रं निषेवितुम् ।

[ (L. 1) D4 ततोन्वप°; M3 ततोन्वगम°. — (L. 2) G1.2 transp. राक्ष° and पाण्डवान्प्र°. D4 पुनः (for प्रति). — (L. 4) D4 अभिवाद्य, and उवाच ह (for अभा°). — (L. 7) D4 राक्षसी भीमसंकाशं. — (L. 8) D4 तव पादसरोरुहं. ]

— Ś1 K1 भीमसेनः; K0.3 B5.6 Dn3 D2 भीम उ°; S भीमः. — $^b$) K0 Ñ1.2 Da D2.4 T G आस्थाय (for आश्रि°). A few MSS. मोहनीं. — $^c$) Ñ1 तं वै; T1 G3 तत्वं; T2 G2.4-6 मा त्वं; G1 मां त्वां; M3 त्वं तं. Ñ3 V1 B D (except D5) त्वमिमं भ्रातृसेवितं. Cd cites भ्रातृनिषेवितं.

2 Ś1 K1.3 S om. उवाच. — $^a$) B3 क्रुद्धोसि; T1 G1 ब्राह्मीमां; G3 °द्धो हि. — $^b$) Ś1 K0.1.3 transp. भीम and मा स. K3.4 D5 M त्वं; T G च (for स). — $^c$) K1 (corrupt) °ह्यापिदिकं; K3 °ह्यस्य°; K4 Ñ V1 B (except B3) Da Dn D1.2.4 T2 G1.5.6 °ह्यस्य°; D5 M3.5 °हास्य°; T1 G1.4 °हेर°; G3 °ह्या ह्य°; M6-8 °ह्याप्य°. — $^d$) K3.4 Ñ1.2 V1 B (except B3) D T G5 गोपाय. — After 2, B6 ins.:

1553* शरणागतगुह्या त्वं धर्मं गोपाय पाण्डव ।,
the posterior half repeating 2$^{cd}$.

# १४३

G. 1. 6042
B. 1. 155. 1
K. 1. 167. 5

भीम उवाच ।
स्मरन्ति वैरं रक्षांसि मायामाश्रित्य मोहिनीम् ।
हिडिम्बे व्रज पन्थानं त्वं वै भ्रातृनिषेवितम् ॥ १
युधिष्ठिर उवाच ।
क्रुद्धोऽपि पुरुषव्याघ्र भीम मा स्म स्त्रियं वधीः ।
शरीरगुप्त्याभ्यधिकं धर्मं गोपय पाण्डव ॥ २
वधाभिप्रायमायान्तमवधीस्त्वं महाबलम् ।
रक्षसस्तस्य भगिनी किं नः क्रुद्धा करिष्यति ॥ ३
वैशंपायन उवाच ।
हिडिम्बा तु ततः कुन्तीमभिवाद्य कृताञ्जलिः ।
युधिष्ठिरं च कौन्तेयमिदं वचनमब्रवीत् ॥ ४
आर्ये जानासि यद्दुःखमिह स्त्रीणामनङ्गजम् ।
तदिदं मामनुप्राप्तं भीमसेनकृतं शुभे ॥ ५
सोढं तत्परमं दुःखं मया कालप्रतीक्षया ।
सोऽयमभ्यागतः कालो भविता मे सुखाय वै ॥ ६
मया ह्युत्सृज्य सुहृदः स्वधर्मं स्वजनं तथा ।
वृतोऽयं पुरुषव्याघ्रस्तव पुत्रः पतिः शुभे ॥ ७
वरेणापि तथानेन त्वया चापि यशस्विनि ।
तथा ब्रुवन्ती हि तदा प्रत्याख्याता क्रियां प्रति ॥ ८
त्वं मां मूढेति वा मत्वा भक्ता वानुगतेति वा ।
भर्त्रानेन महाभागे संयोजय सुतेन ते ॥ ९
तमुपादाय गच्छेयं यथेष्टं देवरूपिणम् ।

---

3 $^{a}$) T G अवधीस् (for आयान्तम्). — $^{b}$) M वृकोदर (for महा°). T G त्वं महाबल राक्षस (T$_{1}$ G$_{1.2}$ °सं). — $^{c}$) Ś$_{1}$ K$_{1.2}$ Ñ$_{1.3}$ राक्षसं. — $^{d}$) Ś$_{1}$ K$_{0.1}$ T$_{1}$ नु; K$_{2.4}$ तु (for नः). T$_{1}$ G$_{2.3}$ भविष्यति.

4 Ś$_{1}$ K$_{1.3}$ D$_{2}$ S om. उवाच. — $^{c}$) Ñ$_{1.2}$ V$_{1}$ B (except B$_{5}$) Dn D$_{1.2.4}$ तु (for च). — $^{d}$) T$_{1}$ ततो (for इदं).

5 Before 5, K$_{0}$ Ñ$_{1.2}$ ins. हिडिंबोवाच; K$_{3}$ हिडंबा; T$_{1}$ G$_{1}$ हिडिंबा; M$_{6-8}$ हिडिंबी. — $^{b}$) K$_{0}$ इदं (for इह). Ś$_{1}$ K$_{1.2.4}$ D$_{5}$ स्त्रीणामिदमनं°. — $^{d}$) K$_{0.3.4}$ D$_{5}$ °कृते. M महत् (for शुभे).

6 $^{a}$) K$_{1.4}$ B$_{3.6}$ Da D$_{3.4.5}$ T$_{1}$ सोढुं; T$_{2}$ G साहं (see below); M (except M$_{7}$) गूढं. — $^{b}$) T$_{2}$ G सहे (for मया). Ñ$_{2.3}$ B Da D$_{2.4}$ काम(Ñ$_{3}$ °ल)परीतया. — $^{c}$) K$_{0}$ °मद्यागतः. — $^{d}$) Ñ$_{2}$ V$_{1}$ B D (except D$_{5}$) सुखोदयः; S सुखावहः.

7 $^{a}$) K$_{0.4}$ Da D$_{5}$ मयाभ्युत्सृ°; K$_{3}$ °याभ्युत्सृष्टाः; T$_{2}$ G °याप्युत्सृ°. — $^{b}$) T G ज्ञातीन्स्वं धर्म(G$_{2}$ °न्संबंध)मेव च. — $^{d}$) T$_{2}$ G (except G$_{1}$) शुभः.

8 $^{a}$) K$_{0-2.4}$ Ñ$_{1.2}$ V$_{1}$ B Da Dn D$_{1.2.4}$ वीरेणाहं. K$_{3}$ तथैतेन; Ñ$_{1}$ च नानेन; Ñ$_{2}$ तथा तेन. K$_{3}$ वीरेण चाहमेतेन; Ñ$_{3}$ D$_{5}$ S व(Ñ$_{3}$ D$_{5}$ T$_{1}$ वी)रेणानेन तु विना (Ñ$_{3}$ चैवाहं). — $^{b}$) Dn$_{1}$ तथा वापि. Ś$_{1}$ K$_{4}$ Da$_{1}$ D$_{1.2.4}$ °स्विनी. D$_{5}$ S नाहं जीवितुमुत्सहे. — D$_{5}$ S ins. after 8$^{ab}$; V$_{1}$ B$_{3}$ Dn D$_{1.4}$, after 8:

1554* तदर्हसि कृपां कर्तुं मयि त्वं वरवर्णिनि ।

Thereafter T$_{1}$ reads line 8 and M$_{3}$ lines 5–7 of 1556* (cf. v. l. 10). — D$_{5}$ reads 8$^{cd}$ after 12; while T G read it after 12$^{ab}$. — $^{cd}$) S एवं (for तथा). K$_{4}$ D$_{5}$ S ह (G$_{1.2}$ च; G$_{3}$ as in text). T$_{2}$ G$_{4-6}$ तथा. Ñ$_{1}$ तदा तदार्यां ब्रुवती. K$_{1}$ T$_{1}$ प्रियां; Cd क्रियां (as in text). Ñ$_{3}$ V$_{1}$ B D (D$_{5}$ om.) प्रत्याख्याता न जीवामि सत्यमेतद्ब्रवीमि ते. — After 8, V$_{1}$ B$_{3}$ Dn D$_{1.4}$ ins. 1554*; D$_{5}$ ins. 1557* (cf. v. l. 12); while S ins.:

1555* भूम्यां दुष्कृतिनो लोकान्गमिष्येऽहं न संशयः ।

which, in T G$_{2-6}$, is followed by 11$^{ab}$.

9 $^{a}$) Ś$_{1}$ त्वं वा; K$_{0.3}$ Ñ$_{3}$ T$_{1}$ G$_{5}$ तां मां; K$_{1}$ त्वां वा; Ñ$_{1}$ B$_{1.3.5}$ G$_{1.2}$ M$_{5}$ तन्मां; Ñ$_{2}$ V$_{1}$ B$_{6}$ D (except D$_{5}$) मत्वा; T$_{2}$ तां स्म; M$_{3.6-8}$ तस्मात्. Ñ$_{1}$ मत्वा वै; Ñ$_{2}$ V$_{1}$ B$_{6}$ Da Dn D$_{1}$ तन्मां त्वं; B$_{1.3.5}$ D$_{2.4}$ मत्वा त्वं (B$_{3}$ तं); G$_{1.2}$ (by transp.) मत्वा वा. — $^{b}$) K$_{3}$ G$_{1.6}$ भक्तां; G$_{3}$ भर्त्रीं. K$_{0}$ B (except B$_{6}$) M$_{3.6-8}$ च (for the first वा). M$_{3.6-8}$ अनुव्रतेति. M$_{5}$ भक्ताचारव्र°. Ñ$_{1}$ अपि (for इति). B$_{1.3}$ च (for the second वा). — $^{d}$) T G योजयस्व (for संयो°). T$_{1}$ शुभेन. Ś$_{1}$ K$_{1.2.4}$ V$_{1}$ B$_{5}$ Dn D$_{1.5}$ ह; K$_{0}$ हि; K$_{3}$ Ñ$_{1.2}$ D$_{4}$ मां; Ñ$_{3}$ वै; B$_{3}$ तु (for ते).

10 $^{b}$) M यथावद् (for यथेष्टं). — $^{c}$) G$_{3}$ तम् (for चैव). Ś$_{1}$ K (except K$_{0}$) V$_{1}$ Dn D$_{1}$ G$_{3.5}$ आनयिष्यामि. — $^{d}$) Ś$_{1}$ B$_{3.5}$ विश्रब्धं; K$_{0.2}$ D$_{5}$ S विश्वासं; Cd as in

पुनश्चैवागमिष्यामि विश्रम्भं कुरु मे शुभे ॥ १०
अहं हि मनसा ध्याता सर्वान्नेष्यामि वः सदा ।
वृजिने तारयिष्यामि दुर्गेषु च नरर्षभान् ॥ ११
पृष्ठेन वो वहिष्यामि शीघ्रां गतिमभीप्सतः ।
यूयं प्रसादं कुरुत भीमसेनो भजेत माम् ॥ १२
आपदस्तरणे प्राणान्धारयेद्येन येन हि ।
सर्वमादृत्य कर्तव्यं तद्धर्ममनुवर्तता ॥ १३
आपत्सु यो धारयति धर्मं धर्मविदुत्तमः ।
व्यसनं ह्येव धर्मस्य धर्मिणामापदुच्यते ॥ १४
पुण्यं प्राणान्धारयति पुण्यं प्राणदमुच्यते ।
येन येनाचरेद्धर्मं तस्मिन्गर्हा न विद्यते ॥ १५

युधिष्ठिर उवाच ।

एवमेतद्यथात्थ त्वं हिडिम्बे नात्र संशयः ।
स्थातव्यं तु त्वया धर्मे यथा ब्रूयां सुमध्यमे ॥ १६
स्नातं कृताह्निकं भद्रे कृतकौतुकमङ्गलम् ।
भीमसेनं भजेथास्त्वं प्रागस्तगमनाद्रवेः ॥ १७

C. 1. 6058
B. 1. 155. 17
K. 1. 167. 33

---

text. — T G ins. after 10: M8 (om. lines 1–4, 8–9), after 1554* (cf. v. l. $8^{ab}$):

1556* अहं हि समये लिप्से प्राग्भ्रातुरपवर्जनात् ।
ततः सोऽभ्यपतद्रात्रौ भीमसेनजिघांसया ।
यथा यथा विक्रमते यथा रमति तिष्ठति ।
तथा तथा समाधाय पाण्डवं काममोहिता ।
न यातुधान्यहं त्वार्ये न चास्मि रजनीचरी । [5]
ईशा रक्षःसु साध्व्यस्मि राज्ञी सालकटङ्कटी ।
पुत्रेण तव संयुक्ता युवतिर्देववर्णिनी ।
सर्वान्वोऽहमुपस्थास्ये पुरस्कृत्य वृकोदरम् ।
अप्रमत्ता प्रमत्तेषु शुश्रूषुरनहंवदा ।

[ (L. 1) T1 अहं समुपलक्ष्यैव; G4.5 °हं समुपलब्ध्वैव; G6 °हं समुपलप्स्ये प्राक्. G6 मद्- (for प्राक्). G3 श्रोतुम् (for भ्रातुर्). G4.6 उपवर्ज°. — (L. 3) T1 यथारिमधितिष्ठ°; G1.3 तथारिमधुति°; G8 यथारिमयि ति°. — (L. 4) T2 G3–5 समादाय; G6 समाधावत्. — (L. 5) G1 भद्रे (for त्वार्ये). — (L. 6) T2 G4.5 कन्या; G8 तथा; G6 ईशे (for ईशा). T1 रक्षःस्वसा ह्यस्मि; G6 रक्षःस्वाहमस्मि; M8 रक्षःसुता यास्मि (for रक्षःसु साध्व्यस्मि). G1.2 M8 राज्ञि; G8 राज्ञः. T2 G3.6 °कटंकटा; G1 °कटंकरी. — (L. 7) T1 युवती देवरूपिणी. — (L. 9) T1 असहं; G8 अभवं (for अनहं-). T1 G3.6 सदा (for -वदा).

11 G1 om. $11^{ab}$; T G2–6 read it after 1555* (cf. v. l. 8). — ab) Ñ3 पथि (for सदा). S (G1 om.) ध्यात्वा सर्वं वेत्स्यामि सर्वदा. — c) Ś1 K (except K0) विपिने; Ñ1.2 V1 B Da Dn D2.3.4 वृजिनाद्; D5 G3 विजने; T2 G6 वृजिनं; M विषमे. T2 G3.6 कारयिष्यामि. — d) K3 दुर्गेपि; T G दासीवत्. Ś1 °र्षभं; K1 G6 °र्षभ; Ñ3 T2 G3.4 °र्षभाः. Ñ1 दुर्गेषु भरतर्षभान्; Ñ2 V1 B D (except D5) °षु विषमेषु च.

12 a) G2 वा; G8 च; G5 अपि (for वो). Ñ B Da D2.4 T G Nilp प्रव(Ñ3 T1 G1 °वे)क्ष्यामि; M6–8 हनि°. — b) Ś1 K1 Ñ1.2 V1 D5 शीघ्रं. Ś1 K1.3 B5 D5 °प्सतां; K4 Ñ1.3 B5m °प्सितां. T G2–6 क्षणेन गति(T1 °त)मीप्स(G3.6 °प्सि)तां (T1 °तं); G1 M विमानं सुकृती(G1 M5 °ता)निव. — After $12^{ab}$, T G read $8^{cd}$, followed by 1555* (cf. v. l. 8). — After 12, D5 reads $8^{cd}$, followed by:

1557* उवाच सा तदा कुन्ती हिडिम्बां नाम राक्षसीम् ।

13 Before 13, Ś1 ins. कुंती; K0 D5 कुंती उ°; K1.3.4 कुंत्युवाच. — a) K1.2 M3 (*inf. lin.* as in text) °स्तारणे; T G आपत्स्वस्त°. — b) K (except K1) Ñ1.3 येन ह; Ñ2 V1 B D T1 तेन वा (D4 केन वा; D5 केन ह); T2 G M केनचित्. — c) B6 धर्मं (for सर्वं). K2.4 D4 T1 G1.2 आहृत्य; K3 V1 B6 Dn G3.4 आवृत्य; T2 G5 आपदि; G6 आपत्सु. — d) Ñ1.2 V1 B6 Dn G1.2 तं धर्मम्; D1 धर्मेनम् (sic). K0.3 D5 °वर्तते; K2.4 Ñ3 °वर्ततां; T1 °पश्यतः; T2 G4–6 °पश्यतां; G1–3 M °पश्यता.

14 Before 14, K3 ins. हिडंबो. — a) Cd धारयते. G2 आपद्यो धारयेत्प्राणान्. — b) D5 T G स वै (for धर्मं). — D5 om. $14^{cd}$.

15 K4 om. 15; Ś1 K1 Dn1 (hapl.) om. $15^{ab}$. — a) T G3–6 M पुण्यान्. B3 धारयीत; T2 °यंतीं; G3 °यंत्यः; G5 °यंति. G1.2 पुण्यान्धा(G2 °न्धा)रयति (G2 °ती) प्राणान्. — b) S पुण्यं वै (G1.2 हि) प्राणधारणं. — c) Ñ1.3 B3 Da S येन येन (T1 G1 M3.6–8 येन केन; G3 येनार्कों न) चरे°; Cd as in text. — After 15, S ins. a passage given in App. I (No. 87).

16 Ś1 K1.3 S om. उवाच (G3 om. the ref.). — a) M3.5 एव (for एतद्). Ñ1 °थातत्वं; T °थावृत्तं. — c) T1 कर्तव्यं. D5 च; G5 हि (for तु). Ñ2 V1 B D M सत्ये; T1 धर्मं. — d) K3 T2 G4–6 ब्रूयाः; G1.2 ब्रूहि. — After 16, S ins.:

1558* नित्यं कृताह्निका स्नात्वा कृतशौचा सुरूपिणी ।

युधिष्ठिर उवाच ।

युद्धे जितं यशोहीनं स्त्रीनाथमपराक्रमम् ।
को नु हन्याद्रिपुं त्वादृक्तस्मादेनं रिपुसूदन ॥ ३३

अर्जुन उवाच ।

अङ्गेमं प्रतिपद्यस्व गच्छ गन्धर्व मा शुचः ।
प्रदिशत्यभयं तेऽद्य कुरुराजो युधिष्ठिरः ॥ ३४

गन्धर्व उवाच ।

जितोऽहं पूर्वकं नाम मुञ्चाम्यङ्गारपर्णताम् ।
न च श्लाघे बलेनाद्य न नाम्ना जनसंसदि ॥ ३५
साध्विमं लब्धवाँल्लाभं योऽहं दिव्यास्त्रधारिणम् ।
गान्धर्व्या मायया योद्धुमिच्छामि वयसा वरम् ॥ ३६
अस्त्राग्निना विचित्रोऽयं दग्धो मे रथ उत्तमः ।
सोऽहं चित्ररथो भूत्वा नाम्ना दग्धरथोऽभवम् ॥ ३७
संभृता चैव विद्येयं तपसेह पुरा मया ।
निवेदयिष्ये तामद्य प्राणदाय महात्मने ॥ ३८
संस्तम्भितं हि तरसा जितं शरणमागतम् ।
योऽरिं संयोजयेत्प्राणैः कल्याणं किं न सोऽर्हति ॥ ३९
चाक्षुषी नाम विद्येयं यां सोमाय ददौ मनुः ।
ददौ स विश्वावसवे मह्यं विश्वावसुर्ददौ ॥ ४०
सेयं कापुरुषं प्राप्ता गुरुदत्ता प्रणश्यति ।
आगमोऽस्या मया प्रोक्तो वीर्यं प्रतिनिबोध मे ॥ ४१
यच्चक्षुषा द्रष्टुमिच्छेत्त्रिषु लोकेषु किंचन ।

---

गंधर्वी. Ś1 K0.1 Ñ V1 D5 G3 प्राप्ता. — d) Ś1 K0.1.3 Ñ V1 B6 Dn1.n2 D5 G3 °नसी. K0.4 B5 G4 (sup. lin.) विभो. — After 32, K4 ins.:

1716* दीनं वाक्यं तु तच्छ्रुत्वा युधिष्ठिर उवाच ह ।;
while Da Dn3 ins.:

1717* इत्युवाच महाबाहुः फाल्गुनं वै युधिष्ठिरः ।;
and, finally, T G (except G1.3) ins.:

1718* इत्यनुग्रहभावाच्च पार्थः पार्थमुवाच ह ।

33 Ś1 K S om. उवाच (K4 om. the ref.). — a) S जितं युद्धे (by transp.). — c) Ñ2 V1 B5.6 Da Dn D5 नि-; B1.3 D2 हि (for नु). K (except K4) तादृक्; Ñ V1 B D तात. S धनंजय महाबाहो. — d) K1 D1 S अरिसूदन (T2 G4.5 °मर्दन).

34 K1 S (but not Ś1!) om. उवाच. — a) Ñ1 अग्रिसं; Ñ2 V1 B D जीवितं; T G2.4-6 M अंगेमां; G1 अंगदं; G3 अंगता. — c) Ś1 K0.1.3 Ñ1.3 B5 तेयं; G6 तेत्र. M6-8 प्रतिदिश्यत्ययं तेद्य. — d) Ś1 K धर्मराजो. — After 34, G3 ins. (an additional) colophon: इति संभवपर्वणि षोडशशततमोध्यायः.

35 Ś1 K1 S om. उवाच. — a) Ś1 K Ñ1.3 B6 D4 पूर्वजं. — b) T2 G (except G2) M8 °वर्णतां. — T1 om. 35c-36d. — c) Ś1 K1 Dn1.n2 D1 न च श्लाघ्ये; K4 B3 (m as in text) न च श्लाघ्यो; Ñ1 न वशामि (sic). Ñ2 V1 B (B1 as in text) D (except D2.4.5) अंग (for अद्य). S (T1 om.) यशोहीनं न च श्लाघ्यं. — d) S (T1 om.) स्वनाम (for न नाम्ना).

36 T1 om. 36 (cf. v. l. 35). — a) G3 जितवान्. B1(m as in text).3 कामं (for लाभं). — b) Ñ3 D5 G1.2 M6-8 सोहं; G6 यो हि. — c) Ś1 K0.4 Ñ3 गंधर्व्या; Ñ1 गांधर्व-; S (T1 om.) गंधर्व-. K4 Ñ2 V1 B D इच्छामि; G1 चोक्तम्; G2 योक्तुम्; G6 चोर्ध्वम् (for योद्धुम्). — d) Only Ś1 as in text! K0 यः सम्य[ग]वरो वरं; K1 इच्छाम्यवयमांवरं (sic); K2 इच्छाम्यमरयोधिनं; K3 इच्छाम्यवरजो वरं; K4 Ñ2 V1 B D संयोजयितुमर्जुनं; Ñ1 इच्छाम्यभयगोचरः; Ñ3 इच्छाम्येव च वो वरं; T2 G3 M इच्छाम्य(G3 °मि)वरया वरं; G1.2.4.6 इच्छामि परया प(G4.6 व)रं; G5 इच्छाम्यमितपौरुषं.

38 a) S1 K1 चेह; S त्वेव (G1 सैव; G4 त्विह). — b) Ś1 K D5 तपसा वै; D4 G4 °सैव; T2 G5 °सेयं. Ñ1.2 V1 B5.6 Dn D1 T G (except G3) मया पुरा (by transp.).

39 a) Ñ2 V1 B D संस्तंभयित्वा. S च (for हि). — c) K1 corrupt. K4 Ñ2 V1 B D G3 यो रिपुं योज°.

40 b) S (except M8.5) मनुर्ददौ (by transp.). — c) D1 तां ददौ विश्वा°; G1.3 स विश्वावसवे मह्यं. — d) K0.2.3 Ñ V1 B D मम; G1.3 इमां (for मह्यं). K4 विश्वावसुर्ददौ मम.

41 b) K0 ऽपि नश्यति; K3.4 विन°. — c) G1.3 आगमोक्ता. Ś1 K1.2 यथा (for मया). Ś1 K1.2 G1.5 प्रोक्ता; G3 प्राप्ता. M8.5 अर्हसि त्वमिमां लब्धुं. — d) K Ñ3 वीर्यं त्वयि (K1 त्वं च); Ñ1 नाम वीर्यं. Ś1 वीर्यं त्वमपि बोध मे; S तस्या (T1 °स्य) वीर्यं निबोधत (T1 G2 °य).

42 b) Ñ1 त्रिलोकेषु च किं पुनः. — c) S °शं रूपं.

43 a) K4 Ñ2 V1 B (B3 marg.) D (Da erroneously) Arjp एकपादेन (B3 orig. समपद्येन); Ñ1.3 (m as in text) समानपद्यः; G2 समानविद्यः; G3 अन्यसमानः; M8.5 जिज्ञा-

तत्पश्येद्यादृशं चेच्छेच्चादृशं द्रष्टुमर्हति ॥ ४२
समानपद्ये षण्मासान्स्थितो विद्यां लभेदिमाम् ।
अनुनेष्याम्यहं विद्यां स्वयं तुभ्यं व्रते कृते ॥ ४३
विद्यया ह्यनया राजन्वयं नृभ्यो विशेषिताः ।
अविशिष्टाश्च देवानामनुभावप्रवर्तिताः ॥ ४४
गन्धर्वजानामश्वानामहं पुरुषसत्तम ।
भ्रातृभ्यस्तव पञ्चभ्यः पृथग्दाता शतं शतम् ॥ ४५
देवगन्धर्ववाहास्ते दिव्यगन्धा मनोगमाः ।
क्षीणाः क्षीणा भवन्त्येते न हीयन्ते च रंहसः ॥४६
पुरा कृतं महेन्द्रस्य वज्रं वृत्रनिबर्हणे ।
दशधा शतधा चैव तच्छीर्णं वृत्रमूर्धनि ॥ ४७
ततो भागीकृतो देवैर्वज्रभाग उपास्यते ।
लोके यत्साधनं किंचित्सा वै वज्रतनुः स्मृता ॥४८
वज्रपाणिर्ब्राह्मणः स्यात्क्षत्रं वज्ररथं स्मृतम् ।
वैश्या वै दानवज्राश्च कर्मवज्रा यवीयसः ॥ ४९
वज्रं क्षत्रस्य वाजिनो अवध्या वाजिनः स्मृताः ।
रथाङ्गं वडवा सूते सूताश्वाश्वेषु ये मताः ॥ ५०
कामवर्णाः कामजवाः कामतः समुपस्थिताः ।
इमे गन्धर्वजाः कामं पूरयिष्यन्ति ते हयाः ॥ ५१

अर्जुन उवाच ।

यदि प्रीतेन वा दत्तं संशये जीवितस्य वा ।
विद्या वित्तं श्रुतं वापि न तद्गन्धर्व कामये ॥ ५२

गन्धर्व उवाच ।

संयोगो वै प्रीतिकरः संसत्सु प्रतिदृश्यते । C. 1. 6451 B. 1. 170. 56 K. 1. 185 55

---

समानः; Cd as in text. M6-8 विद्यासमाना विद्यासां ॐ Arj.: एकपादेनेति ग्रंथेषु स्पष्टार्थं ।ॐ — c) Ñ1.2 S (except T1 G4-6) अन्वानेष्यामि; Cd as in text. D1 अद्य (for अहं).

44 b) K2-4 Ñ1.2 B1 m Da D1 विशेषतः; S °षिणः; Cd as in text. — c) Ś1 K1.2 Ñ3 अवशिष्टं (Ñ3 °ष्टाः); K0 D5 अनुसृष्टं; K3.4 अविशिष्टं; Ñ1 अनुशिष्टाः; S अनाहार्याः (M6-8 अनहाल्पाः). Ś1 K (except K2) D5 तु (for च). — d) Ś1 K (except K4) Ñ1 अनुभावं प्र°; Ñ2 V1 B D °दर्शिनः (D5 °वर्तितां); T1 G2.3 M °वर्तिनः; T2 G1-6 °वर्तनाः (T2 °नः); G1 °कीर्तितः. — Cd appears to have read अवशिष्टश्च देवानामनुभावः प्रवर्तिता.

45 b) Ś1 भरतसत्तम. — c) Ñ2 V1 B D (except D5) तुभ्यं च (for पञ्च°). — d) G2 पृथग्भूतं.

46 a) K4 Ñ2 V1 B D दिव्यवर्णाः. Ś1 K Ñ1.2 B1 D2.5 °रमाः; B3 m Da Dn D1 S °जवाः. — c) K (except K3) Ñ V1 B D (except D1) G3 क्षीणाक्षीणा; T1 क्षणे क्षणे; T2 G5.6 क्षणे क्षीणे; G1 अक्षीणाश्च; G2.4 M क्षीणे क्षीणे; Nilp as in text. S भवंत्यन्ये. — d) Ś1 K1 हि (for च). K2 G1.4 M3 रंहसा; Cd as in text.

47 a) K0.3 Ñ2 V1 B D °निबर्हणं; M3 °निसूदने.

48 ab) Ñ1 भागीकृतं and वज्रभागम्. S तस्य भागः पृथग्भूतः सर्वैर्भूतैरुपास्यते. — c) Ñ2.3 V1 B6 Dn यशोघनं किंचित्; B1.3.5 D4 यः साधकः कश्चित्. Cd cites साधनं (=हस्त्यश्वादि). — d) K1 B1.3.5 स वै; Ñ1 तद्वै; Ñ2.3 V2 B6 Dn2 सैव. K4 B1.3.5 स्मृतः; G3 स्थिता.

49 ab) Arjp वज्रधरं (for °रथं). S ब्रह्म वज्रं ब्राह्मणानां क्षत्रियाणां रथं विदुः. — cd) Ś1 K1 धन° (for दान°). K0 D5 स्युः (for च). S वैश्यवज्रं तु (G1 हि) वै सीरं (G2 शीलं) शुश्रूषा हीन(G3 शूद्र)योनिषु.

50 a) K0-3 क्षत्रस्य वाजिनो वज्रं; K4 क्षत्रस्य वाजिवज्रं हि; Ñ1 V1 B D क्षत्रवज्रस्य भा(D1 °भो)गेन (D2 क्षत्रस्य वज्रभागेन); S साधनं क्षत्रधर्मस्य (G1 °धर्माणां). — b) Ś1 K0.1 ह्यवध्या; S मनोज्ञा. — c) T1 G1.3-6 M3.5 च तथा; T2 G2 च रथाः (G2 °थः); M6-8 च ततः; Cd वडवा (as in text). S सूतो. — d) Ñ2 V1 D (except Da) शूराः (for सूताः). S धनुश्च भरतर्षभ.

51 a) K0 D5 °वीर्याः (for °वर्णाः). K0 D5 T G °गमाः; M °बलाः. — b) T1 G1.2 M3.5 कामगाः; M6-8 °दाः. — c) Ñ2 V1 B D (except Da1) इति (for इमे). — After गंधर्व in 51c, K1 (erroneously) reads 1. 155. 17 — 1. 158. 13, the portion which had been om. previously. — d) Ś1 Ñ2 V1 B5 Dn2 D5 मे हयाः; G3 तेर्जुन.

52 Ś1 K1 S om. उवाच. — a) Ś1 K1-3 यदप्रीतेन. Ñ2 V1 B (except B5) D मे; G3 ना-; M5 वै (for वा). — b) K2 D2 च; T2 G5.6 वै (for वा). — c) Da D1.2.4 T2 G1.6 विद्यां. Ñ2 V1 B1.3.6 D (except D5) धनं; B5 बलं (for वित्तं). S शुभं (for श्रुतं). B5 T1 G1-3 चापि. — d) Ñ2 V1 B D (except D5) रोचये (B5 °ते) (for काम°).

53 Ś1 K1 S om. उवाच. — a) Ś1 K1.3 Ñ1 B3(m

C. 1. 6491 B. 1. 170. 56 K. 1. 160. 56 जीवितस्य प्रदानेन प्रीतो विद्यां ददामि ते ॥ ५३
त्वत्तो ह्यहं ग्रहीष्यामि अस्त्रमाग्नेयमुत्तमम् ।
तथैव सख्यं बीभत्सो चिराय भरतर्षभ ॥ ५४

अर्जुन उवाच ।
त्वत्तोऽस्त्रेण वृणोम्यश्वान्संयोगः शाश्वतोऽस्तु नौ ।
सखे तद्ब्रूहि गन्धर्व युष्मभ्यो यद्भयं त्यजेत् ॥ ५५

इति श्रीमहाभारते आदिपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

## १५९

अर्जुन उवाच ।
कारणं ब्रूहि गन्धर्व किं तद्येन स्म धर्षिताः ।
यान्तो ब्रह्मविदः सन्तः सर्वे रात्रावरिंदम ॥ १

गन्धर्व उवाच ।
अनग्नयोऽनाहुतयो न च विप्रपुरस्कृताः ।
यूयं ततो धर्षिताः स्थ मया पाण्डवनन्दन ॥ २
यक्षराक्षसगन्धर्वाः पिशाचोरगमानवाः ।
विस्तरं कुरुवंशस्य श्रीमतः कथयन्ति ते ॥ ३
नारदप्रभृतीनां च देवर्षीणां मया श्रुतम् ।
गुणान्कथयतां वीर पूर्वेषां तव धीमताम् ॥ ४

---

as in text). 5. 6 Cd संभोगो; G3 सुयोगो. — b) Ko. 3. 4 Ñ1. 3 G1. 4 M स सख्यु; Ñ2 V1 B D महस्खु; T1 G2. 3 सत्सु सं; T2 G6 संपत्सु.

54 a) Ñ V1 B D (except D5) त्वत्तोप्यहं. — b) Ś1 G1 ह्यस्त्रम्; G4 चास्त्रम्. — c) Ñ2 V1 B3 Dn D5 योग्यं (for सख्यं).

55 Ś1 K1 S om. उवाच. — a) S अस्त्रेणास्त्रं वृणे त्वत्तः. — b) Ko, 2, 4 Ñ1. 3 नः; S मे (for नौ). — K3 om. $55^{cd}$. — c) Ś1 K1 स वै त°; Ko. 3. 4 ममैत°; D2 सर्वं त°; D5 मामेत°. S सखे गंधर्व तद्ब्रूहि (G3 तथ्यं वा). — d) Ś1 K1 युष्मत्तो; K3. 4 Dn2. n3 D1 M6–8 °भ्यो. K1 बलं; G6 भवं (for भयं). Ñ2 V1 Dn भवेत्; D4 जयेत्.

Colophon om. in K3 Ñ2 V1 B Da Dn D2. 4. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 Ko. 1. 3. 4 Ñ3 अंगारपर्ण; B5 चैत्ररथ. — *Adhy. name:* Ko. 3. 4 D5 गंधर्वार्जुनयोः सख्यं; M3. 5 अंगारपर्णपराजयः. — *Adhy. no.* (figures, words or both): T1 166; T2 G M 118 (G1 120; G3 117). — *S'loka no.:* M8 77.

### 159

1 Ś1 K1 S om. उवाच; K3 Ñ2 V1 B Da Dn D2. 4 om. the ref. D1 वैशं° उ°. — G5 (hapl.) om. $1^{b}$–$3^{a}$. — b) K3. 4 D5 M4 तद्येनास्म; G1 तथ्येन हि. — cd) S (G5 om.) यत्ता (G3 °त्तं); Cd as in text. Ñ2. 3 V1 B Dn D1 वेदविदः; Cd as in text. Ñ2 V1 B D (except D5) सर्वे संतः (by transp.). K3 Ñ1. 2 V1 B6 D (except D5) अरिंदमाः.

2 G5 om. 2 (cf. v. l. 1). Ś1 K1 S om. उवाच. — c) S (G5 om.) धर्षिताः स्थ ततो यूयं. — d) Ñ1. 2 V1 B D मया वै पांडुनंदनाः. — After 2, G1. 3 ins. 1719*.

3 G5 om. $3^{a}$ (cf. v. l. 1). — a) K2. 4 S (G5 om.) °गंधर्वं. — b) Ko. 3. 4 Ñ2 V1 B D M °दानवाः. — K4 (om. line 5) T1 G4 (om. lines 2–5) M ins. after $3^{ab}$; G1. 3, after 2:

1719* धर्षयन्ति नरव्याघ्र न ब्राह्मणपुरस्कृतान् ।
जानता च मया तस्मात्तेजश्चाभिजनं च वः ।
इयमग्निमतां श्रेष्ठ धर्षितुं वै कृता मतिः ।
को हि वस्त्रिषु लोकेषु न वेद भरतर्षभ ।
स्वैर्गुणैर्विस्तृतं श्रीमद्यशोऽग्र्यं भूरिवर्चसाम् ।

[ (L. 2) K4 °भि न वंचिताः; T1 °पि जनं च नः; G1 °पि धनंजय; G3 °भिजनं वचः. — (L. 3) K4 इत्यभिप्रायतः; T1 इयं मतिमतां; G1 इदमग्निमतां. K4 धर्षणाय; G1. 3 धर्षिता वै. G1 पुरा मतिः; G3 पुरो मतिः. — (L. 5) T1 विश्रितं; G1 विस्मितं; G3 विहितं (for विस्तृतं). ] — After the above, M *repeats* $3^{ab}$ (v. l. पन्नगाः for दानवाः). — c) B5 T2 G (except G2) M5 विस्तारं. — d) K4 B5 Da1 D1 धीमतः; Ñ1. 2 V1 B3. 6 Da2 Dn D2. 4 धीमंतः; B1 सततं; M4 विस्ताराद् (for श्री°). Da ये; T1 G2 मे (for ते).

4 a) G3 °प्रमुखानां. K3 Ñ2 V1 Dn1. n2 D5 तु (for च). — b) S महर्षीणां. Ś1 K (except K4) मया श्रुतः; S मया पुरा (G3 पुरा मया). — Ś1 K Ñ1. 3 om. $4^{cd}$. — cd) S श्रुतं कथयतां पार्थ कुरूणां वंशमादितः.

5 Da om. $5^{ab}$. — c) Ko D5 सर्वां (for कृत्स्नां). — d) Ś1 K1 प्रभावं; Ñ1 °वात्; D1 G2 °भवः. K4 T

स्वयं चापि मया दृष्टश्चरता सागराम्बराम् ।
इमां वसुमतीं कृत्स्नां प्रभावः स्वकुलस्य ते ॥ ५
वेदे धनुषि चाचार्यमभिजानामि तेऽर्जुन ।
विश्रुतं त्रिषु लोकेषु भारद्वाजं यशस्विनम् ॥ ६
धर्मं वायुं च शक्रं च विजानाम्यश्विनौ तथा ।
पाण्डुं च कुरुशार्दूल षडेतान्कुलवर्धनान् ।
पितॄनेतानहं पार्थ देवमानुषसत्तमान् ॥ ७
दिव्यात्मानो महात्मानः सर्वशस्त्रभृतां वराः ।
भवन्तो भ्रातरः शूराः सर्वे सुचरितव्रताः ॥ ८
उत्तमां तु मनोबुद्धिं भवतां भावितात्मनाम् ।
जानन्नपि च वः पार्थ कृतवानिह धर्षणाम् ॥ ९
स्त्रीसकाशे च कौरव्य न पुमान्क्षन्तुमर्हति ।
धर्षणामात्मनः पश्यन्बाहुद्रविणमाश्रितः ॥ १०
नक्तं च बलमस्माकं भूय एवाभिवर्धते ।
यतस्ततो मां कौन्तेय सदारं मन्युराविशत् ॥ ११
सोऽहं त्वयेह विजितः संख्ये तापत्यवर्धन ।
येन तेनेह विधिना कीर्त्यमानं निबोध मे ॥ १२
ब्रह्मचर्यं परो धर्मः स चापि नियतस्त्वयि ।
यस्मात्तस्मादहं पार्थ रणेऽस्मिन्विजितस्त्वया ॥ १३
यस्तु स्यात्क्षत्रियः कश्चित्कामवृत्तः परंतप ।
नक्तं च युधि युध्येत न स जीवेत्कथंचन ॥ १४
यस्तु स्यात्कामवृत्तोऽपि राजा तापत्य संगरे ।
जयेन्नक्तंचरान्सर्वान्स पुरोहितधूर्गतः ॥ १५
तस्मात्तापत्य यत्किंचिन्नृणां श्रेय इहेप्सितम् ।
तस्मिन्कर्मणि योक्तव्या दान्तात्मानः पुरोहिताः ॥ १६
वेदे षडङ्गे निरताः शुचयः सत्यवादिनः । C. 1. 6517 B. 1. 170. 75 K. 1. 180. 79

---

G1.3.6 प्रभा(T1 °भ)वस्य. Ko स; K2.3 D2.5 च; Ñ3 V1 B3.6 Dn1.n2 सु-; Dn3 D4 तु (for स्व-). S च (for ते).

6 $^{b}$) S (except M3) च (for ते). — After 6, S ins.:

1720* सर्ववेदविदां श्रेष्ठं सर्वशस्त्रभृतां वरम् ।
द्रोणमिष्वस्त्रकुशलं धनुष्यङ्गिरसां वरम् ।
[ (L. 1) T1 G3 M3.5.7 °शास्त्रभृतां- ]

After the above, T2 G1.4.5 *repeat* 3$^{ab}$ and 1719* (G4 om. line 1).

7 $^{a}$) G2 शक्रं च वायुं (by transp.). — $^{b}$) G6 अपि (for तथा). — $^{c}$) K1 B1.6 D2.5 कुरुशार्दूलं; S नृपशार्दूल (G1 M °लं). — $^{d}$) Ś1 K1 पांडवान् (for षडेतान्). Ko वंश°; K3 Ñ2 V1 B3.5 Dn1.n3 D1.5 कुरु°; S कीर्तिवर्धनान् (T G3.3 M3 °न). K1 पांडुं वा कुलवर्धनं. — D1 om. 7$^{ef}$. — $^{ef}$) G6 पुत्रान् (for पितॄन्). K1 °सत्तमम्.

8 $^{b}$) K2.3 सर्वे (for सर्व-). Ko °शास्त्रभृतां; G1 °शस्त्रविदां. Ñ1 सर्वशास्त्रविशारदाः. — $^{cd}$) G6 transp. शूराः and सर्वे. S (except T1) च (for सु-).

9 $^{a}$) K1 corrupt. Ñ V1 B D च (for तु). T2 G4-6 मनोवृत्तिं. Ko.3.4 उत्तमामप्यहं बुद्धिं. — $^{c}$) Ko.3 हि; K4 ह (for च). K3.4 T2 G M3 पार्थाः. — $^{d}$) Ś1 इव (for इह). K2 Dn3 धर्षणं. K1 कृतवान्धर्षणामिमां; S °वान्संप्रधर्षणं (G1 °णां; G3 °णः).

10 $^{a}$) T G1-3.5 तु; M3 [ऽ]पि; M6-8 हि (for च). T1 G1-3 कौंतेय. — G2.3 (hapl.) om. 10$^{b}$–11$^{c}$. — $^{b}$) K (except Ko) D3 कः (for न). — $^{c}$) Ś1 K उद्यतः (for आत्मनः). — $^{d}$) Ś1 K (except K4) B3 G1 आत्मनः (for आश्रितः).

12 $^{a}$) Ñ1 त्वया हि; G1 त्वयैव. — $^{b}$) S (except M3) सखे; Cd as in text. Ś1 K कौरव(Ko.3 तापत्य)नंदन (K4 °नः); Da1 °वर्धनः; Cd as in text. — $^{c}$) Ko.3 येने°; K4 T1 G1-3 M केने° (for तेने°). T2 G4-6 येनेह विधिना सर्वं.

13 $^{a}$) K1 °चर्यां परो; K3 °चर्ये परो; G3 °चर्यपरो. T1 तपो धर्मः; G6 पुरोधर्मः. — $^{b}$) G1.2 सदा विनियतस्; G3 स चापि विनयस्; M5 स चापि निहितस्. Ś1 G2 त्वया. — $^{c}$) K4 यस्माद्दातास्म्यहं पार्थ; M5 यस्मादहं पार्थ विभो. — $^{d}$) K2.3 Ñ2 V1 B D T G4 M3.5 रणेस्मि वि°; Ñ1 योस्मि वै वि°.

14 $^{a}$) M6-8 कामवृत्तिः. Ko Da Dn1.n3 D1.5 M3 परंतपः; Ñ1.3 B (except B6) D3 कथंचन. — $^{c}$) Ś1 प्रवियुध्ये च; K1 प्रविबुध्येषु; G1.3 युधि युज्येत (G1 मध्येत). T1 नक्तंचरं च युध्येत. — $^{d}$) Ñ1 नासौ जीवेत्. B (except B6) असंशयं (for कथं°).

15 $^{b}$) Ñ3 V1 B D (except D5) पार्थ (B1.5 स्याच्च) ब्रह्मपुरस्कृतः; S राजा राजीवलोचनः. — $^{c}$) Ko G5 राजन् (for सर्वान्). — $^{d}$) B1(m as in text).2.5 स धूर्गतपुरोहितः (by transp.).

16 $^{b}$) Ñ1 इहोद्यतं; G2 इहोदितं. B5 नृपाणां श्रेय ईप्सितः. — $^{c}$) Ñ1 ये योज्या (for योक्त°). — $^{d}$) Ñ1 धर्मात्मानः; T1 G1-3 M (except M5) यतात्मानः (G2 °त्मा स). G3 पुरोहितः.

17 K3 G3 om. 17. — $^{a}$) D5 वेदे शास्त्रे च. G4 वेदे-

G. 1. 6510 B. 1. 170. 75 K. 1. 185. 79

धर्मात्मानः कृतात्मानः स्युर्नृपाणां पुरोहिताः ॥ १७
जयश्च नियतो राज्ञः स्वर्गश्च स्यादनन्तरम् ।
यस्य स्याद्धर्मविद्वाग्मी पुरोधाः शीलवाञ्शुचिः ॥ १८
लाभं लब्धुमलब्धं हि लब्धं च परिरक्षितुम् ।
पुरोहितं प्रकुर्वीत राजा गुणसमन्वितम् ॥ १९
पुरोहितमते तिष्ठेद्य इच्छेत्पृथिवीं नृपः ।
प्राप्तुं मेरुवरोत्तंसां सर्वशः सागराम्बराम् ॥ २०
न हि केवलशौर्येण तापत्याभिजनेन च ।
जयेदब्राह्मणः कश्चिद्भूमिं भूमिपतिः क्वचित् ॥ २१
तस्मादेवं विजानीहि कुरूणां वंशवर्धन ।
ब्राह्मणप्रमुखं राज्यं शक्यं पालयितुं चिरम् ॥ २२

इति श्रीमहाभारते आदिपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

## १६०

अर्जुन उवाच ।
तापत्य इति यद्वाक्यमुक्तवानसि मामिह ।
तदहं ज्ञातुमिच्छामि तापत्यार्थविनिश्चयम् ॥ १
तपती नाम का चैषा तापत्या यत्कृते वयम् ।
कौन्तेया हि वयं साधो तत्त्वमिच्छामि वेदितुम् ॥ २
वैशंपायन उवाच ।
एवमुक्तः स गन्धर्वः कुन्तीपुत्रं धनंजयम् ।
विश्रुतां त्रिषु लोकेषु श्रावयामास वै कथाम् ॥ ३

---

स्वर्गो च. T1 G2.5 M3.5 नियताः; G1.4 M6-8 निष्णाताः. — d) T1 G2.4.6 M8 स्युर्नृपस्य; G1 सूनृतस्य; G5 स्वनृपस्य; M6-8 ये नृपस्य.

18 a) Ś1 निहितो; K1.3 Ñ1 निर°. K2 राज्ञा; K4 राज्ञां; G3 राजन्; M7 राज्ञे. — b) Ñ3 °नंतरः. Ś1 K1 स्वर्गश्चास्य निरं(K1 तदं)तरः; K2 Ñ1.2 V1 B1.3.5 Dn D1.2,5 स्वर्गश्च त(Ñ1 °श्चान्य)दनंतरं; K3 B6 Da D4 स्वर्गस्तस्मादनंतरः.

19 a) Ś1 K1.4 N1 Da B5.6 लाभं लब्धम्. Ko Ñ1 B1 च; K4 Ñ2 V1 B3.5.6 D वा (for हि). S अलब्धस्य च लाभाय. — b) Ñ2 V1 B6 Dn D1.2 वा (for च). S लब्धस्य परिरक्षणे.

20 b) Ñ2 V1 B D इच्छेद्भूतिमात्मनः. — c) Ś1 K1 T1 G3 M7.8 प्रासं; K3 प्राप्तां. Ko.2.3 Cd मेरुधरो°; K4 Ñ2 V1 B D वसुमतीं सर्वां (K4 कृत्स्नां); T1 मेरुवनो°; G3 तेन वनोत्तंसां. — d) K (except K1) B1 सर्वतः. S सागरांबरधारिणीं.

21 a) G3 न हि ते बल°. — b) Ś1 K (except K4) Ñ1.3 D5 वा (for च). — c) Ko जयेत्वाब्रा°; K3 Ñ1 यजेदब्रा°; G3 जयेया ब्रा°. — d) T G M3 भुवि (for भूमिं). Da1 भूमिधरः.

22 b) K3 Da1 M3 °वर्धनः; T2 G4-6 कीर्तिवर्धन. — d) Ñ1 भुवि; T2 G5 जगत्; Cd चिरम् (as in text).

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* K Ñ3 अंगारपर्ण; Ñ1.2 V1 B6 चैत्ररथ; to it Ko-2 add समास. Ś1 (om. the sub-parvan name) mentions only अंगारपर्ववृत्तं, followed by समासं; B1.6 Da Dn D1.2 (likewise) mention only तापत्य. — *Adhy. name:* Ko.3.4 पुरोहितप्रशंसा; Ñ1.2 V1 गंधर्वपराभवः; B3 D4 गंधर्वोपाख्यानं. — *Adhy. no.* (figures, words or both): Dn3 169; D4m 172; T1 167; T2 G M 119 (G1 121; G3 118). — *S'loka no.:* Dn 79 (Dn3 78); M3 27. — *Aggregate s'loka no.:* Dn3 6510.

### 160

1 Ś1 K1 S om. उवाच. — a) G1 तापत्यम्. Da1 D5 G1.4 तद्वाक्यम्. Cd as in text. — b) M6-8 इति (for असि). K2 मेनघ; D2 यन्मम (for मामिह). — c) Ś1 तदलं; Ñ3 B5 D4 तमहं. Ko.3.4 D5 G1-3 M6-8 श्रोतुमिच्छामि. — d) Ñ2 V1 तापत्यार्थं विनिश्चितं.

2 c) D1 तात; G5 सोयं (for साधो). — d) G1 M3 एतदिच्छामि; G2.4.6 M3.5-8 यत्तदि°. — After 2, D2 ins.:

1721* तत्सर्वं स्वमशेषेण तद्ब्रूह्यङ्गारपर्णक ।

3 Ś1 K (except Ko) D2.5 S om. उवाच (T2 om. the ref.). — a) Ñ1.3 T1 G3 तु (for स). D2 एवं पार्थेन संपृष्टः. — b) D2 शुद्धभावेन भारत; S प्रत्युवाच यशस्विनं. — c) K4 Ñ2.3 V1 Dn विश्रुतं; S अर्जुनं. — d) Ñ1 तां कथां. S विश्रुतं श्रुतविद् (T1 अब्रवीद्; G3 श्रुतवान्) वचः.

गन्धर्व उवाच ।

हन्त ते कथयिष्यामि कथामेतां मनोरमाम् ।
यथावदखिलां पार्थ धर्म्यां धर्मभृतां वर ॥ ४
उक्तवानसि येन त्वां तापत्य इति यद्वचः ।
तत्तेऽहं कथयिष्यामि शृणुष्वैकमना मम ॥ ५
य एष दिवि धिष्ण्येन नाकं व्याप्नोति तेजसा ।
एतस्य तपती नाम बभूवासदृशी सुता ॥ ६
विवस्वतो वै कौन्तेय सावित्र्यवरजा विभो ।
विश्रुता त्रिषु लोकेषु तपती तपसा युता ॥ ७
न देवी नासुरी चैव न यक्षी न च राक्षसी ।
नाप्सरा न च गन्धर्वी तथा रूपेण काचन ॥ ८
सुविभक्तानवद्याङ्गी स्वसितायतलोचना ।
स्वाचारा चैव साध्वी च सुवेषा चैव भामिनी ॥ ९
न तस्याः सदृशं कंचित्त्रिषु लोकेषु भारत ।
भर्तारं सविता मेने रूपशीलकुलश्रुतैः ॥ १०
संप्राप्तयौवनां पश्यन्देयां दुहितरं तु ताम् ।
नोपलेभे ततः शान्तिं संप्रदानं विचिन्तयन् ॥ ११
अथर्क्षपुत्रः कौन्तेय कुरूणामृषभो बली ।
सूर्यमाराधयामास नृपः संवरणः सदा ॥ १२
अर्घ्यमाल्योपहारैश्च शश्वच्च नृपतिर्यतः ।
नियमैरुपवासैश्च तपोभिर्विविधैरपि ॥ १३
शुश्रूषुरनहंवादी शुचिः पौरवनन्दनः ।
अंशुमन्तं समुद्यन्तं पूजयामास भक्तिमान् ॥ १४
ततः कृतज्ञं धर्मज्ञं रूपेणासदृशं भुवि ।

C. 1. 6530
B. 1. 171. 15
K. 1. 187. 15

---

4 Ś1 K1 S om. उवाच (G6 M6-8 om. the ref.). — a) K4 T2 G3 अहं ते. — b) S अति- (for एतां). T1 G1.2 M मनोहरां; G3 महत्तरां. — c) B5 G3.6 अखिलं; Da आर्थिनं. — d) K2 G3 धन्यां; Ñ1 सर्व- (for धर्म्यां). Ñ2 V1 B D (except D5) सर्वबुद्धिमतां वर.

5 a) B6 पार्थ त्वां; T G यद्वाक्यं. — b) Ś1 K1 त्रिर्वचः (Cd cites त्रिः); D3.4 तद्वचः. Ñ1 इति ते निखिलं वचः. — c) Ś1 K2-4 Ñ1 कीर्तयिष्यामि; T1 संप्रवक्ष्यामि. — d) K4 Da1 Dn D1 भव; S नृप (for मम).

6 a) T1 दीव्यन्वै; T2 G1.2.4-6 तेजस्वी; G3 M3.5 दीपि(G3 °वि)व्यन्; M6-8 दीप्तांशुर्; Cd धिष्ण्येन (as in text). — b) T2 G5 लोकं (for नाकं). — c) Here and below Ś1 तापती (for तपती). — d) N (except K4 Ñ1.3) T1 G3.5 बभूव सदृशी. G1 reads both शुभा and सुता.

7 a) T1 °स्वतोस्य. Ñ2 V1 Dn देवस्य (for कौन्ते°). — b) Ś1 K1.2.4 शुभा; Ko.3 M3.5 सुता; T2 नृप (for विभो). — d) T2 G1-6 तपसान्विता.

8 a) T1 चैषा; M5 यक्षी (for चैव). — b) M6 नोरगा (for न यक्षी). S न च किंनरी. — d) T1 M तथारूपा हि; T2 G1.4-6 °रूपा न; G3 °कारा न; G3 °चारा न.

9 a) K2.4 G6 सुस्मिता°; T1 G1.3 M5 स्वंचिता°. — d) Ś1 °शीला; K1 Ñ3 B1 Dn2 D2 °वेशा. Ñ1.3 B (except B5) Da D3 भाविनी.

10 a) B1.3 D3 न ह्यस्याः. D2 G6 सदृशः; T1 G3.4 °शी; G2 °शा. Ś1 Ko.2.4 B3 Dn1.n3 D1.4 T2 G1.2.5 M5 किंचित्; K1 D3 G6 कश्चित्; T1 G3.4 काचित्. — b) Da1 विद्यते (for भार°). — c) G4.6 स पिता मेने. — d) K1 °कुलान्वितैः; K3 T2 G4-6 °कुलैः श्रुतैः; Ñ1 रूपौदार्यकुलश्रुतैः; Ñ2 V1 B D °गुणश्रुतैः.

11 a) D5 S देवो (for देयां). K (except K2) ततः; Ñ1 च तां; B5 तदा; D2 तथा; S शुभां. — After 11ab, D4 (marg. *sec. m.*) S ins.:

1722* ह्यष्टवर्षां तु तां पश्यन्सविता रूपशालिनीम् ।

[ T1 तां पश्यद्ध्यष्टवर्षां स; G1 स ह्यष्टवर्षां तां पश्यत्; G2 M6-8 द्विर(G2 °अ)ष्टवर्षां तां पश्यन्. ]

— c) Ś1 K3.4 तदा (for ततः). — d) Ś1 K1 संप्रदायं (K1 °त्तुं) तु चिं°; K2 प्रदानमनुचिं°; K3.4 B (except B6) D4 °दानं स चिं°; Ñ1 °दानमाचिं°; D5 °दानं च चिं°.

12 a) Ñ1 Da D2 M5 अथार्क्ष°. D4 तामवेक्ष्य तु कौं°. — K1 om. 12b–36a. — b) Ko प्रथितो (for ऋषभो). Ñ1 वसन्; S (except T1) युवा. — d) Ś1 संवरणोति हि; D4 G3 °णस्तथा.

13 K1 om. 13 (cf. v. l. 12). — a) Ko.4 Ñ1.3 अर्घ्यमाल्यो(Ñ1 °पाद्यो)पहाराभ्यां; K2.3 अर्घमाल्योपहारैस्तु; Ñ2 V1 B D °पहाराद्यैः (D5 °णां). — b) K2 S स (for च). S (except M3.5) तदा (for यतः). Ñ2 V1 B D (except D5) गंधैश्च नियतः शुचिः. — d) Ś1 विविधैस्तथा.

14 K1 om. 14 (cf. v. l. 12); G6 om. 14a. — b) S (except T2) शश्वत् (for शुचिः). Ś1 Ko.2 Ñ1.2 V1 B5 T1 G1.2.6 M6-8 पौरवनंदन; G2 कौरवनंदन. — d) Ko.3.4 D5 G5 बुद्धिमान्.

15 K1 om. 15 (cf. v. l. 12). — a) K2 Da2 G5 कृतज्ञः; T1 G1-4.6 °ज्ञो. K2 G3 धर्मज्ञ; T2 G4-6 नृपतिं;

C. 1. 6590 B. 1. 171. 15 K. 1. 187. 15 तपत्याः सदृशं मेने सूर्यः संवरणं पतिम् ॥ १५
दातुमैच्छत्ततः कन्यां तस्मै संवरणाय ताम् ।
नृपोत्तमाय कौरव्य विश्रुताभिजनाय वै ॥ १६
यथा हि दिवि दीप्तांशुः प्रभासयति तेजसा ।
तथा भुवि महीपालो दीप्त्या संवरणोऽभवत् ॥ १७
यथार्चयन्ति चादित्यमुद्यन्तं ब्रह्मवादिनः ।
तथा संवरणं पार्थ ब्राह्मणावरजाः प्रजाः ॥ १८
स सोममति कान्तत्वादादित्यमति तेजसा ।
बभूव नृपतिः श्रीमान्सुहृदां दुर्हृदामपि ॥ १९
एवंगुणस्य नृपतेस्तथावृत्तस्य कौरव ।
तस्मै दातुं मनश्चक्रे तपतीं तपनः स्वयम् ॥ २०
स कदाचिदथो राजा श्रीमानुरुयशा भुवि ।
चचार मृगयां पार्थ पर्वतोपवने किल ॥ २१
चरतो मृगयां तस्य क्षुत्पिपासाश्रमान्वितः ।
ममार राज्ञः कौन्तेय गिरावप्रतिमो हयः ॥ २२
स मृताश्वश्चरन्पार्थ पद्भ्यामेव गिरौ नृपः ।
ददर्शासदृशीं लोके कन्यामायतलोचनाम् ॥ २३
स एक एकामासाद्य कन्यां तामरिमर्दनः ।
तस्थौ नृपतिशार्दूलः पश्यन्नविचलेक्षणः ॥ २४
स हि तां तर्कयामास रूपतो नृपतिः श्रियम् ।
पुनः संतर्कयामास रवेर्भ्रष्टामिव प्रभाम् ॥ २५
गिरिप्रस्थे तु सा यस्मिन्स्थिता स्वसितलोचना ।

---

G2 °ज्ञः. — c) K0.3.4 D1 तपत्या. — d) K4 G4 प्रति (for पतिम्).

16 K1 om. 16 (cf. v. l. 12). — a) K3 तामैच्छत ततः कन्यां. — b) D4 ततः (for तस्मै). D3 वै (for ताम्). — c) K3 कौंतेय (for कौर°). — d) K0.3.4 Ñ2 V1 Dn D1.3 T1 M5 च.

17 K1 om. 17 (cf. v. l. 12). — a) Ś1 K0.4 दीप्त्या (for दिवि). — b) Ś1 K2 प्रतापयति; K0.3.4 D5 प्रकाश°; G3 प्रसाध°. — T2 (hapl.) om. 17c–19b.

18 K1 T2 om. 18 (cf. v. l. 12, 17). — a) Ś1 K3.4 Ñ1.3 यथार्हयंति; K0 यथा चार्हति. G1 वा नित्यं (for चादित्यं). — b) Ś1 धर्मवादिनः. — d) B5 ब्राह्मणप्रमुखाः.

19 K1 om. 19; T2 om. 19ab (cf. v. l. 12, 17). — a) Ś1 K (K1 om.) D3.4.5 इव (for अति). K2 Ñ1 G3.3 M6–8 कांतित्वात्; D1 कांतं च; D2 कामत्वात्. — b) Ś1 K (K1 om.) D3.4 इव; G3 सम- (for अति). — c) T1 नंदनस्तापनश्चासीत्. — d) D2 दुर्हृदां सुहृदाम् (by transp.). Ś1 तथा (for अपि).

20 K1 om. 20 (cf. v. l. 12). — ab) K0 भारत (for कौर°). K4 एवंपुण्यस्य नृपतेस्तस्य वृत्तस्य भारत; S एवंगुणाय नृपते तथावृत्ताय नित्यशः (M5 कौरव). — c) Ś1 ततश्चक्रे. — d) K2 °नः शुभां.

21 K1 om. 21 (cf. v. l. 12). — a) Ś1 राजन्. — b) K3 G6 उरु (K3 sup. lin. कुरु) यथा भुवि; Ñ1 उदयगोचरः; Ñ2 V1 B Da Dn D1.2 अमित(B1.5 D2 अतुल)विक्रमः; Ñ3 D4 T G1–6 M3.5 उरुयशोभुजः. — c) Ś1 मृगयामास (sic).

22 K1 om. 22 (cf. v. l. 12). — a) Ś1 K0.3.4 D5 G1 तत्र (for तस्य). — b) K0.3.4 D5 °श्रमातुरः; Ñ2.3 V1 B Da Dn D1.3.4 T1 °समन्वितः. — c) B1 D3.4 पपात रा°. — d) G3 जवेनाप्रतिमो.

23 K1 om. 23 (cf. v. l. 12). — a) B6 G2 स हताश्वश्. — b) Ś1 K (K1 om.) D5 M6–8 नृपो गिरौ (by transp.). D2 T G3 नृप. Ñ1 वने तस्मिन्महागिरौ. — c) Ś1 °प्रतिमां; G2 °सदृशां.

24 K1 om. 24 (cf. v. l. 12). — a) Da1 एवमेकाम्; T1 एकः स एकाम्. — b) Ś1 अरिसूदन; Ñ2 V1 B D (except D5) M5 परबलार्दनः; G3 °मर्दन. — c) K3.4 G3 °शार्दूल; M8 स नृपशा°. Ñ1 वितस्थे नृपशा°. — d) K4 °न्नपि विचक्षणः; D2 °न्नविकलेक्षणः; G2.6 M5 °न्नपि चलेक्षणः.

25 K1 om. 25 (cf. v. l. 12). — b) K3 रूपेण. G1 नृपते. — c) Ñ1 B1 T1 G1.2.6 M6–8 स तर्क°. — d) Ś1 नष्टाम्; Ñ1 मुक्ताम्; G6 उष्णाम् (for भ्रष्टाम्). K4 भ्रष्टामिव प्रभां रवेः (by transp.). — After 25, K4 Ñ1.3 V1 B D ins.:

1723* वपुषा वर्चसा चैव शिखामिव विभावसोः ।
प्रसन्नत्वेन कान्त्या च चन्द्ररेखामिवामलाम् ।

[ (L. 2) Ñ1 B6 Da Dn1.n3 D1 °त्वे च. D5 कांतित्वे. ]

26 K1 om. 26 (cf. v. l. 12). — a) K2 Ñ2 V1 B3m Dn D1 गिरिपृष्ठे; Cd as in text. — b) K3 स्वसित°; T1 चासित°; Cd as in text. — After 26ab, K4 Ñ1.3 V1 B D ins.:

1724* विभ्राजमाना शुशुभे प्रतिमेव हिरण्मयी ।
तस्या रूपेण स गिरिर्वेषेण च विशेषतः ।

[ (L. 1) K4 वपुषा रतिरेव हिर°. — (L. 2) Ñ1 समन्वितः (for विशे°). ]

— c) Ś1 स च वृक्षोपुपलतो; K3 सहवृक्ष°; K4 सवृक्ष-गुल्मोपलतो; B3 साश्मवृक्ष°; B6 सम(m स स)वृक्ष°; D4

स सवृक्षक्षुपलतो हिरण्मय इवाभवत् ॥ २६
अवमेने च तां दृष्ट्वा सर्वप्राणभृतां वपुः ।
अवाप्तं चात्मनो मेने स राजा चक्षुषः फलम् ॥ २७
जन्मप्रभृति यत्किंचिद्दृष्टवान्स महीपतिः ।
रूपं न सदृशं तस्यास्तर्कयामास किंचन ॥ २८
तया बद्धमनश्चक्षुः पाशैर्गुणमयैस्तदा ।
न चचाल ततो देशाद्बुबुधे न च किंचन ॥ २९
अस्या नूनं विशालाक्ष्याः सदेवासुरमानुषम् ।
लोकं निर्मथ्य धात्रेदं रूपमाविष्कृतं कृतम् ॥ ३०
एवं स तर्कयामास रूपद्रविणसंपदा ।
कन्यामसदृशीं लोके नृपः संवरणस्तदा ॥ ३१
तां च दृष्ट्वैव कल्याणीं कल्याणाभिजनो नृपः ।
जगाम मनसा चिन्तां काममार्गणपीडितः ॥ ३२
दह्यमानः स तीव्रेण नृपतिर्मन्मथाग्निना ।
अप्रगल्भां प्रगल्भः स तामुवाच यशस्विनीम् ॥ ३३
कासि कस्यासि रम्भोरु किमर्थं चेह तिष्ठसि ।
कथं च निर्जनेऽरण्ये चरस्येका शुचिस्मिते ॥ ३४
त्वं हि सर्वानवद्याङ्गी सर्वाभरणभूषिता ।
विभूषणमिवैतेषां भूषणानामभीप्सितम् ॥ ३५
न देवीं नासुरीं चैव न यक्षीं न च राक्षसीम् ।
न च भोगवतीं मन्ये न गन्धर्वीं न मानुषीम् ॥ ३६
या हि दृष्टा मया काश्चिच्छ्रुता वापि वराङ्गनाः ।
न तासां सदृशीं मन्ये त्वामहं मत्तकाशिनि ॥ ३७
एवं तां स महीपालो बभाषे न तु सा तदा ।

C. 1. 6556
B. 1. 171. 41
K. 1. 187. 41

---

समं वृक्षैरुपलतो; D5 स हि वृक्षोभ्युपलतो; S स स(T1 स न; G1 न स°; M6–8 तत्र)वृक्षलतागुल्मो (G3.4 °ल्मा; M6–8 °ल्मं). Text as in K0.3 Ñ V1 B1.6 Da Dn D1.2; Cd cites क्षुपः. — d) K2 इवावभौ. — After 26, K4 ins.:

1725* तां तु दृष्ट्वा स चार्वङ्गीं राजा राजीवलोचनाम् ।

27 K1 om. 27 (cf. v. l. 12). — a) S (except M3.5) स (for च). — b) K0 °भृतां वरां; K2 Ñ3 V1 B1.3.5 D5 °लोकेषु (K2 B1 °के स) योषितः; Ñ1.3 D5 °भृतां वरः; Da °प्राणिभृ°; S °भृतां स्त्रियः (G3.5 M7 °यं). — c) Ś1 B6 om. च. K2 B1.3 (m as in text) D2.4 जन्मनो; D5 वांततो (for चात्मनो). — d) Ś1 T1 चक्षुषोः फलं.

29 K1 om. 29 (cf. v. l. 12); T1 om. 29a–30b. — a) Ś1 तथा; B (except B5) D5 तस्याः; S (T1 om.) तस्यां (for तया). — b) Ś1 K0.4 B5 D3.5 G3.5 तथा; D3 ततः (for तदा). — c) S (T1 om.) नातिचक्राम तं देशं. — d) Ś1 न स किं°; Ñ1 न कथंचन.

30 K1 om. 30; T1 om. 30ab (cf. v. l. 12, 29). — a) Ñ1 D5 G3 तस्या. — c) B6 रूपं; Dn2 D3 G1 M3 लोके; T1 तस्यां; G3 लौक्यं. K2 मात्रेदं; B6 धात्रैकं; T1 यात्रेदं; M6 चात्रेदं. — d) D2 °ष्कृतं परं.

31 K1 om. 31 (cf. v. l. 12). — a) S इति (for एवं). Ñ V1 B (except B1) Dn2 D1 संतर्क°; S तां तर्क°. — G1 om. 31cd. — c) Ś1 असदृशां; M5 समदर्शी.

32 K1 om. 32 (cf. v. l. 12). — a) Ś1 तां च वै दृष्ट्वा; K0 तां च दृष्ट्वाथ; K3.4 तां चैव दृष्ट्वा. — d) K0.3.4 Ñ1.3 °ताडितः; K2 Ñ2 V1 B3.5.6 Da Dn D1.2.4 M5 कामबाणेन पी°; B1 कामबाणप्रताडितः; D5 G3–5 °मार्गेण पी(D5 ता)डितः.

33 K1 om. 33 (cf. v. l. 12). — a) G6 तुद्यमानः. G3 M7.8 सु- (for स). D4 तीक्ष्णेन. — b) G1 मदनाग्निना. — c) K4 अप्रगल्भ्यं; Ñ1 T1 M °ल्भः; T2 G (except G1) °ल्भं. K2 Ñ1.3 B1.3.5 D2.4.5 G1.2 प्रगल्भः सन्; K4 प्रगल्भ्यां स; Ñ2 V1 B6 Da Dn D1 प्रगल्भस्तां; T G3–6 M प्रगल्भां तां. — d) Ñ2 V1 B6 Da Dn D1 तदोवाच मनोहरां; D2.4 S उवाचाथ यश°.

34 K1 om. 34 (cf. v. l. 12). Before 34, M6–8 ins. संवरणः. — b) Ś1 om. च. — d) Ś1 K3.4 D2 वसस्येका.

35 K1 om. 35 (cf. v. l. 12). — a) Dn3 त्वं च; G1.2 तत्त्वं. Ś1 B (except B5) Dn1 D1 °वद्यांगि. — d) Ś1 G1 °प्सितां; Ñ1.3 D4.5 T G2.5 M °प्सिता; G3.4.6 °प्सता.

36 K1 om. 36a (cf. v. l. 12). — a) Ñ1 च त्वां (for चैव). — b) S (except M5) न च किंनरीं. Ś1 K0.3.4 न गंधर्वीं न राक्षसीं. — M6–8 om. 36cd. — d) Ś1 K0.3 न यक्षीं न च मा°; K1.4 न च यक्षीं न मा°.

37 a) D5 याश्च; G3 यावद् (for या हि). Ś1 K0 D5 T1 G2.3 काचिच्. — b) Ś1 K0.1.3.4 Ñ1 D5 श्रुतपूर्वा; K2 G6 श्रुताश्चापि. Ś1 G3 M5 वरांगना; K1 मयांगना; Ñ1 तथांगनाः. — d) K0 D5 G6 °गामिनि (D5 °नीं; G6 °नी); K4 T1 G1–5 M3.5.7 °काशिनी (M7 °नीं). — After 37, K4 Ñ1.2 V1 B D ins.:

1726* दृष्ट्वैव चारुवदने चन्द्रात्कान्ततरं तव ।
वदनं पद्मपत्राक्षं मां मथ्नातीव मन्मथः ।

[ (L. 1) D5 चारुजघने. — (L. 2) B1 मामश्नातीव; D2

C. 1. 6356 B. 1. 171. 41 K. 1. 167. 41

कामार्तं निर्जनेऽरण्ये प्रत्यभाषत किंचन ॥ ३८
ततो लालप्यमानस्य पार्थिवस्यायतेक्षणा ।
सौदामिनीव साभ्रेषु तत्रैवान्तरधीयत ॥ ३९
तामन्विच्छन्स नृपतिः परिचक्राम तत्तदा ।
वनं वनजपत्राक्षीं भ्रमन्नुन्मत्तवत्तदा ॥ ४०
अपश्यमानः स तु तां बहु तत्र विलप्य च ।
निश्चेष्टः कौरवश्रेष्ठो मुहूर्तं स व्यतिष्ठत ॥ ४१

इति श्रीमहाभारते आदिपर्वणि षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

## १६१

गन्धर्व उवाच ।
अथ तस्यामदृश्यायां नृपतिः काममोहितः ।
पातनः शत्रुसंघानां पपात धरणीतले ॥ १
तस्मिन्निपतिते भूमावथ सा चारुहासिनी ।
पुनः पीनायतश्रोणी दर्शयामास तं नृपम् ॥ २
अथाबभाषे कल्याणी वाचा मधुरया नृपम् ।
तं कुरूणां कुलकरं कामाभिहतचेतसम् ॥ ३
उत्तिष्ठोत्तिष्ठ भद्रं ते न त्वमर्हस्यरिंदम ।
मोहं नृपतिशार्दूल गन्तुमाविष्कृतः क्षितौ ॥ ४
एवमुक्तोऽथ नृपतिर्वाचा मधुरया तदा ।
ददर्श विपुलश्रोणीं तामेवाभिमुखे स्थिताम् ॥ ५
अथ तामसितापाङ्गीमाबभाषे नराधिपः ।

---

अंतःपातीव. ]

38 Before 38, S ins. गंधर्वः ($G_{1.2}$ वैशं°). — $^{a}$) $T_2$ $G_3$ कामार्त्तो; $G_{1.2}$ तमार्तं; $G_5$ कन्या सा.

39 $^{a}$) S तया ($M_5$ तस्य) (for ततो). $G_{1.2}$ चालप्य॰मानस्य. — $^{b}$) $Ś_1$ $K_1$ °स्यासिते°. — $^{c}$) $K_1$ भ्रान्नेषु (sic); $Ñ_{1.2}$ $V_1$ $B_{1.3}$ D (except $D_2$) चाभ्रेषु. $Ñ_3$ $B_{3.6}$ °मिनिरिवाभ्रेषु. — $^{d}$) = 1. 93. 43 etc.

40 $^{a}$) $Ś_1$ अन्विपन्; $K_1$ अनृष्यं (sic); $Ñ_2$ $V_1$ Dn $D_1$ अन्वेष्टुं; Cd as in text. — $^{b}$) $K_4$ $Ñ_2$ $V_1$ B D सर्वतः; $Ñ_{1.3}$ तां तदा (for तत्तदा). — $^{c}$) $Ś_1$ $K_1$ °पत्राक्षो. — $^{d}$) $K_1$ corrupt. $D_5$ उन्मत्तमानुषः. $Ś_1$ $K_{2.3}$ ततः; $Dn_1$, $n_2$ $D_1$ सदा (for तदा). $Ñ_3$ भ्रमंतं मत्तवत्ततः.

41 $^{a}$) $M_5$ स तदा. — $^{b}$) $K_1$ व्यलप्य; $B_5$ प्रलप्य. — $^{c}$) $Ñ_2$ $V_1$ B D (except $D_5$) पार्थिवश्रेष्ठो. — $^{d}$) $G_3$ न व्यतिष्ठत; $M_{6-8}$ समति°.

Colophon. *Major parvan:* $T_2$ G M संभव° (for आदि°). — *Sub-parvan:* $Ñ_{1.2}$ $V_1$ चैत्ररथ; $T_1$ संभव; to it $Ñ_{1.2}$ $V_1$ add तपत्युपाख्यान. $Ś_1$ K $Ñ_3$ B Da $Dn_1$. $n_2$ $D_{1,2,4}$ M (all om. the sub-parvan name) mention only तापत्य; ($K_3$ $B_3$ M तापत्योपाख्यान). — *Adhy. name:* $K_4$ $D_5$ तपतीदर्शनं. — *Adhy. no.* (figures, words or both): $Dn_3$ 170; $D_4$m 173; $T_1$ 168; $T_2$ G M 120 ($G_1$ 122; $G_3$ 119). — *S'loka no.:* Dn 44; $M_5$ 42.

### 161

1 $Ś_1$ $K_1$ S om. उवाच. — $^{b}$) $G_{1-3.6}$ भावमोहितः ($G_3$ °लोभितः).

2 $^{b}$) $G_1$ वयता; $G_2$ व्यथिता; $G_5$ याथा सा (for अथ सा). $G_6$ चारुवर्णिनी. — $G_3$ (? hapl.) om. $2^{d}$–$3^{a}$. — $^{d}$) $Ś_1$ K (except $K_4$) तर्कयामास(!).

3 $G_3$ om. $3^{a}$ (cf. v. l. 2); $B_{1.5}$ $D_2$ $G_6$ (? hapl.) om. $3^{ab}$. — $^{a}$) $K_1$ अथाह भावकल्याणी; $T_2$ $G_{4.6}$ आबभाषेथ क°. — $^{b}$) Cf. $5^{b}$. Da $G_3$ गिरा; $D_4$ भृशं; $M_{3.5}$ तदा (for नृपम्). — $G_3$ (hapl.) om. $3^{c}$–$6^{d}$. — $^{d}$) $Ś_1$ °चेतनं; $K_2$ $G_5$ काममोहित°; $Ñ_3$ कामाहितम°; $B_5$ कामोपहत°; $G_2$ कामाभिगत°. — After 3, $K_4$ $Ñ_2$ $V_1$ B D ins.:

1727* उवाच मधुरं वाक्यं तपती प्रहसन्निव (!)।

4 $G_3$ om. 4 (cf. v. l. 3). Before 4, M ins. कन्या. — $^{d}$) $K_4$ $B_1$m $D_4$ S (except $G_2$; $G_3$ om.) Cd आविष्कृतं; Nilp °ष्कृता. $T_2$ $G_{4-6}$ कृतं (for क्षितौ). $D_1$ गंतुमर्हसि भारत.

5 $G_3$ om. 5 (cf. v. l. 3). Before 5, S (except $G_3$ $M_{3.5}$) ins. गंधर्वः. — $^{a}$) T $G_{4-6}$ स; $G_{1.2}$ तु (for अथ). — $^{b}$) Cf. $3^{b}$. $G_5$ तथा; $M_{3.5}$ तया (for वाचा). $K_1$ $Ñ_{1.3}$ $B_6$ तया; $K_3$ तदा; $D_2$ गिरौ; S ($G_3$ om.) गिरा (for तदा). — $^{d}$) $K_2$ $Ñ_2$ $V_1$ $B_{3.6}$ Da Dn $D_{1.4.5}$ S ($G_3$ om.) अभिमुखे (as in text); the rest °मुखीं.

मन्मथाग्निपरीतात्मा संदिग्धाक्षरया गिरा ॥ ६
साधु मामसितापाङ्गे कामार्तं मत्तकाशिनि ।
भजस्व भजमानं मां प्राणा हि प्रजहन्ति माम् ॥ ७
त्वदर्थं हि विशालाक्षि मामयं निशितैः शरैः ।
कामः कमलगर्भाभे प्रतिविध्यन्न शाम्यति ॥ ८
ग्रस्तमेवमनाक्रन्दे भद्रे काममहाहिना ।
सा त्वं पीनायतश्रोणि पर्याप्नुहि शुभानने ॥ ९
त्वय्यधीना हि मे प्राणा किंनरोद्गीतभाषिणि ।
चारुसर्वानवद्याङ्गि पद्मेन्दुसदृशानने ॥ १०
न ह्यहं त्वदृते भीरु शक्ष्ये जीवितुमात्मना ।
तस्मात्कुरु विशालाक्षि मय्यनुक्रोशमङ्गने ॥ ११
भक्तं मामसितापाङ्गे न परित्यक्तुमर्हसि ।
त्वं हि मां प्रीतियोगेन त्रातुमर्हसि भामिनि ॥ १२
गान्धर्वेण च मां भीरु विवाहेनैहि सुन्दरि । C. 1. 6577 B. 1. 172. 19 K. 1. 188. 19

---

6 G3 om. 6 (cf. v. l. 3). — $^{a}$) G1.2.5 °पांगाम्. — $^{b}$) Ś1 तां बभाषे नरा°; Ñ3 V1 B6 Da Dn D1 आबभाषे स पार्थिवः; B1.3.5 D2.4 बभाषे चारुहासिनीं. — B5 om. 6$^{cd}$. — $^{c}$) D2.4 T G (G3 om.) मन्मथाभि° (G2.4 °पि°). — D3 om. 6$^{d}$–7$^{a}$. — $^{d}$) Ñ1 बाष्पसंदिग्धया; Cd as in text.

7 D2 om. 7$^{a}$ (cf. v. l. 6). — Before 7, S (except T1) ins. संवरणः. — $^{a}$) Ñ2.3 V1 B1.3.6 D (D2 om.) त्वम् (for माम्). K0.1.4 Ñ V1 B1.3.6 D (D2 om.) G1.3 असितापांगि (or °गी). B5 पुनः पीनायतश्रोणीं. — $^{b}$) K3.4 G2 कामार्थं; G1 कामुकं. K0 D5 °गामिनि; T1 G3.5.6 M6.7.8 °काशिनी. — $^{cd}$) K1 वै; Ñ3 त्वं (for मां). Ś1 K जीवो हि (K2 °पि) प्र(Ś1 वि)जहाति मां. S भजस्वेह यथा नाहं प्राणाञ्जह्यां शुचिस्मिते.

8 $^{a}$) Ñ V1 S त्वदर्थे. — $^{c}$) Ñ1.3 T1 M6-8 °पत्राभे; B (except B5) D2.4.5 °पत्राक्षि; G2 °गर्भांगे.

9 $^{a}$) Ñ2 V1 B1m.3 D (except D2.5) दृष्टमेवम्. T1 M3.5 ग्रस्तमेव(T1 °क)मनाक्रंदं; T2 G5 दृष्टं त्रस्तमनाक्रांतं; G1.2.6 दृष्टं ग्र(G6 त्र)स्तमनाक्रंदं; G3 ग्रस्तं ग्रहमनादृत्य; G4 ग्रस्तं त्रस्तमनाक्रंदं; M6-8 ग्रस्तमेवमनुक्रंदं. Cd cites अनाक्रंदे (=शोकशून्ये) as in text. — $^{b}$) T G (except G1.2) M3.5 °महाग्निना. — $^{c}$) K0.3 T1 G1.2.5 M मां त्वं; K2 त्वं मां; K4 G6 मां च. T G1.2.4.5 M (except M7) °श्रोणी; G6 पीनघनश्रोणी. — $^{d}$) Ñ2 V1 B D (except D5) मामाप्नुहि. Ñ V1 B D (except D5) वरानने. S संजीवयितुमर्हसि.

10 $^{a}$) K1.4 Ñ1.2 V1 B D G3 M6-8 त्वदधीना. T G1.2.5.6 M च (for हि). G4 त्वया विना न मे प्राणाः. — $^{b}$) K0.4 D1 G M5.6.8 किंनरोद्गी(G6 °रागी)तभाषिणी. — $^{c}$) K4 Da1 Dn1 S (except T1 G3.4) °वद्यांगी. — $^{d}$) Ñ3 V1 B D °प्रतिमानने.

11 $^{a}$) K1 न हि त्वं (for न ह्यहं). Ś1 K (except K3) Ñ1.3 D5 G3 M6-8 त्वामृते. T1 शक्ये (for भीरु). — $^{b}$) D5 शक्तो; T1 क्षणं (for शक्ष्ये). Ñ3 V1 B Da Dn D1.2.4 शक्या(B5.6 D2 °क्या)मि खलु जीवितुं. — After 11$^{ab}$, K4 Ñ3 V1 B D (except D5) ins.:

1728* कामः कमलपत्राक्षि प्रतिविध्यति मामयम् ।
[ =(var.) 8$^{cd}$. D2 प्रतिबध्नाति. ]

— $^{d}$) K1 °क्रोपमंगलं; K3 °क्रोशमातुरे.

12 $^{a}$) Ñ1 भज माम्. K1.2 B Da2 Dn D2.4.5 G1.3 असितापांगि; K4 Da1 D1 °पांगी. — $^{c}$) Some S MSS. मा (for मां). B5 प्रीतियुक्तेन (m as in text). — $^{d}$) Ñ3 V1 B D (except D1.5) भाविनि. — After 12, Ñ2 V1 B D ins.:

1729* त्वद्दर्शनकृतस्नेहं मनश्चलति मे भृशम् ।
न त्वां दृष्ट्वा पुनरन्यां द्रष्टुं कल्याणि रोचये ।
प्रसीद वशगोऽहं ते भक्तं मां भज भाविनि ।

[ (L. 2) Ñ2 V1 B5 Dn रोचते. — (L. 3) Cf. 12$^{d}$. D4.5 भामिनि. ]

— Ñ2 V1 B5.6 Dn D4.5 cont.:

1730* दृष्ट्वैव त्वां वरारोहे मन्मथो भृशमङ्गने ।
अन्तर्गतं विशालाक्षि विध्यति स्म पतत्रिभिः ।
मन्मथाग्निसमुद्भूतं दाहं कमललोचने ।
प्रीतिसंयोगयुक्ताभिरद्भिः प्रह्लादयस्व मे ।
पुष्पायुधं दुराधर्षं प्रचण्डशरकार्मुकम् । [5]
त्वद्दर्शनसमुद्भूतं विध्यन्तं दुःसहैः शरैः ।
उपशामय कल्याणि आत्मदानेन भाविनि ।

[ (L. 1) D5 भृशदारुणः. — (L. 4) B6 °संयोगसिक्ताभिर्; D5 °शीलाभिर्. — (L. 6) Cf. 8. D4 दुःसहं; D5 दुःखदैः. — (L. 7) Cf. 12$^{d}$. D4.5 भामिनि. ]

13 =1. 67. 4. — $^{a}$) Ñ1.2 V1 B D (except D5) गांधर्वेण विवाहेन; M6-8 °र्वेणैहि मा भीरु. — $^{b}$) Ś1 K1.2 D5 T2 G1.2.5.6 M5 एव; K4 Ñ3 हि; G3 इव; G4 M6-8 च (for एहि); cf. v. l. 13$^{a}$. Ñ2 V1 B D (except D5) मामुपैहि वरांगने (B1.3.5 Dn3 D1.2 वरानने). — $^{c}$) K1 हि सुश्रोणि. — $^{d}$) Cf. 1. 67. 26$^{ab}$.

14 K1 S om. उवाच. Ñ V1 S (except G3) कन्या (for तपती). — $^{b}$) K1 °वती गृहं; D1 °मतीत्यहं; M6-8

C. 1. 6678 B. 1. 172. 19 K. 1. 165. 19 विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते ॥ १३

तपत्युवाच ।

नाहमीशात्मनो राजन्कन्या पितृमती ह्यहम् ।
मयि चेदस्ति ते प्रीतिर्याचस्व पितरं मम ॥ १४
यथा हि ते मया प्राणाः संगृहीता नरेश्वर ।
दर्शनादेव भूयस्त्वं तथा प्राणान्ममाहरः ॥ १५
न चाहमीशा देहस्य तस्मान्नृपतिसत्तम ।
समीपं नोपगच्छामि न स्वतन्त्रा हि योषितः ॥ १६
का हि सर्वेषु लोकेषु विश्रुताभिजनं नृपम् ।
कन्या नाभिलषेन्नाथं भर्तारं भक्तवत्सलम् ॥ १७
तस्मादेवंगते काले याचस्व पितरं मम ।
आदित्यं प्रणिपातेन तपसा नियमेन च ॥ १८
स चेत्कामयते दातुं तव मामरिमर्दन ।
भविष्याम्यथ ते राजन्सततं वशवर्तिनी ॥ १९
अहं हि तपती नाम सावित्र्यवरजा सुता ।
अस्य लोकप्रदीपस्य सवितुः क्षत्रियर्षभ ॥ २०

इति श्रीमहाभारते आदिपर्वणि एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

## १६२

गन्धर्व उवाच ।

एवमुक्त्वा ततस्तूर्णं जगामोर्ध्वमनिन्दिता ।
स तु राजा पुनर्भूमौ तत्रैव निपपात ह ॥ १
अमात्यः सानुयात्रस्तु तं ददर्श महावने ।
क्षितौ निपतितं काले शक्रध्वजमिवोच्छ्रितम् ॥ २
तं हि दृष्ट्वा महेष्वासं निरश्वं पतितं क्षितौ ।

---

°वशा ह्यहं.

15 a) K4 मम प्राणाः; G1 मयि प्रा°. — b) S संहृ(T1 G2 M5 °हि)ताश्च. M6–8 नराधिप. — K0 om. $15^{cd}$. — d) Ś1 K1–3 D1, 2, 4, 5 S (except T1 G4 M8) ममाहर; D3 समाहरः.

16 a) B3 दानस्य; G2 देवी स्यात्; G3 ते मान्य (for देहस्य). — Ñ3 om. $16^{c}$–$19^{b}$; G2 om. $16^{d}$–$18^{a}$.

17 Ñ3 G2 om. 17 (cf. v. l. 16). — c) D3 नाभिनयेन्. K2 T1 M नाथ. — d) K4 अनाथं (for भर्तारं). Ś1 G1 भर्तृ°; B5, 6 D3 भक्ति°.

18 Ñ3 om. 18; G2 om. $18^{a}$ (cf. v. l. 16). — a) K0, 4 M (except M8) °गते कार्ये. — d) Ś1 K D5 °सा च दमेन.

19 Ñ3 om. $19^{ab}$ (cf. v. l. 16). — b) K2–4 तुभ्यं माम्. Ñ1, 2 V1 B6 D3 Dn D1 अरिसूदन. — c) Ś1 Ñ2, 3 V1 B1 Dn D1 अद्य (for अथ).

20 a) Ś1 K D5 नाम्ना (K2 °म्नी). — b) G2, 5 सावित्र्या°. — c) B1, 3 D3, 4 तस्य. G1 °प्रवीरस्य. — d) K0 सवितुश्च विवस्वतः.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1, 2 V1 चैत्ररथ (followed by तपत्युपाख्यान); T1 संभव. Ś1 K Ñ3 B D M3, 5 (all om. sub-parvan name) mention only तापत्य (M3, 5 तापत्योपाख्यान). — *Adhy. name:* K0, 4 तपतीवाक्यं. — *Adhy. no.* (figures, words or both): Dn3 171; D4m 174; T1 168; T2 G M 121 (G1 123; G3 120). — *S'loka no.:* Dn 25 (Dn1 22); M3 20. — *Aggregate s'loka no.:* Dn2 6576.

**162**

1 Ś1 K1 S om. उवाच (G3 om. the ref.). — After $1^{ab}$, D4 (marg. *sec. m.*) S ins.:

1731* तपती तपतीत्येवं विललापातुरो नृपः ।
प्रास्खलच्चासकृद्राजा पुनरुत्थाय धावति ।
धावमानस्तु तपतीमदृष्ट्वैव महीपतिः ।

[ (L. 1) T1 G तपतीत्येव. G1 °पाकुलो नृपः. — (L. 2) G1, 3 M प्रस्खल°. — (L. 3) T2 G4–6 महीपते. ]
— After 1, K4 Ñ1, 2 V1 B D ins.:

1732* अन्वेषमाणः सबलस्तं राजानं नृपोत्तमम् ।

[ Ñ1 °माणः संतसस्तं etc. K4 मार्गमाणाः सपत्नास्तं राजानं नृपसत्तम; B1, 5 D2 मार्गमाणः सबलस्तं (D2 स तु वने) राजानं नृपसत्तम. ]

2 a) Ś1 K Ñ2, 3 V1 B6 D च (for तु). — d) Ś1 (*sup. lin.* as in text) D1, 2 G4 (by corr.) °मिवोत्थितं; Dn1 °मिवोज्झितं.

3 b) K0, 4 Ñ V1 Dn निरस्तं; B3 m. 5 m निरसुं. — K4 (hapl.) om. from पतितं (in $3^{b}$) up to पितेव (in $5^{b}$) Ś1 K (K4 om.) Ñ2 V1 Dn D1, 5 M5 भुवि (for क्षितौ). — d) D1 संदीप्त इव चाग्निना.

बभूव सोऽस्य सचिवः संप्रदीप्त इवाग्निना ॥ ३
त्वरया चोपसंगम्य स्नेहादागतसंभ्रमः ।
तं समुत्थापयामास नृपतिं काममोहितम् ॥ ४
भूतलाद्भूमिपालेशं पितेव पतितं सुतम् ।
प्रज्ञया वयसा चैव वृद्धः कीर्त्या दमेन च ॥ ५
अमात्यस्तं समुत्थाप्य बभूव विगतज्वरः ।
उवाच चैनं कल्याण्या वाचा मधुरयोत्थितम् ।
मा भैर्मनुजशार्दूल भद्रं चास्तु तवानघ ॥ ६
क्षुत्पिपासापरिश्रान्तं तर्कयामास तं नृपम् ।
पतितं पातनं संख्ये शात्रवाणां महीतले ॥ ७
वारिणाथ सुशीतेन शिरस्तस्याभ्यषेचयत् ।
अस्पृशन्मुकुटं राज्ञः पुण्डरीकसुगन्धिना ॥ ८
ततः प्रत्यागतप्राणस्तद्बलं बलवान्नृपः ।
सर्वं विसर्जयामास तमेकं सचिवं विना ॥ ९
ततस्तस्याज्ञया राज्ञो विप्रतस्थे महद्बलम् ।
स तु राजा गिरिप्रस्थे तस्मिन्पुनरुपाविशत् ॥ १०
ततस्तस्मिन्गिरिवरे शुचिर्भूत्वा कृताञ्जलिः ।
आरिराधयिषुः सूर्यं तस्थावूर्ध्वभुजः क्षितौ ॥ ११
जगाम मनसा चैव वसिष्ठमृषिसत्तमम् ।
पुरोहितममित्रघ्नस्तदा संवरणो नृपः ॥ १२
नक्तंदिनमथैकस्थे स्थिते तस्मिञ्जनाधिपे ।
अथाजगाम विप्रर्षिस्तदा द्वादशमेऽहनि ॥ १३
स विदित्वैव नृपतिं तपत्या हृतमानसम् ।
दिव्येन विधिना ज्ञात्वा भावितात्मा महानृषिः ॥ १४
तथा तु नियतात्मानं स तं नृपतिसत्तमम् ।
आबभाषे स धर्मात्मा तस्यैवार्थचिकीर्षया ॥ १५
स तस्य मनुजेन्द्रस्य पश्यतो भगवानृषिः ।
ऊर्ध्वमाचक्रमे द्रष्टुं भास्करं भास्करद्युतिः ॥ १६

C. 1. 6600
B. 1. 173. 17
K. 1. 189. 18

---

4 K4 om. 4 (cf. v. l. 3); Ñ1.3 om. $4^{ab}$. — $^{a}$) S चोपसंगृह्य. — K3 om. from $4^{c}$ up to पितेव (in $5^{b}$).

5 K3.4 om. up to पितेव (cf. v. l. 3, 4). — $^{c}$) S तपसा. — $^{d}$) Ñ2 V1 B D (except D5) नयेन च.

6 $^{a}$) Ś1 K सोमात्यस्तं. — $^{e}$) S (except M5) कल्याणं. — $^{f}$) K (except K1) Ñ V1 B D G3 भद्रमस्तु.

7 $^{a}$) N1.3 S °श्रमार्तं तु (Ñ1 हि; Ñ3 स; M तं). — $^{b}$) Ñ V1 B D (except D5) M5 चै (for तं). — $^{d}$) Ñ1.3 G1 महीपते.

8 $^{a}$) Ñ V1 B D च; G4 स (for अथ). Ś1 K वारिणा सुखशीते(Ko °ले)न. — $^{b}$) T मुखं (for शिरस्). Ñ1 S तस्यावसेच°; D2 °भिषेच°. Ś1 K नृपतिं काममोहितं (= $4^{d}$). — $^{c}$) Ś1 K अस्पृशच्च (K2.3 °स्स) मुखं; Ñ1 संस्पृशन्मु°; Ñ2 V1 B5 Dn अस्फुटन्मु°; D5 अथास्पृशन्मुखं. S (except G3) मकुटं. — $^{d}$) Ś1 K1 °गंधि सः.

9 $^{a}$) Da1 Dn1 G (except G4.6) M5 °गतः प्राणस्. — D5 om. $9^{c}$–$10^{b}$.

10 D5 om. $10^{ab}$ (cf. v. l. 9). — $^{b}$) Ś1 K1 संप्रतस्थे. A few MSS. महाबलं. — $^{c}$) K3 स च राजा; T1 राजा तस्मिन्. — $^{d}$) T1 G4 धीरः पुनरु°. — After 10, Ko ins.:

1733* चिन्तयानस्तु तपतीं तद्रूपाकृष्टमानसः ।
उन्मत्तक इवासंज्ञस्तदासीद्भरतर्षभः ।

11 D2 om. 11–12. — $^{a}$) S (except M5) स तु (T1 G4 स्नात्वा) तस्मिन्. — $^{c}$) Ñ1 आराधयिषुरादित्यं. — $^{d}$) Ñ2 V1 Dn ऊर्ध्वमुखः. — After 11, Ko.4 D5 ins.:

1734* पूजयानो दिनकरं भक्तियुक्तो महीपतिः ।

12 D2 om. 12 (cf. v. l. 11). — $^{a}$) G1–4 M6–8 चैनं. Here and below K4 B D4.5 (mostly) वशिष्ठ- (for वसिष्ठ-). — $^{c}$) Ñ2 V1 B (except B3) Dn D1 T1 G (except G3.5) °मित्रघ्नं.

13 $^{a}$) Ñ1 B3 D2.4 T G (except G1.2) नक्तंदिवम्. Ś1 K1.2 अथावस्थे; Ñ1.2 V1 B D (except D5) अथैकत्र. — $^{b}$) Ś1 M6–8 नराधिपे; D2.4 G3 जनाधिप. — $^{c}$) Ko.4 आजगामाथ (by transp.). T1 ब्रह्मर्षिः. — $^{d}$) K1.3 T1 स तदा (T1 वसिष्ठो) द्वादशेहनि.

14 $^{b}$) Ś1 K D4.5 हृतचेतसं (Ś1 K1 °नं). — $^{c}$) Ś1 T1 चक्षुषा; Ñ1 मनसा; Cd विधिना (as in text). Ñ1.3 ध्यात्वा. G6 दिव्येन विद्धि राजस्तद्. — $^{d}$) Ś1 महात्मऋषिः.

15 M (except M5) om. $15^{a}$–$16^{b}$. — $^{a}$) K1 निवृंता°; G1.5 नियमा°; G3 नियंता°. — $^{b}$) Ś1 Ñ1.3 नतं; K1 चैतं; T G M5 तं वै (for स तं). Ñ2 V1 B D तं नृपं मुनिसत्तमः. — Ñ1 om. $15^{cd}$. — $^{d}$) G3 M5 तस्मै पार्थं चि°. — After 15, Ś1 K1 ins.:

1735* भद्रं ते राजशार्दूल तपती याचते ह्यहम् ।
विवस्वतस्तदर्थं चेत्युक्त्वागादृषिसत्तमः ।

16 M (except M5) om. $16^{ab}$ (cf. v. l. 15). — $^{b}$) Ko °तो मुनिसत्तमः. — After 16, D5 ins. stanzas 1–3 of 1737*. — S ins. after 16: D5, after stanza

G. 1. 6601 B. 1. 173. 17 K. 1. 169. 19 सहस्रांशुं ततो विप्रः कृताञ्जलिरुपस्थितः ।
वसिष्ठोऽहमिति प्रीत्या स चात्मानं न्यवेदयत् ॥ १७
तमुवाच महातेजा विवस्वान्मुनिसत्तमम् ।
महर्षे स्वागतं तेऽस्तु कथयस्व यथेच्छसि ॥ १८

इति श्रीमहाभारते आदिपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

## १६३

वसिष्ठ उवाच ।
यैषा ते तपती नाम सावित्र्यवरजा सुता ।
तां त्वां संवरणस्यार्थे वरयामि विभावसो ॥ १
स हि राजा बृहत्कीर्तिर्धर्मार्थविदुदारधीः ।
युक्तः संवरणो भर्ता दुहितुस्ते विहंगम ॥ २
गन्धर्व उवाच ।
इत्युक्तः सविता तेन ददानीत्येव निश्चितः ।
प्रत्यभाषत तं विप्रं प्रतिनन्द्य दिवाकरः ॥ ३

---

3 of 1737*:

1736* योजनानां तु नियुतं क्षणाद्गत्वा तपोधनः ।

[ T1 नियुतं योजनानां स (for the prior half). D5 क्षणेनागात्तपोधनः (for the posterior half). ]

18 d) Ñ V1 B6 Da Dn D1.2.5 S यथेप्सितं; B1.3.5 D4 °च्छकं. — D4 (marg. *sec. m.*) S ins. after 18 (D4 T2 G3-6 *before* the colophon, T1 G1.2 M *after* it): D5 ins. stanzas 1-3 after 16, stanza 4 (with सूर्य° उ°) after the last line of 1739*:

1737* गन्धर्वः ।
1) योजनानां चतुःषष्टिं निमेषात्त्रिंशतं तथा ।
अश्वैर्गच्छति नित्यं यस्तत्पार्श्वस्थोऽब्रवीदिदम् ॥
वसिष्ठः ।
2) अजाय लोकत्रयभावनाय
भूतात्मने गोपतये वृषाय ।
सूर्याय सर्गप्रलयालयाय
नमो महाकारुणिकोत्तमाय ॥
3) विवस्वते ज्ञानभृदन्तरात्मने
जगत्प्रदीपाय जगद्धितैषिणे ।
स्वयंभुवे दीप्तसहस्रचक्षुषे
सुरोत्तमायामिततेजसे नमः ॥
सूर्यः ।
4) स्तुतोऽस्मि वरदस्तेऽहं वरं वरय सुव्रत ।
स्तुतिस्त्वयोक्ता भक्तानां जप्येयं वरदोऽस्म्यहम् ॥

[ D4.5 गंधर्व उ°. — D4 वसिष्ठ उ°; D5 om. वसिष्ठः. — (3d) G1.2 सुरोत्तमायाति(G2 °य त्रि)गुणात्मने नमः. — After stanza 3, D4 (marg. *sec. m.*) T G4-6 ins.:

1738* नमः सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चिनारायणशंकरात्मने ॥

— D4 सूर्यं उवाच (for सूर्यः). — (4a) T1 M स्तुतो हि (M5 °तोहं). — (4d) T1 जपतां; G1.2 जप्येहं; G4 जप्याहं. ]

— On the other hand, Ñ1.2 V1 B D ins. after 18 (D4, after 1737*):

1739* यदिच्छसि महाभाग मत्तः प्रवदतां वर ।
तत्ते दद्यामभिप्रेतं यद्यपि स्यात्सुदुर्लभम् ।
एवमुक्तः स तेनर्षिर्वसिष्ठः प्रत्यभाषत ।
प्रणिपत्य विवस्वन्तं भानुमन्तं महातपाः ।

[ (L. 2) B Da सुदुर्ददं; Dn D1 सुदुष्करं. After line 2, D5 reads the colophon. — (L. 4) Da D1 महातपं. — In D5, lines 1, 3 and 4 are repeated (with v. l.) after the last line of 1737*: the whole passage is in fact in utter confusions, being a clumsy composite of variant versions. ]

Colophon om. in K4 Ñ2 V1 B1.3.5 Da Dn D1.4. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* T1 संभव. K0-3 Ñ3 B6 D2 M3.5 (all om. the sub-parvan name) mention only तापत्य (M3.5 तापत्योपाख्यान). — *Adhy. name:* K0 D5 वसिष्ठागमनं. — *Adhy. no.* (figures, words or both): T1 170; T2 G M 122 (G1 124; G3 121). — *Śloka no.:* M3 19.

### 163

1 Before 1, T1 G1.2 M ins. 1737*, D5 only the final st. (4) thereof. — Ś1 K1 S om. उवाच (T2 om. the ref.). — a) G M6-8 एषा (G1 या हि). — c) A few MSS. त्वा (for त्वां).

2 d) G1 भुजंगम; G6 वियद्गम.

3 Ś1 K1 T G M6-8 om. उवाच; K0.2-4 N V1 B Da

वरः संवरणो राज्ञां त्वमृषीणां वरो मुने ।
तपती योषितां श्रेष्ठा किमन्यत्रापवर्जनात् ॥ ४
ततः सर्वानवद्याङ्गीं तपतीं तपनः स्वयम् ।
ददौ संवरणस्यार्थे वसिष्ठाय महात्मने ।
प्रतिजग्राह तां कन्यां महर्षिस्तपतीं तदा ॥ ५
वसिष्ठोऽथ विसृष्टश्च पुनरेवाजगाम ह ।
यत्र विख्यातकीर्तिः स कुरूणामृषभोऽभवत् ॥ ६
स राजा मन्मथाविष्टस्तद्गतेनान्तरात्मना ।
दृष्ट्वा च देवकन्यां तां तपतीं चारुहासिनीम् ।
वसिष्ठेन सहायान्तीं संहृष्टोऽभ्यधिकं बभौ ॥ ७
कृच्छ्रे द्वादशरात्रे तु तस्य राज्ञः समापिते ।
आजगाम विशुद्धात्मा वसिष्ठो भगवानृषिः ॥ ८
तपसाराध्य वरदं देवं गोपतिमीश्वरम् ।
लेभे संवरणो भार्यां वसिष्ठस्यैव तेजसा ॥ ९
ततस्तस्मिन्गिरिश्रेष्ठे देवगन्धर्वसेविते ।
जग्राह विधिवत्पाणिं तपत्याः स नरर्षभः ॥ १०
वसिष्ठेनाभ्यनुज्ञातस्तस्मिन्नेव धराधरे ।
सोऽकामयत राजर्षिर्विहर्तुं सह भार्यया ॥ ११
ततः पुरे च राष्ट्रे च वाहनेषु बलेषु च ।
आदिदेश महीपालस्तमेव सचिवं तदा ॥ १२
नृपतिं त्वभ्यनुज्ञाय वसिष्ठोऽथापचक्रमे ।
सोऽपि राजा गिरौ तस्मिन्विजहारामरोपमः ॥ १३
ततो द्वादश वर्षाणि काननेषु जलेषु च ।
रेमे तस्मिन्गिरौ राजा तथैव सह भार्यया ॥ १४
तस्य राज्ञः पुरे तस्मिन्समा द्वादश सर्वशः ।
न ववर्ष सहस्राक्षो राष्ट्रे चैवास्य सर्वशः ॥ १५

C. 1. 6621
B. 1. 172. 38
K. 1. 183. 44

Dn D1.2.5 M3.5 om. the ref.; D4 reads it in marg. — a) Ñ1.2 V1 B D (except D5) स तदा तेन. — b) K (except K1) Dn3 T1 G2-4 ददामी°.

4 Before 4, B3 ins. सूर्य उ°; M6-8 आदित्यः. — b) S ऋषीणां त्वं (by transp.). K (except K1) महामुने (K2 °मुनिः); M5 परो मुने. — d) Ś1 (gloss?) दानाद् over न्यत्राप; cf. the comm. of Dev. Ñ1 किमत्रावर्जनं तव; B1m Dn D1.5 M6-8 किमन्यदपव°; G2 M5 किमन्यत्रापि व°; Cd as in text.

5 Before 5, D2 ins. गंधर्व उ°; S गंधर्वः. — b) K2 सुतां (for स्वयम्). — d) M5 वसिष्ठस्य. — f) K0 D5 स्वयं (for तदा).

6 a) K0.2 Ñ1.3 निसृष्टः; Cd as in text. K0.3 Ñ1.2 V1 B D तु (for च). K4 वशिष्ठो वरयित्वा तां; D2m वसिष्ठस्तु प्रहर्षस्तु (sic). — e) M5 °कीर्तीनां (om. स).

7 c) B5 T G M5-8 दृष्ट्वा तु (T1 G3 स दृष्ट्वा). — d) B3 तपतीं तपनः स्वयं (= 5a). — f) K1 प्रहृष्टो; G1.2 स हृष्टो. Ś1 K D2.5 °भ्यधिकोभवत्; Ñ1 °त्यधिको बभौ. — After 7, K4 Ñ1.2 V1 B D ins.:

1740* रुरुचे साधिकं सुभ्रूरापतन्ती नभस्तलात् ।
सौदामिनीव विभ्रष्टा द्योतयन्ती स्वतेजसा ।
[ (L. 2) Ñ3 V1 Dn D1.5 दिशस्त्विषा (for स्वते°). ]

8 a) K0.4 Ñ1.2 V1 B1m.3.6 D (except Da1) G1 कृच्छ्राद्; M3 व्रते; M3 (*inf. lin.*) Cd as in text. — b) Ś1 K Ñ3 V1 B1m.3.6 Dn D1 Cd समाहिते; G3 समीपगः.

9 a) M5 ततस्त्वाराध्य. — d) S च (for एव).

10 a) K3.4 गिरौ श्रेष्ठे; Da D4 गिरिप्रस्थे. — c) K0 D5 पाणिं विधिवत् (by transp.). — d) K0.3.4 नृपसत्तमः; D4 G6 स नराधिपः; D5 भरतर्षभः (for स नर°).

11 c) G4 उवासोत्तमराजर्षिर्. — d) K1 भार्यया सह (by transp.).

12 a) K0 पुरे च राष्ट्रेषु; D2 क्रमेषु राष्ट्रेषु; D5 S पुरेषु राष्ट्रेषु. — b) Ñ3 V1 B6 Dn D1.2.4.5 वनेषूपवनेषु च; B1 Da वाहनेषु वनेषु च. — After 12, K3.4 ins.:

1741* अथ दत्त्वा महीपाले तपतीं तां मनोरमाम् ।
तिष्ठ सुश्रोणि यास्यामि त्वमाश्रय पतिं शुभे ।
[ (L. 1) K4 दत्वा च भूपाले. — (L. 2) K4 त्वमाराध्य. ]

13 a) D2 G6 तमनु°; T1 G3 समनु°; T2 G1.4.5 चाभ्यनु° (for त्वभ्यनु°). Ñ2.3 V1 Dn D1 S °ज्ञाप्य (for °ज्ञाय). — b) B1.3 Da D2 G1.3 M6-8 अथ प्रचक्रमे; T1 G2 अगात्स्वमाश्रमं. — c) Ñ3 V1 B5.6 D (except D2.5) सोथ; G6 स हि (for सोऽपि). — d) Ñ3 V1 Dn D1 °मरो यथा.

14 a) Dn °वर्षेषु(!). — b) Ñ3 V1 B (except B3) D (except D5) T1 वने° (for जले°). — d) K4 Ñ3 V1 B5 Da2 Dn D1 तथैव. D4 S सहितो (D5 तपत्या) भार्यया सदा (D5 G1 सह; T1 G2 M3 तया; G3 M5 तदा; G6 यदा).

15 b) Ñ3 V1 Dn D1 सत्तम; T2 G4-6 कृत्स्नशः (for सर्व°). — d) Ñ3 V1 B (B1 marg.) D (except D5) G1.3 M चैवास्य भारत (B1 orig. चैवास्य भूपतेः); T1 G2 तस्य महीपतेः. T2 G4-6 रहितेथ नरेश्वरे (G4 नृपे तदा). — After 15, K4 Ñ3 V1 B D ins.:

## १७३

अर्जुन उवाच ।

राज्ञा कल्माषपादेन गुरौ ब्रह्मविदां वरे ।
कारणं किं पुरस्कृत्य भार्या वै संनियोजिता ॥ १
जानता च परं धर्मं लोक्यं तेन महात्मना ।
अगम्यागमनं कस्माद्वसिष्ठेन महात्मना ।
कृतं तेन पुरा सर्वं वक्तुमर्हसि पृच्छतः ॥ २

गन्धर्व उवाच ।

धनंजय निबोधेदं यन्मां त्वं परिपृच्छसि ।
वसिष्ठं प्रति दुर्धर्षं तथामित्रसहं नृपम् ॥ ३
कथितं ते मया पूर्वं यथा शप्तः स पार्थिवः ।
शक्तिना भरतश्रेष्ठ वासिष्ठेन महात्मना ॥ ४
स तु शापवशं प्राप्तः क्रोधपर्याकुलेक्षणः ।
निर्जगाम पुराद्राजा सहदारः परंतपः ॥ ५
अरण्यं निर्जनं गत्वा सदारः परिचक्रमे ।
नानामृगगणाकीर्णं नानासत्त्वसमाकुलम् ॥ ६
नानागुल्मलताच्छन्नं नानाद्रुमसमावृतम् ।
अरण्यं घोरसंनादं शापग्रस्तः परिभ्रमन् ॥ ७
स कदाचित्क्षुधाविष्टो मृगयन्भक्षमात्मनः ।

C. 1. 6696
B. 1. 182. 9
K. 1. 198. 11

---

°नाशाय; T1 G2 °संत्रासं. — b) Ś1 D4 T2 G2.6 संभूतं. Ñ2 V1 B6 D (except D2.5) तदा (for मुनिः). — d) Ś1 महामुने; K (except K1) °यशाः; G3 °मुनिः.

17 a) T1 G2 स तु तत्रापि र°. — b) K1 Ñ V1 Dn D4 T2 G M3.5 अश्मन (G2 °क); Da D2 अश्मानम्.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 V1 चैत्ररथ, followed by और्वोपाख्यान; T1 संभव. Ś1 K Ñ3 B D T2 G1.4 M3.5 (all om. the sub-parvan name) mention only और्व (D5 वासिष्ठ; T2 G4 M3.5 वासिष्ठोपाख्यान; G1 और्वोपाख्यान); Ñ3 B6 Dn D1.2.4 add समाप्त. — *Adhy. name:* K0 शाक्ते राक्षससत्रसमाप्तिः; K2 सत्रसमाप्तिः; K3 T2 G4.6 राक्षससत्रं; K4 शाक्ते राक्षससत्रं; D5 राक्षससंभ्रमं; M3.5 राक्षससत्रनिवर्तनं (M5 °प्रकथनं). — *Adhy. no.* (figures, words or both): Dn3 T1 180; D4 m 183; T2 G2-5 131; G1 133; G6 M 132. — *S'loka no.:* Dn 23; M3 19. — *Aggregate s'loka no.:* Dn2 6857.

### 173

1 Before अर्जुनः, T1 G2-4 ins.:

1795* गन्धर्वः ।

पुनश्चैव महातेजा विश्वामित्रजिघांसया ।
अग्निं संभृतवान्घोरं शाक्तेयः सुमहातपाः ।
वासिष्ठसंभृतश्चाग्निर्विश्वामित्रहितैषिणा ।
तेजसा वह्नितुल्येन ग्रस्तः स्कन्देन धीमता ।

— Ś1 K1 S om. उवाच. — b) D5 वेदविदां. — d) Ñ1.3 भार्या या. G3 संप्रयो°. T1 G2.3 भार्या सम्यङ्नियोजिता.

2 a) K (except K1) Ñ1 परमं; Ñ2.3 V1 B (except B3) Dn D1 वै परं; D3 अपि परं. Da लौक्यं (for धर्मं). — b) K (except K1) D5 लौकिकं च; Ñ2.3 V1 B Da Dn D1.2.4 वसिष्ठेन; S (except G4.5) Cd लौक्यं तेन. S (except T1 G2.3) महर्षिणा. — d) Some MSS. वशिष्ठेन. Ñ1 वसिष्ठेन महर्षिणा; Ñ2.3 V1 B D कृतं (Ñ3 पुरा) तेन महर्षिणा. — After 2cd, N T1 G1-3 ins.:

1796* अधर्मिष्ठं वसिष्ठेन कृतं चापि पुरा सखे ।

[ Ś1 K Ñ3 B1.6 D3 T1 G2 वरिष्ठेन. T1 G3 कृतिनापि. ]

T1 G2.3 cont.:

1797* तत्र मे संशयो जातः कार्याकार्यविनिश्चये ।

— e) N एतन्मे (K0.1.3 एतं मे) संशयं सर्वं; T1 G2.3 संशयप्रतिषेधं वै. — f) Ñ2 V1 B D (except D5) छेत्तुमर्हसि. K0.2.3 पृच्छते. T1 G2.3 तन्मे (G3 तं मे) त्वं वक्तुमर्हसि.

3 Ś1 K1 S om. उवाच. — b) G1 यस्मात्त्वम्. S (except T1 G2.3 M5) अनुपृच्छसि. — c) K (except K1) Ñ2.3 V1 D (except D2.4) M (except M5) दुर्धर्षं. — d) S (except T1 G2.3) प्रति (for नृपम्).

4 a) Ś1 Ñ1.2 V1 B (except B1) D (except D5) सर्वं (for पूर्वं). — b) Ś1 K1 श्रोतुमर्हसि पृच्छतः (cf. 2d). — Ś1 K1 om. 4cd. — c) K (K1 om.) B2.3 Da D1 शक्त्रिणा. — d) A few MSS. वाशिष्ठेन.

5 a) Ś1 पापवशं. — b) Ñ1.3 B1.3 D2 °पर्याकुलः श्वसन्. — d) Ś1 K1 दारैः. Ś1 K1.2 Da2 D1 G3 °तप.

6 G1 om. 6cd. — c) G3.6 M5 °समाकीर्णं. — M6-8 om. 6d-7a.

7 M6-8 om. 7a (cf. v. l. 6). — b) Ñ3 T1 G2

C. 1. 6606
B. 1. 182. 9
K. 1. 193. 11

ददर्श सुपरिक्लिष्टः कस्मिंश्चिद्वननिर्झरे ।
ब्राह्मणीं ब्राह्मणं चैव मैथुनायोपसंगतौ ॥ ८
तौ समीक्ष्य तु वित्रस्तावकृतार्थौ प्रधावितौ ।
तयोश्च द्रवतोर्विप्रं जगृहे नृपतिर्बलात् ॥ ९
दृष्ट्वा गृहीतं भर्तारमथ ब्राह्मण्यभाषत ।
शृणु राजन्वचो मह्यं यत्त्वां वक्ष्यामि सुव्रत ॥ १०
आदित्यवंशप्रभवस्त्वं हि लोकपरिश्रुतः ।
अप्रमत्तः स्थितो धर्मे गुरुशुश्रूषणे रतः ॥ ११
शापं प्राप्तोऽसि दुर्धर्ष न पापं कर्तुमर्हसि ।
ऋतुकाले तु संप्राप्ते भर्त्रास्म्यद्य समागता ॥ १२
अकृतार्था ह्यहं भर्त्रा प्रसवार्थश्च मे महान् ।
प्रसीद नृपतिश्रेष्ठ भर्ता मेऽयं विसृज्यताम् ॥ १३
एवं विक्रोशमानायास्तस्याः स सुनृशंसकृत् ।
भर्तारं भक्षयामास व्याघ्रो मृगमिवेप्सितम् ॥ १४
तस्याः क्रोधाभिभूताया यदश्रु न्यपतद्भुवि ।
सोऽग्निः समभवद्दीप्तस्तं च देशं व्यदीपयत् ॥ १५
ततः सा शोकसंतप्ता भर्तृव्यसनदुःखिता ।
कल्माषपादं राजर्षिमशपद्ब्राह्मणी रुषा ॥ १६
यस्मान्ममाकृतार्थायास्त्वया क्षुद्र नृशंसवत् ।
प्रेक्षन्त्या भक्षितो मेऽद्य प्रभुर्भर्ता महायशाः ॥ १७
तस्मात्त्वमपि दुर्बुद्धे मच्छापपरिविक्षतः ।
पत्नीमृतावनुप्राप्य सद्यस्त्यक्ष्यसि जीवितम् ॥ १८

---

°क्षतायुतं (Ñ$_{3}$ °वृतं); M$_{8}$ °समाकुलं. — $^{e}$) T$_{2}$ G$_{4-6}$ घोरसंकाशं; Cd as in text.

8 $^{a}$) D$_{5}$ कदाचित्स (by transp.). G$_{6}$ समाविष्टो. — $^{b}$) K$_{0}$ Ñ V$_{1}$ B D T$_{2}$ G$_{3}$ भक्ष्यम्. — $^{c}$) Ś$_{1}$ K (except K$_{1}$) ददृशे. — $^{d}$) K$_{0.3.4}$ Ñ$_{1}$ D$_{5}$ गिरिगह्वरे; Ñ$_{3}$ V$_{1}$ Dn D$_{1}$ निर्जने वने; T$_{2}$ G$_{4-6}$ सुमनोहरे (for वन°). — $^{e}$) Ñ V$_{1}$ B$_{6}$ D (except D$_{3.4}$) ब्राह्मणं ब्राह्मणीं (by transp.). — $^{f}$) Ś$_{1}$ Ñ V$_{1}$ B Dn D$_{2.3.5}$ M$_{8}$ मिथुनाय.

9 $^{a}$) K$_{0.3.4}$ तं (for तौ). Ñ V$_{1}$ B D तौ तं वीक्ष्य सु(Ñ$_{1.3}$ D$_{5}$ समीक्ष्य)वित्रस्तौ; S तौ (G$_{1}$ M$_{6-8}$ तं) समीक्ष्य च वित्रस्तौ. — $^{b}$) D$_{4}$ (by corr.) अकृतार्थावधावतां. — $^{c}$) Ñ$_{1.3}$ V$_{1}$ B Da Dn D$_{1}$ प्र-; D$_{4}$ T$_{2}$ G$_{4-6}$ वि-; D$_{2}$ तु (for च). — $^{d}$) Ñ$_{1.2}$ V$_{1}$ B D (except D$_{5}$) M$_{8}$ जग्राह.

10 $^{ab}$) K (except K$_{1}$) D$_{5}$ गृहीतं प्रेक्ष्य भर्तारं ब्राह्मणी (D$_{5}$ °णं) तमभाषत. — $^{c}$) Ñ$_{1.3}$ V$_{1}$ B D (except D$_{5}$) राजन्मम वचो. — $^{d}$) Some S MSS. त्वा (for त्वां).

11 $^{a}$) Ś$_{1}$ °वंशसंभूतः. — $^{b}$) Ś$_{1}$ K D$_{5}$ सर्व- (for त्वं हि). Ñ V$_{1}$ B D T$_{1}$ G$_{2.6}$ M$_{8}$ लोके परि° (B$_{5}$ °पु वि°; D$_{5}$ -पि वि°; G$_{6}$ च वि°). — $^{c}$) K$_{0}$ स्थिरो धर्मे. — After 11, D$_{4}$ marg. *sec. m.* ins.:

1798* वैष्णवोऽसि महीपाल रविवंशविवर्धन ।
येन त्वया पुरा विष्णुस्तोषितः शुभकर्मणा ।
आत्मनं तृणवत्कृत्वा जीवितं हरयेऽर्पितम् ।
तदासि रक्षितस्त्वं वै विष्णुना प्रभविष्णुना ।

12 $^{a}$) Ñ$_{1.3}$ शापप्राप्तोपि; Ñ$_{2}$ V$_{1}$ B D (except D$_{5}$) शापोपहत. — $^{d}$) K$_{3}$ भर्त्रा ह्यद्य समा°; Ñ$_{2}$ V$_{1}$ B$_{3}$ Dn D$_{3}$ भर्तृव्यसनकर्शिता; D$_{2}$ भर्ता मेद्य समागतः; S भर्त्राहं (T$_{1}$ G$_{2.3}$ M$_{7}$ भर्तारं) समुपा°.

13 $^{a}$) D$_{1}$ स्वयं (for ह्यहं). Ñ$_{3}$ S अकृतार्थिन्यहं भद्र (T$_{1}$ G$_{2.3}$ अकृतार्थास्मि भद्रं ते). — $^{b}$) Ñ$_{1.2}$ V$_{1}$ B$_{1}$(m as in text).$_{3.5}$ D (except Da) प्रसवार्थं समा(B$_{1}$ इहा)गता. — $^{c}$) Ñ$_{3}$ नृपशार्दूल. — $^{d}$) K (except K$_{1}$) Ñ$_{3}$ V$_{1}$ B D अयं मे; Ñ$_{1}$ S मम (for मेऽयं). Ś$_{1}$ K D$_{5}$ विमुच्यतां; Ñ$_{3}$ विसर्जतां.

14 $^{a}$) K$_{0.3.4}$ D$_{5}$ लालप्यमानायाः; G$_{1}$ विशोक°. — $^{b}$) K$_{0}$ तु सु-; K$_{2.3}$ Ñ$_{2.3}$ V$_{1}$ B$_{1.6}$ Dn D$_{1.5}$ तु स; D$_{2}$ स हि (for स सु-). Ñ V$_{1}$ B$_{3.5}$ Dn D$_{1.5}$ G$_{3.5}$ -नृशंसवत्. — $^{d}$) Ś$_{1}$ K Ñ$_{1.3}$ D$_{5}$ पशुं (for मृगं). T$_{1}$ G$_{2}$ व्याघ्रो मृगशिशुं यथा.

15 G$_{5}$ (? hapl.) om. 15$^{b}$–17$^{a}$. — $^{b}$) K$_{0}$ Ñ$_{3}$ यदा; K$_{3.4}$ Ñ$_{1.2}$ V$_{1}$ B Da Dn D$_{1.4.5}$ यानि; S (G$_{5}$ om.) तदा (for यद्). K$_{2.4}$ Ñ V$_{1}$ B Da Dn D$_{4.5}$ T$_{2}$ G$_{1.3.4.6}$ M$_{8}$ (by corr.) अश्रूण्यपतन्भुवि. D$_{2}$ अश्रूण्यभ्यपतन्भुवि. — $^{c}$) Ś$_{1}$ दीप्तः समभवत् (by transp.). — $^{d}$) K$_{1.2.4}$ व्यदीपयन्.

16 G$_{5}$ om. 16 (cf. v. l. 15). — $^{a}$) K$_{4}$ शोकसंवीता; Ñ$_{1}$ °संप्राप्ता. — $^{b}$) Ñ V$_{1}$ B$_{6}$ Da D$_{2.4}$ °कर्शिता; B$_{1.3.5}$ Dn D$_{1}$ °कर्पिता (for °दुःखिता). — $^{c}$) T$_{1}$ G$_{2.3}$ राजानं (for राजर्षिं).

17 G$_{5}$ om. 17$^{a}$ (cf. v. l. 15). Before 17, B$_{1}$ ins. ब्राह्मण्युवाच. — $^{a}$) G$_{1}$ यस्मान्मय्यकृतार्थायां. — $^{c}$) K$_{3}$ T$_{2}$ G$_{3.8}$ पश्यंत्या. Ñ$_{1}$ भक्षितो ह्येष; B$_{1}$m भक्षितश्चाद्य. — $^{d}$) Ñ$_{1}$ M$_{5}$ भर्ता मम; Ñ$_{2}$ V$_{1}$ B$_{1}$ D (except D$_{2.4.5}$) प्रियो भर्ता.

18 $^{b}$) K (except K$_{1}$) G$_{4}$ M$_{7}$ °विक्षितः; Ñ$_{1}$ D$_{5}$ °वीक्षितः; D$_{3}$ T$_{1}$ G$_{2}$ °दूषितः; T$_{2}$ G$_{5}$ °कर्शितः; G$_{6}$

यस्य चर्पेर्वसिष्ठस्य त्वया पुत्रा विनाशिताः ।
तेन संगम्य ते भार्या तनयं जनयिष्यति ।
स ते वंशकरः पुत्रो भविष्यति नृपाधम ॥ १९
एवं शस्त्वा तु राजानं सा तमाङ्गिरसी शुभा ।
तस्यैव संनिधौ दीप्तं प्रविवेश हुताशनम् ॥ २०
वसिष्ठश्च महाभागः सर्वमेतदपश्यत ।
ज्ञानयोगेन महता तपसा च परंतप ॥ २१
मुक्तशापश्च राजर्षिः कालेन महता ततः ।
ऋतुकालेऽभिपतितो मदयन्त्या निवारितः ॥ २२
न हि सस्मार नृपतिस्तं शापं शापमोहितः ।
देव्याः सोऽथ वचः श्रुत्वा स तस्या नृपसत्तमः ।
तं च शापमनुस्मृत्य पर्यतप्यद्भृशं तदा ॥ २३
एतस्मात्कारणाद्राजा वसिष्ठं संन्ययोजयत् ।
स्वदारे भरतश्रेष्ठ शापदोषसमन्वितः ॥ २४

C. 1.6912
B. 1. 182. 26
K. 1. 183. 28

इति श्रीमहाभारते आदिपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥ समाप्तं चैत्ररथपर्व ॥

°पीडितः. — $^c$) Ñ1 °स्थाप्य (for °प्राप्य). — $^d$) K1 परि- (for सद्यस्). — After 18, D4 (marg. *sec. m.*) T2 G1 (marg.).5 ins.:

1799* तेन प्रसाद्यमाना सा प्रसादमकरोत्तदा ।

19 $^a$) K (except K1) D5 वसिष्ठस्य ऋपेर्यस्य; T1 G2 ऋपेर्यस्माद् (G2 °र्यस्य) वसिष्ठस्य. — $^b$) K3 G3 त्वया पुत्रो विनाशितः. — $^e$) T1 G6 संगत्य. — $^f$) Ś1 K1 Ñ1 नराधिप; B1.5 m D2 नृपोत्तम; G1.3.4 M5 नराधम.

20 $^a$) T1 शस्त्वा महीपालं. — $^b$) S (except M5) तदांगिरसी. — $^d$) Ñ1 पावकं प्रविवेश ह.

21 $^a$) Ko.3 Da T2 G3.6 M °भाग. — $^b$) Ñ2 V1 B D (except D5) अवैक्षत. — $^c$) Ś1 K1 मनसा (for महता). — $^d$) K3.4 Da1 T G4.5 °तपः. — After 21, Ko.3 ins.:

1800* न चाप्यत्र महाबाहो अधर्मः प्रतिपद्यते ।
ब्राह्मणो यदपत्यं हि प्रार्थितः संप्रयच्छति ।
यदा तु कामतो गच्छेत्परनारीं नरो नृप ।
तदास्य परदारोक्तमधर्मस्य फलं भवेत् ।
अपकल्कस्तु राजेन्द्र निस्त्रीयैतद्विजोत्तमः ।
नान्यतो भरतश्रेष्ठ स हि लोकगुरुर्यतः ।

22 $^a$) K3 G1 तु (for च). — $^b$) Ñ1 शापेन महता. K (except K1) D5 तदा. — $^c$) S निपतितो. — $^d$) S भार्यया स नि° (T G6 संनि°; G3 परि°).

23 $^a$) Ñ2 V1 B D (except D5) स नृपः; Ñ3 शापं तं (for नृपतिः). — $^b$) T1 शापं तं (by transp.). Ñ3 नृपः कामेन मोहितः. — $^c$) Ś1 K1 तद्धि वचः; Ko.3-4 तद्वचनं (for सोऽथ वचः). — $^d$) Ñ V1 B D संभ्रांतो (for स तस्या). Ś1 Ko.1 °सत्तम. S विसंज्ञः समपद्यत. — K3 om. 23$^e$–24$^d$. — $^e$) Ñ V1 B D तं शापमनुसंस्मृत्य. — $^f$) Ś1 ततः (for तदा).

24 K3 om. 24 (cf. v. l. 23). — $^b$) Ko.3.4 G3.5.6 M5 संनियोज°; D2 स स्वयोज°; D5 समयोज°. — $^c$) D4 स्वपत्न्यां. Ñ3 V1 B (except B5) Da Dn D1.2 स्वदारेषु नर(B5 नृप)श्रेष्ठ. — $^d$) G1 पाप°. — After 24, D4 (marg. *sec. m.*) T2 G3.5.6 (om. line 5) ins.:

1801* यदा कल्मापपादस्तु राक्षसत्वमवाप सः ।
तदा वसिष्ठः कुरुणा यज्ञार्थे संवृतोऽभवत् ।
यदा कल्मापपादस्तु राक्षसत्वं विसृष्टवान् ।
तदा तेनैव राज्ञा तु वसिष्ठः संवृतोऽभवत् ।
एवं वसिष्ठो युष्माकं पुरोधाः संवृतोऽभवत् ।

Colophon om. in T1. — *Major parvan*: T2 G1.3.4-6 M संभव° (for आदि°). — *Sub-parvan*: Ñ1.3 V1 चैत्ररथ, followed by वासिष्ठोपाख्यान. Ś1 K1-3 B3.6 Da Dn D1.2 T2 G1.4 M3.6-8 (all om. the sub-parvan name) mention only वासिष्ठ (Ś1 K1-4 D3 औौर्व; T2 G1.4 M3.6-8 वासिष्ठोपाख्यान); Ś1 K1.3.4 Dn D1.2 M3.6-8 add समाप्त. — *Adhy. name*: Ko.3.4 D5 मित्रसहशाप- वर्णनं (D5 °सहशापः); T2 G1.4.6 वसिष्ठापचारकथनं (G6 °चारं). — *Adhy. no.* (figures, words or both): Dn3 181; D4m 184; T2 G2-5 132; G1 134; G6 M 133. — *S'loka no.*: Dn M5 26. — *Aggregate s'loka no.*: Dn3 6882.

## 174

1 Ś1 K1 S om. उवाच. — $^{ab}$) S °मनुरूपं वै त्वं हि गंधर्वसत्तम. — $^c$) Ko.3 D5 °हितं त(K3 स-; D5 स्व)माचक्ष्व; S °हितं समाचक्ष्व.

2 Ś1 K1 S om. उवाच (G5 om. the ref.). — $^a$) G3 M6-8 एव (for एप). M3.5 कनीयान्वै देवलस्य. — $^b$) T2

## १७४

C. 1. 6913 B. 1. 180. 1 K. 1. 190. 1

अर्जुन उवाच ।
अस्माकमनुरूपो वै यः स्याद्गन्धर्व वेदवित् ।
पुरोहितस्तमाचक्ष्व सर्वं हि विदितं तव ॥ १
गन्धर्व उवाच ।
यवीयान्देवलस्यैष वने भ्राता तपस्यति ।
धौम्य उत्कोचके तीर्थे तं वृणुध्वं यदीच्छथ ॥ २
वैशंपायन उवाच ।
ततोऽर्जुनोऽस्त्रमाग्नेयं प्रददौ तद्यथाविधि ।
गन्धर्वाय तदा प्रीतो वचनं चेदमब्रवीत् ॥ ३
त्वय्येव तावत्तिष्ठन्तु हया गन्धर्वसत्तम ।
कर्मकाले ग्रहीष्यामि स्वस्ति तेऽस्त्विति चाब्रवीत् ॥४
तेऽन्योन्यमभिसंपूज्य गन्धर्वः पाण्डवाश्च ह ।
रम्याद्भागीरथीकच्छाद्यथाकामं प्रतस्थिरे ॥ ५
तत उत्कोचकं तीर्थं गत्वा धौम्याश्रमं तु ते ।
तं वव्रुः पाण्डवा धौम्यं पौरोहित्याय भारत ॥ ६
तान्धौम्यः प्रतिजग्राह सर्ववेदविदां वरः ।
पाद्येन फलमूलेन पौरोहित्येन चैव ह ॥ ७
ते तदाशंसिरे लब्धां श्रियं राज्यं च पाण्डवाः ।
तं ब्राह्मणं पुरस्कृत्य पाञ्चाल्याश्च स्वयंवरम् ॥ ८
मातृषष्ठास्तु ते तेन गुरुणा संगतास्तदा ।
नाथवन्तमिवात्मानं मेनिरे भरतर्षभाः ॥ ९
स हि वेदार्थतत्त्वज्ञस्तेषां गुरुरुदारधीः ।

---

G2.4.5 हि तप्यति; G3 तपस्विनः. — c) S (except G3) उत्कचके. K1 [ऽ]त्वयं (for तीर्थे). — d) Ś1 K (except K3) Ñ3 D4.5 वृणीध्वं; B5 G1.3 वृणुष्व; D2 वृणीथ; T G2.4-6 M वृणीष्व. Ś1 यथेच्छथ; K3 यदीप्सथ; K4 D1 यदिच्छथ; Ñ3 B5 S यदी(T2 G2.4 M5 °दि)च्छसि.

3 Ś1 K1-3 D2 S om. उवाच; K4 om. the ref. — a) G1 अथोर्जुनस्तम्. M तमादाय. — b) Ś1 च यथा°; T1 G3 भरतर्षभ. — c) B5 ततः; G6 ददौ (for तदा).

4 Before 4, T2 G (except G3) ins. अर्जुनः. — a) K2 D4 M6 तात तिष्ठंतु. — c) K0.2.4 Ñ2.3 V1 B D कार्यकाले; T1 G3 युद्धकाले; G2 काम्यकाले. Ñ2 V1 Dn D1.4 ग्रहीष्यामः.

5 Before 5, S (except T2 M3.5) ins. वैशं°. — a) Ñ1 अभिसंप्रेक्ष्य; G1 °गम्य; M5 इति संपूज्य. G3 तावन्योन्यौ च सं°. — b) Ñ1 B5 D3.5 G1.2.5 M5 पांडवश्च. T2 ते; M6-8 हि (for ह). — c) G2.4 ततो (for रम्याद्). K4 Ñ2.3 V1 B D T2 G2.4 भागीरथीतीराद् (D5 °कक्षाद्); Ñ1 °कूलाद्.

6 a) T1 G3 उत्कलितं; T2 G1.4-6 M उत्क°; G3 उत्कोचनं (cf. v. l. 2). — b) K0.3 B3 D5 प्रति; T1 G3 च ते (for तु ते). G6 °श्रमांतिके. — c) K1 अब्रुवन्; K3 बभूवुः (for तं वव्रुः).

7 a) S तांश्चापि. — b) Ś1 सर्वे; B1 D2 सर्वान् (for सर्व-). Ś1 K D5 धर्मभृतां (K1 °विदां) वरः. — c) K4 Ñ3 V1 B D (except D2.3) वन्येन (for पाद्ये°). — d) Ś1 K4 T2 G चैव हि.

8 a) Ñ1.3 B (B5 marg.) Dn D2 S (except T1; G3 corrupt) तेन चाशंसिरे (B5 orig. ते चाथाशं°); Ñ2 V1 Dn D1 ते समाशं°; D4.5 ते चाशशं°. Ś1 K0 लब्धुं; D1 G3 लब्ध्वा; G1 लक्ष्यं. — b) G1 लब्धं (for श्रियं). — D5 reads $8^{c}$–$9^{d}$ after 12. — c) Ñ V1 B D ब्राह्मणं तं (D4 ते). — d) Ñ V1 B D (except D4) पांचालीं च (Ñ3 वै); T1 याज्ञसेन्याः, Ñ V1 B D T1 G1.3 °वरे.

9 D5 reads 9 after 12 (cf. v. l. 8). — a) K1 G1 तु तेनैव; B1 महेष्वासाः; T2 G2.4.5 ततस्तेन. K2 सह मात्रा ततस्ते वै; Ñ2 V1 B (B1 marg.) D पुरोहितेन तेनाथ. Cd cites मातृषष्ठाः (as in text). — b) M गताः (for तदा). Ś1 संगता गुरुणा तदा (by transp.); T1 G3 सहिता (G3 संगता) गुरुणा ततः; T2 G1.2.4-6 गुरुणा सह संगताः. — c) Ś1 K अथ; T1 G3 तदा (for इव).

10 After $10^{ab}$, S (for T1 G3 see below) ins.:

1802* वेदविच्चैव वाग्मी च धौम्यः श्रीमान्द्विजोत्तमः ।
तेजसा चैव बुद्ध्या च रूपेण यशसा श्रिया ।
मन्त्रैश्च विविधैर्धौम्यस्तुल्य आसीद्बृहस्पतेः ।
स चापि विप्रस्तान्मेने स्वभावाभ्यधिकान्भुवि ।

[(L. 1) T1 G3 धर्मविच्चैव. — T1 G3 read line 4 after $11^{ab}$.]

— c) G2 ते तु (for तेन). K0 सर्वविदा; T1 G3 धर्मविदः. — d) K0 Ñ1.3 D2 सर्वविदः; Ñ2 V1 Dn3 धर्मविदः; Dn1.n2 D1 धर्मविदा. T1 ततः; T2 G1.2.4.5 M वृताः; G6

तेन धर्मविदा पार्थो याज्याः सर्वविदा कृताः ॥१०
वीरांस्तु स हि तान्मेने प्राप्तराज्यान्स्वधर्मतः ।
बुद्धिवीर्यबलोत्साहैर्युक्तान्देवानिवापरान् ॥ ११
कृतस्वस्त्ययनास्तेन ततस्ते मनुजाधिपाः ।
मेनिरे सहिता गन्तुं पाञ्चाल्यास्तं स्वयंवरम् ॥ १२

इति श्रीमहाभारते आदिपर्वणि चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

## १७५

वैशंपायन उवाच ।
ततस्ते नरशार्दूला भ्रातरः पञ्च पाण्डवाः ।
प्रययुर्द्रौपदीं द्रष्टुं तं च देवमहोत्सवम् ॥ १
ते प्रयाता नरव्याघ्रा मात्रा सह परंतपाः ।
ब्राह्मणान्ददृशुर्मार्गे गच्छतः सगणान्बहून् ॥ २
तानूचुर्ब्राह्मणा राजन्पाण्डवान्ब्रह्मचारिणः ।
क्व भवन्तो गमिष्यन्ति कुतो वागच्छतेति ह ॥ ३
युधिष्ठिर उवाच ।
आगतानेकचक्रायाः सोदर्यान्देवदर्शिनः ।
भवन्तो हि विजानन्तु सहितान्मातृचारिणः ॥ ४

C. 1. 6923
B. 1. 184. 4
K. 1. 193. 4

---

पुरा (for कृताः). G3 सर्वविद्याविशारदाः.

11 a) S मेनिरे सहिता वीराः (T1 G3 सहिता मेनिरे राज्यं). — b) T2 G1.2.4-6 M प्राप्तं राज्यं (for प्राप्तराज्यान्). T1 G3 प्राप्तमिवेव भारत. — After 11ab, T1 G3 read line 4 of 1802*. — c) G1 तेजोवीर्य°. — d) K4 देवानिवांबरान्; Ñ1 °निवामरान्; Ñ2 V1 B D (except D5) °निव द्विजः; S (except T1 G3) देवा इवापरे.

12 b) Ś1 K (except K2) मनुजाधिप (K4 °पं). — d) B5 Dn3 ते; G4 M6-8 तु (for तं). D1 पांचाल्यस्य स्वयं°; D5 पांचालनगरेप्सितं; Cd as in text. — After 12, D5 reads 8c-9d.

Colophon om. in K1. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K2-4 B5.6 Dn1.n2 M6-8 द्रौपदीस्वयंवर; Ñ1.2 V1 B5 D5 चैत्ररथ; D1 स्वयंवर; T1 संभव. — *Adhy. name:* K0.4 D2 धौम्यपौरोहित्यं; Ñ1.2 V1 D5 धौम्यपुरोहितकरणं; T2 G4.6 धौम्यवरणं (T2 °र्णनं); M पुरोहितवरणं. — *Adhy. no.* (figures, words or both): Dn3 182; D4m 185; T1 181; T2 G2-5 133; G1 135; G6 M 134. — *S'loka no.:* Dn 12; M8 14. — *Aggregate s'loka no.:* Dn3 6894.

### 175

☞ S (except G6) reads this adhy. (for the first time) after adhy. 156 and *repeats* it here (with v. l.); T1, however, reads here stanza 1 only of this adhy. (inserted as the first st. of adhy. 176), omitting the rest (cf. App. I, No. 96).

1 Ś1 K (except K0) S om. उवाच. — a) Ś1 K Da D5 Cd कुरुशार्दूला (K1 °ल). — After 1ab, T1 M2.3 ins.:

1803* ब्रह्मरूपधराः पार्था जटिला ब्रह्मचारिणः ।

— c) Ś1 लब्धुं (for द्रष्टुं). — d) Ñ2 V1 B Dn D1.4.5 T G3.4-6 देवं महो°; D2 दिव्यं महो°; Cd as in text (cf. 11, 20).

2 b) K0.4 Ñ1.2 V1 B5.6 Dn D1.4 सह मात्रा (by transp.); B1m Da मातृपद्याः (Da1m सह मात्रा). Ś1 K1 परंतप; Da महाबलाः (Da1m as in text). — c) T1 ब्राह्मणान्गच्छतोपश्यन्. — d) T1 पांचालान् (for गच्छतः). K1 गणशो; Ñ V1 B D G3 संगतान्; T2 G1.2.4-6 M सहितान् (for सगणान्).

3 a) K1m Ñ2.3 V1 B Dn D1.4 त (or ते) ऊचुर; G3 तान्वेवुर्. T1 अथ ते ब्राह्मणा ऊचुः. — b) K4 Dn3 M5 पांडवा. Ñ3 B3 D4 T1 G1 धर्मचारिणः. — d) K0 च; K3 हि (for ह). K1m Ñ3 V1 B D कुतो वाभ्या(B5 °या)गता इह (B1 इति; D5 °गतेति च).

4 Ś1 पांडवा ऊचुः(!); K1 पांडवाः; K2.3 S युधिष्ठिरः. — G3-4 om. 4 and the ref. before 5. — a) T1 प्रयातानेकच°. — b) Ś1 K1 देवरूपिणः; K3 °दर्शनाः; Ñ2 V1 B D (except D5) एकचारिणः; G1 °वर्णिनः; G3 °शीलिनः. — c) Ś1 K2.4 Ñ1.3 G3 M2.6-8 [ऽ]भि-; K1 T2 G6 M5 [ऽ]पि; Ñ2 V1 B Da Dn D1.2.4 वै (for हि). K0 D5 T1 ह्य(T1 नो)भिजानंतु. — d) T2 G1.5.6 M संगतान् (for सहितान्). Ñ3 मातृसारिणः; G5 मित्रचारिणः. K1 Ñ1.2 V1 B D (except D5) सह मात्रा द्विजर्षभाः (K1 प्रचारिणः); K3 जनन्या सहितान्द्विजान्.

C. 1. 6929
B. 1. 184. 5
K. 1. 185. 4

ब्राह्मणा ऊचुः ।
गच्छतायैव पाञ्चालान्द्रुपदस्य निवेशनम् ।
स्वयंवरो महांस्तत्र भविता सुमहाधनः ॥ ५
एकसार्थं प्रयाताः स्मो वयमप्यत्र गामिनः ।
तत्र ह्यद्भुतसंकाशो भविता सुमहोत्सवः ॥ ६
यज्ञसेनस्य दुहिता द्रुपदस्य महात्मनः ।
वेदीमध्यात्समुत्पन्ना पद्मपत्रनिभेक्षणा ॥ ७
दर्शनीयानवद्याङ्गी सुकुमारी मनस्विनी ।
धृष्टद्युम्नस्य भगिनी द्रोणशत्रोः प्रतापिनः ॥ ८
यो जातः कवची खड्गी सशरः सशरासनः ।
सुसमिद्धे महाबाहुः पावके पावकप्रभः ॥ ९
स्वसा तस्यानवद्याङ्गी द्रौपदी तनुमध्यमा ।
नीलोत्पलसमो गन्धो यस्याः क्रोशात्प्रवायति ॥ १०
तां यज्ञसेनस्य सुतां स्वयंवरकृतक्षणाम् ।
गच्छामहे वयं द्रष्टुं तं च देवमहोत्सवम् ॥ ११
राजानो राजपुत्राश्च यज्वानो भूरिदक्षिणाः ।
स्वाध्यायवन्तः शुचयो महात्मानो यतव्रताः ॥ १२
तरुणा दर्शनीयाश्च नानादेशसमागताः ।
महारथाः कृतास्त्राश्च समुपैष्यन्ति भूमिपाः ॥ १३
ते तत्र विविधान्दायान्विजयार्थं नरेश्वराः ।
प्रदास्यन्ति धनं गाश्च भक्ष्यं भोज्यं च सर्वशः ॥ १४
प्रतिगृह्य च तत्सर्वं दृष्ट्वा चैव स्वयंवरम् ।
अनुभूयोत्सवं चैव गमिष्यामो यथेप्सितम् ॥ १५
नटा वैतालिकाश्चैव नर्तकाः सूतमागधाः ।

---

5 Ś1 K1 S om. ऊचुः (T G3–6 om. the ref.). — a) T2 G3.6 गच्छामोद्यैव; M7.8 गच्छथाद्यैव. Ś1 Ñ3 B Dn1.n3 D5 G1 पंचालान्. — b) K3 Ñ V1 Dn D1 निवेशने. — cd) Ś1 स (for सु-). T2 G M6 सुमहोत्सवः. — M6.6–8 (hapl.) om. from सुमहा° up to भविता (in 6d). T1 इच्छामो भवतो ज्ञातुं महत्कौतूहलं हि नः.

6 M6.6–8 om. up to भविता (cf. v. l. 5). Before 6, T G ins. ब्राह्मणाः. — a) Ś1 K0–3 Ñ V1 B D G1 एकसार्थं; K4 °सार्थः; T1 एहि सार्धं; T2 G3–4 एकसार्थाः. Ñ1.2 V1 B D (except D5) T G स्म (for स्मो). — b) Ñ3 V1 B D तत्रैव (for अप्यत्र). — c) D5 T1 अपि (for हि). — d) D6 सुमहात्मनः. T1 उत्सवो भविता महान्.

7 D6 D7 (? hapl.) om. 7ab. — cd) T2 G M वेदि°. K1 पद्मपत्रायतेक्षणा. T1 यासावयोनिजा कन्या स्थास्यते सा स्वयंवरे.

8 b) K1 Ñ1.3 B3 D6 T G1–2.5.6 M यशस्विनी. G4 द्रौपदी तनुमध्यमा. — After 8ab, G4 reads 10cd for the first time, repeating it in its proper place. — d) D5 प्रकोपिनः.

9 a) T1 जातो यः पावकाच्छूरः. — cd) K2.3 M6.8 सुसमिद्धान्महाबाहुः पावकात् etc. Ñ2 V1 B D (except D5) पावकोपमः. T1 सुसमृद्धो महाभागः सोमकानां महारथः. — After 9, T1 ins.:

1804* यस्मिन्संजायमाने च वागुवाचाशरीरिणी ।
एष शिष्यश्च मृत्युश्च भरद्वाजस्य जायते ।

10 a) T1 स्वसा तस्यैव वेद्यां या. — b) T1 जाता तस्मिन्महामखे; G6 सुकुमारी यशस्विनी (cf. v. l. 8b). — For G4 cf. v. l. 8. — cd) K1 क्रोशं; G1–3 केशात् (for क्रोशात्). Ś1 K1.4 D5 G6 प्रधावति; Ñ1.2 V1 B (except B3) D6 Dn D1.2.4 M8 प्रवाति वै (M8 च) (for प्रवायति). T1 स्त्रीरत्नमभिरूपा हि श्यामा नीलोत्पलं यथा.

11 a) Ś1 Ñ2 V1 B D (except D5) यज्ञसेनस्य च सुतां; Ñ3 G5 तां यज्ञसेनदुहितां. — b) T1 G1.2 M द्रौपदीं परम(T1 G2 °मां)स्त्रियं. — c) Ñ1.2 V1 B D (except D5) गच्छामो (D6 Dn2.n3 D2.4 °म) वै; T2 G M संगच्छाम. T1 गच्छामस्तत्र वै द्रष्टुं. — d) Ñ3 V1 B D दिव्यं; T2 G5.6 देवं; G2–4 देशं (for देव-); cf. v. l. 1d. T1 तं चैवास्याः स्वयंवरं.

12 T2 (? hapl.) om. 12b–13c. — c) K3 सुधियो (for शुच°). — d) M6–8 दमात्मानो. K1 D5 T1 धृत°; K4 जित°; Ñ3 B6 D6 G M महा°.

13 T2 om. 13abc (cf. v. l. 12); G1 om. 13ab. — b) K3 नानादेशात्समा°; T1 बलवंतो दुरासदाः. — c) D5 G1 कृतार्थाश्च. — d) Ś1 K D2.5 S समुपेष्यं(K0 G2 M6.7 °क्ष्यं)ति (T1 समेष्यंतीह). K3 भूरिशः.

14 a) Ś1 K1 विविधोपायान् (K1 °याः); K0.3 N1 D5 M °धान्दानान्; Ñ3 °धान्देयान्; T G °धं दानं. — b) Ñ3 D1 जनेश्वराः; G1 नराधिपाः. — d) K1.2 G2 भक्ष्यभोज्यं च; K4 T1 भक्ष्यभोज्यांश्च (T1 °ज्यानि).

15 a) T1 प्रतिलभ्य. Ś1 K2 D1 G1 तु तत्सर्वं; B3 D4 ततः सर्वं. — b) T1 दृष्ट्वा कृष्णां स्वयंवरे. — cd) Ś1 K1–4 तं च; K0 D5 तत्र (for चैव). T1 यं च सा क्षत्रियं रंगे

निर्योधकाश्च देशेभ्यः समेष्यन्ति महाबलाः ॥ १६
एवं कौतूहलं कृत्वा दृष्ट्वा च प्रतिगृह्य च ।
सहास्माभिर्महात्मानः पुनः प्रतिनिवर्त्स्यथ ॥ १७
दर्शनीयांश्च वः सर्वान्देवरूपानवस्थितान् ।
समीक्ष्य कृष्णा वरयेत्संगत्यान्यतमं वरम् ॥ १८
अयं भ्राता तव श्रीमान्दर्शनीयो महाभुजः ।
नियुध्यमानो विजयेत्संगत्या द्रविणं बहु ॥ १९

युधिष्ठिर उवाच ।

परमं भो गमिष्यामो द्रष्टुं देवमहोत्सवम् ।
भवद्भिः सहिताः सर्वे कन्यायास्तं स्वयंवरम् ॥ २० C. 1. 6944 B. 1. 184. 20 K. 1. 185. 21

इति श्रीमहाभारते आदिपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

---

कुमारी वरयिष्यति.

16 a) Ś1 Ñ1.2 V1 B D (except D5) तत्र; G1 M6-8 चात्र (for चैव). — b) G6 तत्र (for सूत-). M6-8 °मागधैः. — c) Ś1 नियोधयश्च; T1 निदेश°; T2 G3-5 निबोध°. — d) T1 समवेतान् (for समे°). B (except B6) Da स्वयंवरं; D4 परस्परं (for महा°).

17 a) Ś1 एकं; T1 एतत् (for एवं). K4 S दृष्ट्वा (T1 तत्र) (for कृत्वा). — b) K4 S (except T1) भुक्त्वा (for दृष्ट्वा). — d) K1 पुरः प्रति-; T1 मात्रा सह; G6 रंगं प्रति-. K2 Da1 D1 T1 G5 M5 -निवर्त्स्यथ; K4 T2 -निवर्त्येथ; G1 -निवृत्स्यथ; G2-4 M8 -निवर्तथ (M8 °त).

18 b) K0 S देवरूपानिव स्थि°. — d) K4 Ñ3 V1 B D (except D5) संगत्यैकतमं (D2 °रं); M °तरं. T G (except G1) M8 पतिं (for वरम्).

19 a) K3 T2 G M भ्राता च वः शीघ्रं; T1 एको हि वो भ्राता. — b) Ñ2.3 V1 B3.5 Dn D1.5 G3-5 नियुज्यमानो; G6 शूरस्यमानो. Ñ V1 B1 Dn विजये. — d) Ñ1.2 भवेत्; S महत् (for बहु). B3 संगत्यान्यतमं बलं (cf. 18d). — After 19, Ñ3 V1 D5 ins.:

1805* आहरिष्यत्ययं नूनं प्रीतिं वो वर्धयिष्यति ।

20 Ś1 K1-3 S om. उवाच. — a) K1 व्रजिष्यामो. T1 वयं सह गमि°; G5 परमं भोजयिष्यामि. — b) Ñ3 V1 B D चैव; G2-4 देशं; G6 दैवं (for देव-); cf. v. l. 1d, 11d. T1 द्रष्टुं तत्र स्वयंवरं. — cd) Ś1 K1 सर्वैः (for सर्वे). Ś1 K D5 पांचाल्यास्तं स्वयं°. T1 द्रौपदीं यज्ञसेनस्य कन्यां तस्यास्तथोत्सवं.

Colophon. T2 G1-5 read a col. after the first occurrence of this adhy. (i. e. after adhy. 157), and one also (after the second occurrence) here. M reads it only here (after the second occurrence), the first occurrence being embodied in our adhy. 158. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K Ñ3 B1.3 Da Dn1.n2 D1.2.4.5 T2 G3.4 (the latter three both times) M2 द्रौपदीस्वयंवर; N1.2 V1 B1 स्वयंवर. — *Adhy. name:* K0.4 पांडवप्रस्थानः (K4 °स्थापनः); Ñ1.2 V1 पांडवागमनं; T2 G3.4.5 ब्राह्मणसमागमः. — *Adhy. no.* (figures, words or both): Dn2 183; D4m 186; T1 165; T2 G3.4.5 (all first time) 117, and (all second time) 134; G1.2 (both first time) 119 and 115 respectively, and (both second time) 136; G6 M (at the second occurrence) 135. — *S'loka no.:* Dn M5 20. — *Aggregate s'loka no.:* Dn2 6916.

## 176

1 Ś1 K D2 S om. उवाच (K0 om. the ref.). — T1, which om. 1, repeats 1. 175. 1 here. — a) Ś1 K (except K4) B1.3 Da D1 एवमुक्त्वा. — D4 (marg. *sec. m.*) S ins. after 1ab (T1, after the repetition of 1. 175. 1), a *repetition* of 1803* [ v. l.: T G सर्वे; M5 भूत्वा (for पार्थाः) ]; cf. 1. 55. 20. — c) S (T1 om.) राजन् (for राज्ञा). Ñ V1 B D5 G1.2 M2.5 °पंचालान्.

2 a) Ñ3 V1 D1 तेषु; B1.5 D4 ते च; Dn2.n3 ते सु; D2 त्वेनं (for ते तं). — c) N3 V1 B Dn D1.4.5 वीरा (for राजन्). — d) Ñ1.2 V1 B D (except Da D2) मुनिं (for पथि). A few MSS. तथा.

3 T2 om. 3-4. — a) M6-8 तस्मै यथैव. K0 तस्मै पूजां यथार्हां च. — b) Ñ1 चक्रुस् (for कृत्वा). M2 रहसि (*inf. lin.* तेन च as in text). Ñ2 V1 B3.6 D सत्कृताः (for सान्त्विताः). — c) Ś1 K1 चाप्यनु°; D2 तदनु°. S (T2 om.) कथयित्वाभ्य(G5 °प्य)नु°. — d) K0.3.4 द्रुपदं प्रति; Cd as in text.

4 T2 om. 4 (cf. v. l. 3). — b) K0.4 D5 वनान्युपवनानि च; T1 G6 सरांसि च वनानि च (by transp.). — c) M3.5 ते (for च).

# १७६

C. 1. 6945
B. 1. 185. 1

वैशंपायन उवाच ।

एवमुक्ताः प्रयातास्ते पाण्डवा जनमेजय ।
राज्ञा दक्षिणपाञ्चालान्द्रुपदेनाभिरक्षितान् ॥ १
ततस्ते तं महात्मानं शुद्धात्मानमकल्मषम् ।
ददृशुः पाण्डवा राजन्पथि द्वैपायनं तदा ॥ २
तस्मै यथावत्सत्कारं कृत्वा तेन च सान्त्विताः ।
कथान्ते चाभ्यनुज्ञाताः प्रययुर्द्रुपदक्षयम् ॥ ३
पश्यन्तो रमणीयानि वनानि च सरांसि च ।
तत्र तत्र वसन्तश्च शनैर्जग्मुर्महारथाः ॥ ४
स्वाध्यायवन्तः शुचयो मधुराः प्रियवादिनः ।
आनुपूर्व्येण संप्राप्ताः पाञ्चालान्कुरुनन्दनाः ॥ ५
ते तु दृष्ट्वा पुरं तच्च स्कन्धावारं च पाण्डवाः ।
कुम्भकारस्य शालायां निवेशं चक्रिरे तदा ॥ ६
तत्र भैक्षं समाजह्रुर्ब्राह्मीं वृत्तिं समाश्रिताः ।
तांश्च प्राप्तांस्तदा वीराञ्जज्ञिरे न नराः क्वचित् ॥ ७
यज्ञसेनस्य कामस्तु पाण्डवाय किरीटिने ।
कृष्णां दद्यामिति सदा न चैतद्विवृणोति सः ॥ ८
सोऽन्वेषमाणः कौन्तेयान्पाञ्चाल्यो जनमेजय ।
दृढं धनुरनायम्यं कारयामास भारत ॥ ९
यन्त्रं वैहायसं चापि कारयामास कृत्रिमम् ।

---

5 $^a$) $G_6$ मधुराः (for शुचयो). — $^b$) $K_1$ $B_5$ मधुर॰; $G_6$ मधुकाः; $G_6$ पांडवाः. $K_8$ प्रियदर्शनाः. — $^{cd}$) $Ś_1$ K (except $K_8$) $Ñ_8$ $D_1$ $G_2$ आ($K_4$ अ)नुपूर्वेण; Cd as in text. $T_1$ transp. संप्राप्ताः and पांचालान्. A few MSS. पंचालान्. $Ñ_2$ $V_1$ B D (except $D_5$) पांडुनंदनाः.

6 $^a$) $D_1$ दृष्ट्वा तु (by transp.). T G पुरं तस्य. — $^b$) $K_3$ स्कंधागारं; $T_2$ G ॰वारान्; Cd as in text. — $^d$) $Ñ_{2.3}$ $V_1$ B D (except $D_5$) $M_{6-8}$ निवासं.

7 $^a$) Some MSS. भैक्ष्यं. — $^b$) $K_3$ $Ñ_{1.3}$ $B_{3.5}$ Da $D_{2.4.5}$ समास्थिताः. $Ñ_2$ $V_1$ Dn $D_1$ ब्राह्मणीं वृत्तिमाश्रिताः. — $^c$) $Ñ_2$ $V_1$ $B_1$ Dn $D_{1.6}$ तान्संप्राप्तान्; $G_1$ प्राक्च प्रा॰. $K_{2.3}$ $Ñ_2$ $V_1$ B (except $B_3$) Dn $D_1$ S (except $T_1$ $G_{3.4}$) तथा. $B_{1.5}$ राजन् (for वीरान्). — $^d$) Da मानवाः (for न नराः). — After 7, $D_4$ (marg. *sec. m.*) T $G_{2-5}$ ins.:

1806* यज्ञसेनस्तु पाञ्चालो भीष्मद्रोणकृतागसम् ।
ज्ञात्वात्मानं तदारेभे प्राणायामक्रियां क्षमाम् ।
अवाप्य धृष्टद्युम्नं हि न स द्रोणमचिन्तयत् ।
सुतवैरप्रसङ्गाच्च भीष्माद्भयमचिन्तयत् ।

[ (L. 2) $D_4$ $T_2$ ततोरेभे; $T_1$ तदा लेभे; $G_3$ तमारेभे. $D_4$ $T_2$ प्राणायामक्रियां. $T_1$ $G_4$ क्षमां क्रियां (by transp.). — (L. 4) $D_4$ $T_2$ स तु; $T_1$ स्थित॰; $G_4$ स ते (for सुत॰). ]
$D_4$ (marg. *sec. m.*) $T_2$ $G_5$ cont.: $T_1$ $G_{2-4}$ ins. after 8:

1807* कन्यादानात्तु शरणं सोऽमन्यत महीपतिः ।
जामातुर्बलसंयोगान्मेने ह बलवत्तरम् ।

[ (L. 1) $D_4$ ॰दानं तु; $G_{2-4}$ ॰दानाद्धि. $G_5$ सोपश्यत. — (L. 2) $D_4$ $G_{2-4}$ हि (for ह). ]

8 $^a$) Da कामं तु. $T_1$ स कामो यज्ञसेनस्य. — $^c$) $T_2$ $G_{5.6}$ ददानीति; $G_{1-4}$ M ददामीति. $T_1$ दास्यामि कृष्णामिति वै. — $^d$) $B_5$ न चैतं; $T_1$ न चैनं. $Ś_1$ तु; Cd वि॰ (as in text). — After 8, $T_1$ $G_{2-4}$ ins. 1807*.

9 $^{ab}$) $Ś_1$ सोन्वेष्यमाणः; $D_1$ $G_6$ $M_5$ अन्वेप॰. $Ñ_{2.3}$ $V_1$ B D $M_{6-8}$ कौंतेयं. $G_6$ पांचालः कौन्तेयान्. S (except $T_1$) पांचालो. — After $9^{ab}$, $D_4$ (marg. *sec. m.*) T $G_{3.5}$ ins.:

1808* शंकरेण वरो दत्तः प्रीतेन च महात्मना ।
स निष्फलः स्यान्न तु मे इति प्रामाण्यमागतः ।
मया कर्तव्यमधुना दुष्करं लक्ष्यवेधनम् ।
इति निश्चित्य मनसा कारितं लक्ष्यमुत्तमम् ।

[ (L. 1) $T_2$ $G_5$ वरं दत्तं. — (L. 2) $D_4$ $T_2$ $G_5$ तन्निष्फलं. ]
— $^c$) $Ñ_{2.3}$ $V_1$ B ($B_1$m as in text) D $T_2$ $G_1$ $M_5$ ॰नानम्यं. — $^d$) $G_{1-4}$ मार्गयामास. $G_{2-4}$ वै तदा (for भारत). — After 9, T $G_{2-5}$ ins.:

1809* वैय्याघ्रपद्यसोमं वै सृञ्जयस्य महीपतेः ।
तद्धनुः किंधुरं नाम देवदत्तमुपानयत् ।
आयसी तस्य ज्या चासीत्प्रतिबद्धा महाबला ।
न तु ज्यां प्रसहेदन्यां तद्धनुःप्रवरं महत् ।

[ (L. 1) T $G_5$ वैय्याघ्रपाद॰. $G_3$ महीक्षितः. — (L. 2) T $G_5$ स धनुः. — (L. 3) $T_2$ $G_{3.4}$ ज्याथासीत्. ]

10 $^a$) Ñ $V_1$ $B_{1.3}$ D (except $D_5$) $T_2$ $G_{5.6}$ $M_{6-8}$ समितं; $T_1$ समयं. $M_{3.5}$ यंत्रेण समितं लक्ष्यं. — $^d$) $G_{1-5}$ राजन् (for राजा). $Ñ_2$ $V_1$ B D (except $D_4$) चकार सः. T $G_6$ M कारयामास कांचनं.

तेन यन्त्रेण सहितं राजा लक्ष्यं च काञ्चनम् ॥ १०

द्रुपद उवाच ।

इदं सज्यं धनुः कृत्वा सज्येनानेन सायकैः ।
अतीत्य लक्ष्यं यो वेद्धा स लब्धा मत्सुतामिति ॥

वैशंपायन उवाच ।

इति स द्रुपदो राजा सर्वतः समघोषयत् ।
तच्छ्रुत्वा पार्थिवाः सर्वे समीयुस्तत्र भारत ॥ १२
ऋषयश्च महात्मानः स्वयंवरदिदृक्षया ।
दुर्योधनपुरोगाश्च सकर्णाः कुरवो नृप ॥ १३
ब्राह्मणाश्च महाभागा देशेभ्यः समुपागमन् ।
तेऽभ्यर्चिता राजगणा द्रुपदेन महात्मना ॥ १४
ततः पौरजनाः सर्वे सागरोद्धूतनिःस्वनाः ।
शिशुमारपुरं प्राप्य न्यविशंस्ते च पार्थिवाः ॥ १५
प्रागुत्तरेण नगराद्भूमिभागे समे शुभे ।
समाजवाटः शुशुभे भवनैः सर्वतो वृतः ॥ १६
प्राकारपरिखोपेतो द्वारतोरणमण्डितः ।
वितानेन विचित्रेण सर्वतः समवस्तृतः ॥ १७
तूर्यौघशतसंकीर्णः पराध्यागुरुधूपितः ।
चन्दनोदकसिक्तश्च माल्यदामैश्च शोभितः ॥ १८
कैलासशिखरप्रख्यैर्नभस्तलविलेखिभिः ।

C. 1. 6963
B. 1. 185. 19
K. 1. 200. 23

---

11 Ś1 K1 om. उवाच; S om. the ref. — a) A few MSS. सज्जं. — b) K3 सज्जेन; T G2–4.6 M छिद्रेण; G1 यंत्रेण. Ñ V1 B D सज्जैरेभिश्च (B6 Da D3 °स्तु) (Ñ1 सज्जैरातत°). — c) Ś1m K1 संधाय लक्ष्यं. B Da D2.4 यो विध्येत्; G2–4.6 यो विध्यात्. — d) B D2.4 स लभेत्. S च (for मत्°). Ñ1 B6 Da D4.5 इमां (for इति). — After 11, Ś1 K D5 ins. an additional colophon (*Sub-parvan:* Ś1 K द्रौपदीस्वयंवर. — *Adhy. name:* Ko.4 D5 द्रुपदवाक्यं. — *Adhy. no.:* D5 133).

12 Ś1 K (except Ko) om. उवाच; S om. the ref. — a) K1 इत्थं स; S इत्येवं (T1 °व). — b) Ñ2 V1 B D स्वयंवरमघो°; G1 सर्वलोकेष्वघो°. — c) T1 G6 पांडवाः सर्वे.

13 b) Ñ V1 Dn °दिदृक्षवः. — T1 G2–4 ins. after $13^{ab}$ (G2 has line 1 only after $13^{ab}$ and the rest after 13; G3.4 om. $14^{ab}$):

1810* यादवा वासुदेवेन सार्धमन्धकवृष्णयः ।
राजानो राजपुत्राश्च युवानो मृष्टकुण्डलाः ।
नानाजनपदाधीशा यज्वानो भूरिदक्षिणाः ।
मनोज्ञरूपलावण्या महेन्द्रसमविक्रमाः ।
क्रोधेन चाग्निसदृशाः क्षमया पृथिवीसमाः ।
स्थैर्ये मेरुसमा धीराः सूर्यवैश्वानरोपमाः ।
पृथिव्यां ये च राजान ऋषयश्च तपोधनाः ।
बालवृद्धानृते सर्वे महीपालाः समागताः ।
त्रयस्त्रिंशत्सुराः सर्वे विमानैर्व्योम्नि निष्ठिताः ।

— c) G3.4 दुर्योधनमुखाश्चैव. — d) G2 कौरवा (for कुरवो). Ko.2.4 Ñ1.3 Da D5 T G1.2.6 M6–8 नृपाः; G3.4 ययुः. — After 13, G2 ins. lines 2–9 of 1810*.

14 G3.4 om. $14^{ab}$. — b) K3 Ñ1 T G (G3.4 om.) M3 (*inf. lin.*).6–8 समुपागताः. M2.5 नानादेशसमागताः. — c) Ñ V1 B D (except D5) G2–4 ततोर्चिता; T2 ते ह्यर्चि°. G2–4 महीपाला; G6 नरेंद्रेण (for राज°). — After 14, T1 G2–4 ins.:

1811* ब्राह्मणैरेव सहिताः पाण्डवाः समुपाविशन् ।
वैतालिका नर्तकाश्च सूतमागधवन्दिनः ।

T1 G2–4 cont.: N ins. after 14:

1812* उपोपविष्टा मञ्चेषु द्रष्टुकामाः स्वयंवरम् ।
[ T1 G2–4 राजसुपागमन्सर्वे द्रष्टु° etc. ]

15 a) K4 पौरजनः सर्वैः; S पुरवरे श्रेष्ठे. — b) Ś1 K1.3 T1 G1.6 M सागरोद्धत°; K4 °स्वनः; T2 G2–5 °रोपमनिस्वने. — c) K4 D4 S शिं(G5 शि)शुमारगिरिं (K4 °शिरं; D4 °शिरः) प्राप्य. — d) K (except K1) B5 D1.3 न्यवसन् (for न्यविशन्). Ko.3.4 D5 तत्र; B1.3 Da D4 तेथ; B5 तेषु; D2 ते स (for ते च). K2 पार्थिव. S न्यविशंत महारथाः.

16 a) S °त्तरे च. — b) Ñ3 M8 भूमिदेशे.

17 a) D4 T G प्राकार(T1 G6 °साद)परिघोपेतो. — d) B1(m as in text).3 संवृतः; G6 सर्वत्र (for सर्वतः). Ś1 K4 D4 समविस्तृतः; K2 Ñ2 V1 B1m.6 Dn D1.4 T2 G2–5 °लंकृतः; Ñ1 B1.2.5 Da °वस्थितः (B5 °तैः); T1 समुपावृतः; G1 संवृतस्ततः; G6 M °वास्तृतः; text as in Ko.2.3 Ñ3 D2!

18 b) Ś1 Ñ1.2 °भूषितः; Ko °रूपितः; K1 °वासितः. K2–4 Dn3 D1 S (except T1) °र्घ्यागरुधूपि(K2.3 °भूषि)तः. — G2 om. $18^{cd}$. — c) B6 °नागरुसिक्तश्च; M6–8 °सिक्तैश्च. — d) Ś1 K (except K2) माल्यपुंजैश्च. Ñ1 भूषितः. Ñ2 V1 B D °दामोपशो° (D3 °दामविभूषितः); T1 °दामविशोभितः; M3 °दामभिरावृतः.

19 b) D1.2 T2 G3–6 M5–8 नभःस्थल°. — c) K2 Ñ3

C. 1. 6663 B. 1. 185. 19 K. 1. 200. 28

सर्वतः संवृतैर्नद्धः प्रासादैः सुकृतोच्छ्रितैः ॥ १९
सुवर्णजालसंवीतैर्मणिकुट्टिमभूषितैः ।
सुखारोहणसोपानैर्महासनपरिच्छदैः ॥ २०
अग्राम्यसमवच्छन्नैरगुरूत्तमवासितैः ।
हंसांशुवर्णैर्बहुभिरायोजनसुगन्धिभिः ॥ २१
असंबाधशतद्वारैः शयनासनशोभितैः ।
बहुधातुपिनद्धाङ्गैर्हिमवच्छिखरैरिव ॥ २२
तत्र नानाप्रकारेषु विमानेषु स्वलंकृताः ।
स्पर्धमानास्तदान्योन्यं निषेदुः सर्वपार्थिवाः ॥ २३
तत्रोपविष्टान्ददृशुर्महासत्त्वपराक्रमान् ।
राजसिंहान्महाभागान्कृष्णागुरुविभूषितान् ॥ २४
महाप्रसादान्ब्रह्मण्यान्स्वराष्ट्रपरिरक्षिणः ।
प्रियान्सर्वस्य लोकस्य सुकृतैः कर्मभिः शुभैः ॥ २५
मञ्चेषु च परार्ध्येषु पौरजानपदा जनाः ।
कृष्णादर्शनतुष्ट्यर्थं सर्वतः समुपाविशन् ॥ २६
ब्राह्मणैस्ते च सहिताः पाण्डवाः समुपाविशन् ।
ऋद्धिं पाञ्चालराजस्य पश्यन्तस्तामनुत्तमाम् ॥ २७
ततः समाजो ववृधे स राजन्दिवसान्बहून् ।
रत्नप्रदानबहुलः शोभितो नटनर्तकैः ॥ २८
वर्तमाने समाजे तु रमणीयेऽह्नि षोडशे ।
आप्लुताङ्गी सुवसना सर्वाभरणभूषिता ॥ २९
वीरकांस्यमुपादाय काञ्चनं समलंकृतम् ।
अवतीर्णा ततो रङ्गं द्रौपदी भरतर्षभ ॥ ३०
पुरोहितः सोमकानां मन्त्रविद्ब्राह्मणः शुचिः ।
परिस्तीर्य जुहावाग्निमाज्येन विधिना तदा ॥ ३१
स तर्पयित्वा ज्वलनं ब्राह्मणान्स्वस्ति वाच्य च ।

---

V1 B D (except D2) संवृ(K3 °भृ)तः (B5 °तैः) शुभ्रैः; M (except M1) संवृतो नद्धैः. — c) Ñ2 V1 B D T G1(by corr.).5 (*sup. lin.*) M2.5 °तोच्छ्र(D3 °च्च)यैः.

20 a) T G (except G4) °जालवितितैः; M5 °माला-संयुक्तैः; M6-8 °मालासंवीतैः. — b) Ś1 K3 Ñ2 V1 Dn3 °भूषणैः.

21 a) K4 °समवस्थानैः; Ñ2 V1 B1 T1 स्वागदमसम°; D2 °वसनच्छन्नैः. — b) Ś1 K0-2.4 °भूपितैः; K3 Ñ1.3 T2 G M °धूपितैः; T1 वितानध्वजशोभितैः. Some MSS. अगरु- (for अगुरु-). — K0 om. 21c-22b; G1 om. 21cd. — c) K3 हंसांग°; K3.4 D2.3 हंसाभ्र°; Ñ2.3 V1 B3.6 Dn D1 हंसांशु°; B1.3 Da हंसांस°; S हंसवर्णैश्च.

22 K0 om. 22ab (cf. v. l. 21). — a) Ñ1.3 S °पथ(T2 G5 °पथि-; G1 °पदैर्)द्वारैः. — b) K4 °शोभनैः; M6-8 °शोभिभिः. — c) Ś1 K (except K3) M3 °विन-द्धांगैः; Ñ1.3 °निबद्धांगैः; T2 G2-4 °विदिग्धांगैः.

23 c) T2 G सदान्योन्यं. — d) Ñ1 निषेदुर्वसुधाधिपाः.

24 b) Ś1 K Ñ1.2 V1 D5 महाबल°; S महासत्त्वान्नृ-वरजनाः (T1 G1 °नान्). — c) M6-8 नरसिंहान्. — d) K0.2.4 D5 दिव्यचंदनभूषितान्; S सृष्टस्रगनुलेपनान्.

25 a) T1 G1 महाप्रभावान्. Ś1 Da2 D1 G5 ब्राह्मण्यान्. — b) G1 स्वराष्ट्रस्य हि र°. — c) G6 धर्मस्य लोकस्य. — d) K (except K1) D2.3 T1 G2 M3 स्वकृतैः. G5 स्वकृतैकशुभाशुभैः.

26 a) S ततो मंचातिमंचेषु. — b) Ś1 पश्यंतस्तान-नुत्तमान्; K (except K1) Ñ3 B Da D1.2.4 °पदो जनः. — cd) Ñ2 V1 B D °सिध्य° (for °तुष्ट्य°). Ś1 पौराश्च (for सर्वतः). K0.2.3 Ñ3 B Da D1.2.4 समुपाविशत्. S उपोपविविशुः सर्वे याज्ञसेनीं दिदृक्षवः.

27 Ś1 K1.2.4 (hapl.) om. 27ab. — a) B3 T1 स्त्वेव; T2 G M चैव (G1 स्वैश्च) (for ते च). — c) Some MSS. पंचाल°. G6 पांचालदेशस्य. — d) Ś1 जानपदास्तथैव च(!); G2.4 °स्तामनिंदितां.

28 a) K2 B1 Da D1 G6 M ववृते. — b) G1.2 M5 स राजा. — c) K1 रंगप्रभ्मन° (sic); K2 °प्रधान°; Da D1.3 °प्रवाल°.

29 b) M2.5 पुरोत्तमे; M6-8 हि षोडशे. — After 29ab, D5 (suppl. fol., *sec. m.*) ins. a passage of 50 lines given in App. I (No. 98). — c) S आप्लुता (M6-8 °त्य) शुद्धवसना.

30 a) Ñ2 V1 Dn D1.4.5 मालां च स(D5 चिता)मु-पादाय; G4 वीरकां स्रजमादाय. Cd वीरकांस्यं (=मालां) as in text. — b) Ñ2 V1 Dn D1.4.5 कांचनीं समलंकृतां; T2 G1.4.5 कांचनैः स°. — d) K4 द्रौपदी योषितां वरा; S द्रौपदी द्रुपदात्मजा.

31 b) K0.4 ब्राह्मणर्षभः. — d) Ñ V1 B D विधि-वत्तदा; M6-8 हविषा तदा.

32 a) K1.4 Ñ V1 B (except B1) D (except Dn3 D1) T2 G1.4.5 M2.5 संतर्प°; K3 तर्पयित्वा तु. — b) Ñ1.3 Dn3 ब्राह्मणं. Ś1 K1 स्वस्ति वाचयन्. — c) Ś1 K1.4 Da2

वारयामास सर्वाणि वादित्राणि समन्ततः ॥ ३२
निःशब्दे तु कृते तस्मिन्धृष्टद्युम्नो विशां पते ।
रङ्गमध्यगतस्तत्र मेघगम्भीरया गिरा ।
वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमम् ॥ ३३
इदं धनुर्लक्ष्यमिमे च बाणाः
शृण्वन्तु मे पार्थिवाः सर्व एव ।
यन्त्रच्छिद्रेणाभ्यतिक्रम्य लक्ष्यं
समर्पयध्वं खगमैर्दशार्धैः ॥ ३४
एतत्कर्ता कर्म सुदुष्करं यः
कुलेन रूपेण बलेन युक्तः ।
तस्याद्य भार्या भगिनी ममेयं
कृष्णा भवित्री न मृषा ब्रवीमि ॥ ३५
तानेवमुक्त्वा द्रुपदस्य पुत्रः
पश्चादिदं द्रौपदीमभ्युवाच ।
नाम्ना च गोत्रेण च कर्मणा च
संकीर्तयंस्तान्नृपतीन्समेतान् ॥ ३६

C. 1. 6980
B. 1. 185. 37
K. 1. 200. 32

इति श्रीमहाभारते आदिपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

G6 M वादयामास. G5 सर्वे हि. — d) K1 च सर्वशः (for समन्त°).

33 a) D1 याज्ञसेनो (for धृष्ट°). — After 33ab, K4 Ñ1.3 V1 B3.6 Dn3 D1.2.4.5 ins.:

1813* कृष्णामादाय विधिवन्मेघदुन्दुभिनिःस्वनः ।

— c) K3 Ñ V1 B6 Dn D4.5 G3 M6-8 रंगमध्ये; B1 D1 °मध्यं; G1 जनमध्ये. — d) S (except T1 G6) गंभीरनिस्वनः. — e) M6-8 वाच्य(M7 °च)मुच्चैर्. — f) G1 श्लक्ष्णं धर्मवदुत्तमं.

34 K3 om. 34–36. Before 34, Ko.4 D5 ins. धृष्टद्युम्न उ°; S (except M6-8) धृष्टद्युम्नः. — a) Some MSS. लक्षम्. — b) Ś1 शृण्वंस्त्विमे; Ñ1 °तु ये. S क्षत्रियाः (for पार्थिवाः). Ś1 एव सर्वे (by transp.). Ñ1.3 V1 B D (except D5) मे भूपतयः समेताः. — c) Ñ3 V1 B D छिद्रेण यंत्रस्य समर्पयध्वं. — d) Ko.4 समापयध्वं; K1 संमर्दै°; K2 समर्थै°. Ñ3 V1 B D लक्ष्यं (Ñ3 V1 Dn D1 शरैः) शितैर्व्योमचरैर्दशार्धैः; G3 समाददे पंचभिश्चापि बाणैः. Cd cites खगमैः (as in text).

35 K3 om. 35 (cf. v. l. 34). — a) Ñ3 V1 B D एतन्महत्कर्म करोति यो वै. — c) G1 तस्यैव. M (except M5) भविता (for भगिनी). B6 Da D3 ममैषा. — d) S (except T1 G1.3) कृष्णा स्वसा न मृषा प्रब्रवीमि.

36 K3 om. 36 (cf. v. l. 34). — a) G3 तेनैवम्; G5 तामेवम्. — b) D5 S इति (for अभि°). Ñ3 V1 B Da Dn D1-4 °दं तां भगिनीमुवाच. — d) Ñ3 V1 B5.6 D (except D5) भूमिपतीन् (for तान्नृपतीन्).

Colophon om. in K3. — *Major parvan:* T2 G M संभव° (for आदि). — *Sub-parvan:* Ś1 Ko-3 Ñ3 B D3.4 T2 G1.4.6 M2.6-8 द्रौपदीस्वयंवर; Ñ1.3 V1 Dn3 M5 स्वयंवर; T1 संभव. — *Adhy. name:* Ko.4 D5 द्रौपदी(Ko om.)रंगावतरणं; Ñ1.3 V1 धृष्टद्युम्नवाक्यं. — *Adhy. no.* (figures, words or both): Dn3 184; D1 80 (read 180); D4m 187; T1 183; T2 G2.4.5 135; G1.3 137; G6 M 136. — *Śloka no.:* Dn 36; M2 37. — *Aggregate śloka no.:* Dn3 6952.

## 177

1 Ś1 K1.3 S om. उवाच. — d) Ko Ñ3 V1 B D तथा; K3 शलः; M2.5 शमः (for समः).

2 a) Ñ V1 B D वायुवेग°. — b) Ś1 भीमवेश°; Ko.2.4 °वेगोपर°; Ñ1 °बाणधर°; Ñ3 V1 B1.6 Da Dn D1 G1 °वेगरव°; D2 T °वेगरथ°; D5 °वेगवन°; G2-4 °वेगरय°; G5 °वेगरत°; G6 °वेगश्च वीर्यवान्. — D1 (hapl.) om. 2c–3d. — c) T1 G2 बलाकश्च; G6 °किश्च. — d) Ñ3 V1 B (except B6) Dn D4 करकायुद्.

3 D1 om. 3 (cf. v. l. 2). — a) Ko.3 D5 T G M2 सकुंडलश्च् (G2 °लिश्च्). Ś1 K1.3 चित्रवेदी (K1 °धी). Ñ3 V1 B Da Dn D2.4 कुंडज(Ñ3 V1 B6 Dn °क-; D2.4 °ड)श्चित्रसेनश्च. — b) Ś1 सुवर्चः; K (except K1) B5 Da °र्चा. — c) Ś1 D2 M6-8 बहु°; K3 °शीली; B5 बल°. — d) Ko.2.4 कुंडलो; Ñ3 V1 B5 Dn तुहुंडो; B1.2.6 Da D2.4.5 मुकुटो; S कुंडली. B5 T1 विकचस्. — After 3, D4 (marg. sec. m.) S ins.:

1814* विन्दश्चाप्यनुविन्दश्च सजीवी विकलः करी ।
[ T1 G1 M2.5 संदीपी; T2 G4-6 सदीपी; M6-8 संजीवी. ]

4 a) K4 शूराः (for वीराः). — b) Ñ1 समुपागमन्; D2 °पस्थिताः. — c) Ñ3 V1 Dn D1 असंख्याता (for

## १७७

C. 1. 6981
B. 1. 186. 1
K. 1. 201. 1

धृष्टद्युम्न उवाच ।

दुर्योधनो दुर्विषहो दुर्मुखो दुष्प्रधर्षणः ।
विविंशतिर्विकर्णश्च सहो दुःशासनः समः ॥ १
युयुत्सुर्वातवेगश्च भीमवेगधरस्तथा ।
उग्रायुधो बलाकी च कनकायुर्विरोचनः ॥ २
सुकुण्डलश्चित्रसेनः सुवर्चाः कनकध्वजः ।
नन्दको बाहुशाली च कुण्डजो विकटस्तथा ॥ ३
एते चान्ये च बहवो धार्तराष्ट्रा महाबलाः ।
कर्णेन सहिता वीरास्त्वदर्थं समुपागताः ।
शतसंख्या महात्मानः प्रथिताः क्षत्रियर्षभाः ॥ ४
शकुनिश्च बलश्चैव वृषकोऽथ बृहद्बलः ।
एते गान्धारराजस्य सुताः सर्वे समागताः ॥ ५
अश्वत्थामा च भोजश्च सर्वशस्त्रभृतां वरौ ।
समवेतौ महात्मानौ त्वदर्थे समलंकृतौ ॥ ६
बृहन्तो मणिमांश्चैव दण्डधारश्च वीर्यवान् ।
सहदेवो जयत्सेनो मेघसंधिश्च मागधः ॥ ७
विराटः सह पुत्राभ्यां शङ्खेनैवोत्तरेण च ।
वार्धक्षेमिः सुवर्चाश्च सेनाबिन्दुश्च पार्थिवः ॥ ८
अभिभूः सह पुत्रेण सुदाम्ना च सुवर्चसा ।
सुमित्रः सुकुमारश्च वृकः सत्यधृतिस्तथा ॥ ९
सूर्यध्वजो रोचमानो नीलश्चित्रायुधस्तथा ।
अंशुमांश्चेकितानश्च श्रेणिमांश्च महाबलः ॥ १०
समुद्रसेनपुत्रश्च चन्द्रसेनः प्रतापवान् ।
जलसंधः पितापुत्रौ सुदण्डो दण्ड एव च ॥ ११
पौण्ड्रको वासुदेवश्च भगदत्तश्च वीर्यवान् ।
कलिङ्गस्ताम्रलिप्तश्च पत्तनाधिपतिस्तथा ॥ १२
मद्रराजस्तथा शल्यः सहपुत्रो महारथः ।
रुक्माङ्गदेन वीरेण तथा रुक्मरथेन च ॥ १३
कौरव्यः सोमदत्तश्च पुत्राश्चास्य महारथाः ।
समवेतास्त्रयः शूरा भूरिर्भूरिश्रवाः शलः ॥ १४

---

शत°). Ś$_1$ महाबलाः (for °त्मानः). — $^f$) Ñ$_3$ V$_1$ Dn D$_1$ पार्थिवाः; S समेताः (for प्रथिताः). K$_{3.3}$ क्षत्रिया भुवि; S देवरूपिणः.

5 $^a$) K T$_2$ G$_{1.2.4}$ °निश्चाच(K$_1$ °निः सच)लश्चैव; Ñ V$_1$ B D G$_3$ M$_{6-8}$ °निः सौबल°; T$_1$ °निश्चाशल°; G$_5$ M$_5$ °निश्चापल°; G$_6$ °निश्चाचलै°. — $^b$) S महाधनुः (G$_6$ °रथाः) (for बृह°). — $^d$) B$_6$ Da D$_{2.4}$ S पुत्राः. Ś$_1$ K D$_5$ प्रकीर्तिताः (for समा°).

6 $^a$) D$_5$ द्रोण° (for भोज°). — G$_6$ om. 6$^c$–8$^b$. — $^c$) Ñ$_1$ समागतौ; M$_{6-8}$ सवने तौ. — $^d$) Many S MSS. त्वदर्थं.

7 G$_6$ om. 7 (cf. v. l. 6). — $^a$) Ś$_1$ K$_1$ बृहस्तौ(K$_1$ °स्तो)मणि°; K$_0$ D$_5$ बृहत्सुर्मणि°; M (except M$_8$) बृहंतौ मणि°. — $^b$) Ñ$_3$ V$_1$ B D (except D$_5$) पार्थिवः (for वीर्य°). — D$_2$ (hapl.) om. 7$^c$–8$^d$. — $^c$) Ñ V$_1$ B D (except D$_5$; D$_2$ om.) सहदेवजयत्सेनौ. — $^d$) Ñ$_{2.3}$ V$_1$ Dn D$_1$ पार्थिवः (for मागधः).

8 G$_6$ om. 8$^{ab}$; D$_2$ om. 8 (cf. v. l. 6, 7). — $^a$) K$_2$ सुधन्वा च; Ñ$_{2.3}$ V$_1$ Dn D$_1$ सुशर्मा च; G$_2$ सबंधुश्च; G$_3$ सबीज°; G$_4$ सबिंदु°. — $^d$) K$_2$ पार्थिव; K$_4$ °वाः; S वीर्यवान्.

9 $^a$) Ñ$_{1.3}$ अवितुः; Ñ$_2$ V$_1$ B$_1$(m as in text)$_{.3.5}$ Dn D$_{1.2}$ सुकेतुः; B$_3$ D$_4$ अविभुः; Da अवित्तः (for अभि°). Ñ$_3$ सहपुत्रश्च. — $^b$) K$_1$ Ñ$_{2.3}$ V$_1$ B$_5$ Dn D$_{1.4}$ सुनाम्ना; S वसुना. K$_1$ Ñ$_3$ B$_5$ Da अथ (for च). — $^c$) K$_{0.3.4}$ Ñ V$_1$ B$_{1.5}$ Dn D$_{1.4.5}$ M$_{8.5}$ सुचित्रः; B$_3$ °जितः; G$_1$ °मित्रिः. — $^d$) K$_3$ वृतः; G$_6$ वृत्तः (for वृकः). T$_2$ G$_{2.5}$ सत्यव्रतस्.

10 Ś$_1$ K$_1$ (hapl.) om. 10$^{ab}$. — $^b$) B$_3$ नीलश्चोग्रायुध°.

11 $^a$) T G °श्चंद्रश्च. — $^b$) B (except B$_3$) Da D$_{2.4}$ चित्रसेनः; G$_6$ इंद्र°. K$_{0.3.4}$ D$_5$ च वीर्यवान्; S च पार्थिवः (for प्रताप°). — $^c$) S (except G$_3$) जरासंधः. D$_5$ S स(G$_{2-4}$ च; M$_5$ सु)पुत्रश्च (G$_1$ °स्तु). — $^d$) K$_{0.2.3}$ Ñ$_1$ B$_{3.5}$ अदंडो; K$_4$ Ñ$_{2.3}$ V$_1$ Dn D$_1$ विदंडो.

12 $^a$) K (except K$_1$) B M$_{6-8}$ ताम्रलिप्तश्च. G$_1$ कलिंगाधिपतिस्ताम्र-. — $^d$) Ś$_1$ K$_{1.2}$ पट्टना°; D$_2$ यवना°; M$_8$ वर्तना°. Ñ$_1$ S महान् (for तथा).

13 $^b$) K (except K$_1$) S सह पुत्रैर्. S महाबलः. — $^c$) K$_3$ रुक्मांगदे विचित्रेण.

सुदक्षिणश्च काम्बोजो दृढधन्वा च कौरवः ।
बृहद्बलः सुषेणश्च शिबिरौशीनरस्तथा ॥ १५
संकर्षणो वासुदेवो रौक्मिणेयश्च वीर्यवान् ।
साम्बश्च चारुदेष्णश्च सारणोऽथ गदस्तथा ॥ १६
अक्रूरः सात्यकिश्चैव उद्धवश्च महाबलः ।
कृतवर्मा च हार्दिक्यः पृथुर्विपृथुरेव च ॥ १७
विडूरथश्च कङ्कश्च समीकः सारमेजयः ।
वीरो वातपतिश्चैव झिल्ली पिण्डारकस्तथा ।
उशीनरश्च विक्रान्तो वृष्णयस्ते प्रकीर्तिताः ॥ १८
भगीरथो बृहत्क्षत्रः सैन्धवश्च जयद्रथः ।
बृहद्रथो बाह्लिकश्च श्रुतायुश्च महारथः ॥ १९
उलूकः कैतवो राजा चित्राङ्गदशुभाङ्गदौ ।
वत्सराजश्च धृतिमान्कोसलाधिपतिस्तथा ॥ २०
एते चान्ये च बहवो नानाजनपदेश्वराः ।
त्वदर्थमागता भद्रे क्षत्रियाः प्रथिता भुवि ॥ २१
एते वेत्स्यन्ति विक्रान्तास्त्वदर्थं लक्ष्यमुत्तमम् ।
विध्येत य इमं लक्ष्यं वरयेथाः शुभेऽद्य तम् ॥ २२ C. 1. 7004 B. 1. 185. 24 K. 1. 201. 24

इति श्रीमहाभारते आदिपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

---

14 D1 (? hapl.) om. $14^{b}$–$15^{a}$. — $^{b}$) Ś1 Ñ3 V1 B1.3 Dn पुत्रश्चास्य; T1 °श्चैव; G6 °स्त्वस्य. Ś1 Ñ3 V1 Dn °रथः. — $^{c}$) K0 D5 त्रयः पुत्राः. — $^{d}$) K4 बलः; T1 चलः (for शलः).

15 D1 om. $15^{abc}$ (cf. v. l. 14). — $^{a}$) A few MSS. कांभोजो. — $^{b}$) K0.3.4 Ñ V1 B1.6 Da Dn D3 पौरवः (for कौ°). — $^{c}$) S (except T1 G6) सुवेषश्च. — After 15, N (for D4 see below) ins.:

1815* पटच्चरनिहन्ता च कारूपाधिपतिस्तथा ।
[ K (except K4) Da D3 करूपा°. ]

On the other hand, S ins. after 15:

1816* पाण्ड्यकेरलचोलेन्द्रास्त्रयस्त्रेताग्नयो यथा ।
आसनेषु विराजन्ते आशामागस्त्यमाश्रिताः ।

D4 (marg. *sec. m.*) ins. 1815* after 1816* (v. l. in line 2 of 1816*: भृशमादित्यसंनिभाः for the posterior half).

16 $^{ab}$) K1 रोहिणेयश्च (for रौक्मि°). S संकर्षणो रौहिणेयो वासुदेवश्च वीर्य°. — K3 om. $16^{c}$–$17^{b}$. — $^{c}$) Some MSS. शांबश्च. — $^{d}$) Ś1 सारणीयो गद°; K4 सारणश्चांगद°; Ñ2.3 V1 B3 Dn D1.4 प्राद्युम्निः सगद°(D1 °गण°); M6–8 सारणो निशठस्तथा.

17 K1 om. $17^{ab}$ (cf. v. l. 16). — $^{a}$) K4 S स(K4 T1 सा)त्यक(G1.2 °न)श्चैव (G6 सात्विकश्चैव). — D2 om. $17^{b}$–$18^{a}$. — $^{b}$) Ñ V1 B D (D2 om.) महाम(B3 D1 °द्यु)तिः. S युयुधानश्च सात्यकिः. — $^{d}$) K1 तथा (for पृथुर्). M6–8 पृथिवीं पृथुरेव च.

18 D2 om. $18^{a}$ (cf. v. l. 17). — $^{a}$) N (D2 om.) विदूरथश्च. K1 कद्रुश्च; T1 G1.3 M3 कण्व°; T2 M2.6–8 कह्व°; G1.3–5 कर्ण° (cf. 1. 1. $173^{d}$ and v. l.). — After $18^{a}$, K3 ins.:

1817* ये चान्ये यादवास्तथा ।
आगतास्तव हेतोश्च कृष्णे जानीहि सत्वरम् ।
कृतवर्मा च हार्दिक्यः (=$17^{c}$).

— N ins. after $18^{a}$ (K3, after 1817*; D2, which om. $17^{b}$–$18^{a}$, after $17^{a}$):

1818* शङ्कुश्च सगवेषणः ।
आशावहोऽनिरुद्धश्च.

[ (L. 2) K0.3.4 B (except B3) D (except Dn) आ(B1 m यु)गावहो. ]

— $^{b}$) B3.5 D1.3 शमीकः; G3 समीरः. K0.3.4 समरेजयः; Ñ V1 B D G1.6 M3 सारिमेजयः; T1 सारणो जयः. — $^{c}$) Ñ1 D5 S दानपतिश्चैव. — $^{d}$) Ś1 घल्ली; K1 हली; K3 D1 झल्ली; K4 भिल्ली. T1 झिल्लिवान्नारगस्तदा; T3 झिल्ली पिंगरवस्तथा; G1 झिल्ली विंगकर°; G2–6 M3.5 झिल्ली (G4.6 झल्ली; M5 सील्वी) पिंग(G2 पिंज-; G3.4 लिंग)रक°; G6 बाह्लिरांगारक°; M6–8 सल्ली पिंगरथ°. — K0 om. $18^{e}$–$19^{d}$. — $^{f}$) K1 वृष्णयोमी प्र°.

19 K0 om. 19 (cf. v. l. 18). — $^{a}$) D4 अथ (for च). G2.3.6 बृहद्रथः. — Da (hapl.) om. $19^{cd}$. — $^{c}$) K3 बृहद्रको; G3 जयद्रथो. — $^{d}$) B5 महाबलः. S श्रुतायुरथ वीर्यवान्.

20 $^{a}$) S कितवो. — $^{c}$) Ñ2.3 V1 B D मतिमान्; G1 विक्रांतः. — $^{d}$) Some N MSS. कोशला°; T2 G (except G1) कौसला°. S महान्. — After 20, D5 S ins.:

1819* कर्णश्च सह पुत्रेण वृषसेनेन वीर्यवान् ।
बृहद्बलश्च बलवान्राजा चैवाथ दुर्जयः ।
दमघोषात्मजश्चैव शिशुपालो महाबलः ।
चेदीनामधिपो वीरो बलवानन्तकोपमः ।

## १७८

C. 1. 7005
B. 1. 187. 1
K. 1. 202. 1

वैशंपायन उवाच ।

तेऽलंकृताः कुण्डलिनो युवानः
परस्परं स्पर्धमानाः समेताः ।
अस्त्रं बलं चात्मनि मन्यमानाः
सर्वे समुत्पेतुरहंकृतेन ॥ १

रूपेण वीर्येण कुलेन चैव
धर्मेण चैवापि च यौवनेन ।
समृद्धदर्पा मदवेगभिन्ना
मत्ता यथा हैमवता गजेन्द्राः ॥ २

परस्परं स्पर्धया प्रेक्षमाणाः
संकल्पजेनापि परिप्लुताङ्गाः ।
कृष्णा ममैवेत्यभिभाषमाणा
नृपासनेभ्यः सहसोपतस्थुः ॥ ३

ते क्षत्रिया रङ्गगताः समेता
जिगीषमाणा द्रुपदात्मजां ताम् ।
चकाशिरे पर्वतराजकन्या-
मुमां यथा देवगणाः समेताः ॥ ४

कन्दर्पबाणाभिनिपीडिताङ्गाः
कृष्णागतैस्ते हृदयैर्नरेन्द्राः ।
रङ्गावतीर्णा द्रुपदात्मजार्थं
द्वेष्यान्हि चक्रुः सुहृदोऽपि तत्र ॥ ५

अथाययुर्देवगणा विमानै
रुद्रादित्या वसवोऽथाश्विनौ च ।

---

[ For lines 3–4, cf. lines 2–3 of 1828*. ]

T1 G3–4 cont.:

1820* प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याः क्षितीश्वराः ।

On the other hand, K4 Ñ V1 B Da Dn D1.2.4 ins. after 20:

1821* शिशुपालश्च विक्रान्तो जरासंधस्तथैव च ।

21 d) Ś1 K D6 क्षितौ (for भुवि).

22 a) N (except K3 Ñ1) T1 G3 भेरस्यंति; T2 G1.2.4–6 M विध्यंति. — b) Ś1 K1 Ñ V1 B (except B6) Dn D1 M3.5 स्वदर्थे. Some MSS. लक्ष्यम्. — cd) Ś1 विध्यते; K1 विद्यते. K0–3 Ñ2.3 V1 B D य इदं. B Da D2.4.5 वरयेथाद्य तं शुभे (by transp.). S वेद्धा तु यो भवेदे(T2 °त्ते)षां तं वरं वरयस्व वै.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K1–4 Ñ3 B Da Dn1.n3 D2.4.5 T2 G2–4 M3 द्रौपदीस्वयंवर; M5 स्वयंवर; T1 संभव. — *Adhy. name:* K0.3.4 D5 राज्ञां नामानुकीर्तनं; T G2–4.6 क्षत्रियानु(G3 °त्रिय°; G4 °याणां)वर्णनं. — *Adhy. no.* (figures, words or both): Dn3 185; D1 181; D4m 187; T1 184; T2 G3.4.5 136; G1.2 138; G6 M 137. — *S'loka no.:* Dn3 24 (Dn1 25); M3 26. — *Aggregate s'loka no.:* Dn3 6976.

## 178

1 Ś1 K (except K0) D2 S (except M3) om. उवाच. — a) B3 कुशलिनो (m as in text). — b) Ñ2.3 V1 B D (except D5) नरेंद्राः (for समेताः); cf. 4a, 4d. Ñ1 °रं स्पर्धया प्रेक्ष्यमाणाः. — d) B6 सर्वे समापेतुर्. Ś1 (*sup. lin.*) K1 अलंकृतेन; Ñ2.3 V1 B D (except D5) उदायुधास्ते.

2 a) S वीर्येण रूपेण (by transp.). K0.2 Ñ1 T1 G1 बलेन चैव. — b) Ñ2.3 V1 B1.3.5 Dn D1 शीलेन; B6 Da D3.4 तथैव (for धर्मेण). Ś1 K1 शीलेन; K3 चार्थेन; Ñ2 V1 B1.6 D (except D5) वित्तेन; Ñ3 वृत्तेन; B3.5 चैवाथ; T1 धैर्येण (for चैवापि). G6 उत (for च). — c) Ś1 समृद्धवेगा; Ñ2.3 V1 B D समिद्धदर्पा. T1 G3 (by corr.) दशधा प्रभिन्ना; M मदवेगखिन्ना.

3 a) Ś1 K1 स्पर्धयै. Ś1 वीक्ष°; K वेक्ष्य°. — K0 om. 3bc. — b) K3–4 Ñ V1 B D M अभि- (for अपि). — c) K1 Ñ2.3 V1 Dn D2 T1 G2.4.6 ममैवेत्य°; Ñ1 ममायात्य°. — d) Ñ1 सहसोदतस्थुः; Ñ2.3 V1 B D °सोदतिष्ठन्. S नृपाः समुत्पेतुरथा(G1 समुत्पत्य तथा)सनेभ्यः.

4 b) Ñ1 T G (except G1) M3.5 जिहीर्षमाणा. — c) Ś1 K1 वरं शिवं (for चका°).

5 a) G1 °बाणेन नि°; G2 °बाणादिनि°; M6–8 संकल्प-

दुष्टेन मनसा यो वै प्रच्छन्नेनान्तरात्मना ।
ब्रूयान्निःश्रेयसं नाम कथं कुर्यात्सतां मतम् ॥ १४
न मित्राण्यर्थकृच्छ्रेषु श्रेयसे वेतराय वा ।
विधिपूर्वं हि सर्वस्य दुःखं वा यदि वा सुखम् ॥१५
कृतप्रज्ञोऽकृतप्रज्ञो बालो वृद्धश्च मानवः ।
ससहायोऽसहायश्च सर्वं सर्वत्र विन्दति ॥ १६
श्रूयते हि पुरा कश्चिदम्बुवीच इति श्रुतः ।
आसीद्राजगृहे राजा मागधानां महीक्षिताम् ॥ १७
स हीनः करणैः सर्वैरुच्छ्वासपरमो नृपः ।
अमात्यसंस्थः कार्येषु सर्वेष्वेवाभवत्तदा ॥ १८
तस्यामात्यो महाकर्णिर्बभूवैकेश्वरः पुरा ।
स लब्धबलमात्मानं मन्यमानोऽवमन्यते ॥ १९
स राज्ञ उपभोग्यानि स्त्रियो रत्नधनानि च ।
आददे सर्वशो मूढ ऐश्वर्यं च स्वयं तदा ॥ २०
तदादाय च लुब्धस्य लाभाल्लोभो व्यवर्धत ।
तथा हि सर्वमादाय राज्यमस्य जिहीर्षति ॥ २१
हीनस्य करणैः सर्वैरुच्छ्वासपरमस्य च ।
यतमानोऽपि तद्राज्यं न शशाकेति नः श्रुतम् ॥२२
किमन्यद्विहितान्नूनं तस्य सा पुरुषेन्द्रता ।
यदि ते विहितं राज्यं भविष्यति विशां पते ॥ २३
मिषतः सर्वलोकस्य स्थास्यते त्वयि तद्ध्रुवम् ।
अतोऽन्यथा चेद्विहितं यतमानो न लप्स्यसे ॥ २४
एवं विद्धयुपादत्स्व मन्त्रिणां साध्वसाधुताम् ।
दुष्टानां चैव बोद्धव्यमदुष्टानां च भाषितम् ॥ २५ C. 1. 7484 B. 1. 204. 25 K. 1. 223. 25

---

स तन्मतं; V1 B1.3 सतां मतः; D1 सनातनं.
15 ᵃ) Ś1 K1 न मित्राण्यतिकृ°; D2.5 अमित्रा°; G3 निमित्तान्यर्थ°. — ᵇ) K2 न; K4 Ñ V1 B D (except D1) M5 च (for the first वा). K2 Dn3 D1 च (for the second वा).
16 ᵃ) K0 कृतप्रज्ञोथ बालो वा; Ñ1 कृतज्ञो वाकृतज्ञो वा; T3 G2-4 शुचिर्दक्षो यतप्रज्ञो. — ᵇ) K0 युवा (for बालो). Ś1 अपि (for च). K3 भारत (for मानवः). K1 बालो वा यदि वा नरः. — ᶜ) Ś1 K1 Ñ1 D5 वा (for च).
17 ᵇ) Ś1 K1 D2m G5.6 अंबरीष; D5 अमघोष; G1 विनिंदक. Ñ V1 B D ईश्वरः (Ñ1 D5 श्रुतिः) (for श्रुतः). K2 °वीचीति विश्रुतः; T G2-4 M विनिंद इति विश्रुतः. — ᶜ) T3 G1.2.4 M राजकुले. — ᵈ) Ś1 Ñ1 B3 G1 M2.3.8 मगधानां. Ñ1 T G (except G1) महीपतिः.
18 T1 (hapl.) om. 18ᵇ–22ᵃ. — ᶜᵈ) B1 पूर्वे°; G3 सर्वे° (for कार्ये°). K2 Ñ V1 B3.5 D T3 G2-6 transp. कार्ये° and सर्वेषु. B1.6 कार्ये°; G2 कामे° (for सर्वे°). — After 18, S (except T1) ins.:
1970* तस्यामात्या बभूवुस्ते अन्योन्यसहितास्तदा ।
19 T1 om. 19 (cf. v. l. 18). — ᵃ) K2 M6-8 महाकीर्तिः; T3 G2-6 °कर्णी; G1 M3 बाहुकर्णिः; G3 °कर्णः. — ᵇ) K2 Ñ2.3 V1 B5 Dn D1 तदा; B1.6 Da D2.4 तथा; T3 G3.4 पुरः; M3 (*inf. lin.* as in text) क्षितौ (for पुरा). — ᵈ) K2 अवमान्यो (m अवमानो). Ś1 न मन्यत; K1 अन्वमन्यत; Ñ1 °मन्य तं; Da अवमन्यत; T3 G2.4 विमन्यते.
20 T1 om. 20 (cf. v. l. 18). — ᵃ) Ś1 K0.1 Dn3 उपयोज्यानि; K3 °भोज्यानि; T3 G (except G1) वसुरत्नानि. — ᵇ) K1 स्त्रियं. K0.1 B2.5 Da M2.3 रत्नं. T3 G (except G1) स्त्रियो भोज्यानि यानि च. — ᶜ) Ś1 सर्वगो; S (T1 om.) °तो. — ᵈ) A few MSS. तथा (for तदा).
21 T1 om. 21 (cf. v. l. 18). — ᵃ) K1 लाभस्य; D5 मूढस्य. — ᵇ) K3 Ñ2.3 V1 B (except B3) Da2 Dn1 T3 G2-5 लोभात् (for ला°). K2 T3 G लाभः (for लोभः). K0.3 -स्यवर्तत; K1.4 -स्यवर्धत; Ñ1 -त्ववर्तत; Ñ2.3 V1 B D (for Da1 see below) M5.7 -व्यवर्ध(Dn2 °र्ते)त; T3 G (except G1) प्रवर्तते. Da1 लाभोप्यस्य च वर्धते. — ᵈ) Ś1 Dn3 एष; K1 एव; M7 अद्य (for अस्य). B5 चिकीर्षति; G1 जिगीषते.
22 T1 om. 22ᵃ (cf. v. l. 18). — ᵃ) Ñ1 सबलैः (for करणैः). — ᵇ) K3 हि; G1 M इ. — ᶜᵈ) S °मानो न शक्नोति राज्यं हर्तुं(T G2-4.6 कर्तुं)मिति श्रुतिः.
23 ᵃ) K0.3 Ñ V1 B D (except D1) Cd विहिता; G1 विहितं. V1 तत्र; T G (except G1) एव (for नूनं). — After 23ᵃᵇ, K2 ins.:
1971* यत्तस्य राज्यं सामात्यो न शक्नोत्यभिवर्धितुम् ।
— ᵈ) T G (except G1) °ति न संशयः.
24 ᵇ) Ś1 K0.2.4 स्थास्यति. T1 त्वथ; M6.7 यदि (for त्वयि). G1 च त्वयि (for त्वयि तद्). Ñ1 स्थापयिष्यामि च ध्रुवं. — ᶜ) Ś1 K1 D5 त्वे (for चेत्).
25 ᵃ) Ś1 T G (except G1) विद्वान्; D5 -विधम्. — ᵇ) M5 मित्राणां. Ś1 K1 साधुसाधुतां(!). — ᵈ) Ś1 K1 तथैव च; K0.2.4 च भारत.
26 Ś1 K1 T1 G1.2.5.6 M om. उवाच. T3 G2.4

C. 1. 7485
B. 1. 204. 20
K. 1. 223. 20

द्रोण उवाच ।
विद्म ते भावदोषेण यदर्थमिदमुच्यते ।
दुष्टः पाण्डवहेतोस्त्वं दोषं ख्यापयसे हि नः ॥ २६
हितं तु परमं कर्ण ब्रवीमि कुरुवर्धनम् ।
अथ त्वं मन्यसे दुष्टं ब्रूहि यत्परमं हितम् ॥ २७
अतोऽन्यथा चेत्क्रियते यद्ब्रवीमि परं हितम् ।
कुरवो विनशिष्यन्ति नचिरेणेति मे मतिः ॥ २८

इति श्रीमहाभारते आदिपर्वणि षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

## १९७

विदुर उवाच ।
राजन्निःसंशयं श्रेयो वाच्यस्त्वमसि बान्धवैः ।
न त्वशुश्रूषमाणेषु वाक्यं संप्रतितिष्ठति ॥ १
हितं हि तव तद्वाक्यमुक्तवान्कुरुसत्तमः ।
भीष्मः शांतनवो राजन्प्रतिगृह्णासि तन्न च ॥ २
तथा द्रोणेन बहुधा भाषितं हितमुत्तमम् ।
तच्च राधासुतः कर्णो मन्यते न हितं तव ॥ ३
चिन्तयंश्च न पश्यामि राजंस्तव सुहृत्तमम् ।
आभ्यां पुरुषसिंहाभ्यां यो वा स्यात्प्रज्ञयाधिकः ॥ ४
इमौ हि वृद्धौ वयसा प्रज्ञया च श्रुतेन च ।
समौ च त्वयि राजेन्द्र तेषु पाण्डुसुतेषु च ॥ ५
धर्मे चानवमौ राजन्सत्यतायां च भारत ।

---

विदुरः (for द्रोण उ°). — c) Ñ2.3 V1 B6 Dn1.n3 D1 M5 दुष्ट- (for दुष्टः). — d) M6-8 दोषान्. Ñ हि तं; T G2-4 च नः; G5.6 M -स्मनः. K2 Ñ2.3 V1 B D (except D5) दोषमाख्यापयस्युत.

27 b) Ś1 K0.1.3.4 कुरुनंदनं; K2 Ñ2.3 V1 B D (except D5) कुलवर्धनं. — c) K3 M6.7 तत् (for त्वं). — d) Ś1 तव; K1 त्वं (for यत्). Ś1 हि तत्; K4 हि नः (for हितं).

28 V1 Da2 G6 M7 (hapl.) om. 28ab. — b) Ś1 K1 D1 तद् (for यद्). B3 D2.4 G4 ब्रवीषि; T2 G2.3.5 °हि. K3 G1 M3.5.6 ब्रवीषि (K3 °हि) परमं हितं. — c) K2.4 वै (K4 -पि) विनश्यंति; Ñ2.3 V1 B D (except D5) वै विनंक्ष्यंति; G (G4 before corr.) -पि नशिष्यंति. — d) G1 अ- (for न-). T2 G2-4 मतं (for मतिः). K0.2.4 Ñ2.3 Dn D1 G5.6 °णैव मे मतिः; K3 °णैव मन्यते; V1 B Da2 D3.4 °णैव ते मते.

Colophon om. in Ś1 K1. — *Major parvan:* T2 G M3.5.7 संभव° (for आदि°). — *Sub-parvan:* K0 B5 विदुरागमन; T1 संभव. — *Adhy. name:* K0.3.4 Ñ1.2 V1 द्रोणवाक्यं; D5 धृतराष्ट्रमंत्रणं; M5 मंत्राधिकारः. — *Adhy. no.* (figures, words or both): Dn3 203; D1m 211; D5 154; T1 209; T2 G4-6 161; G1.3 163; G2 159; M 162. — *S'loka no.:* Dn 28; M3 29. — *Aggregate s'loka no.:* Dn2 7466.

### 197

1 Ś1 K1 S om. उवाच. — a) Ś1 K Ñ1 G3 निःश्रेयसं; Ñ3 V1 नः संशयं. — c) K2 D1 न त्वं शुश्रू°; Ñ1 उक्तं शुश्रू°; Ñ2.3 V1 Dn °माणे वै; D2 S न त्वं (T1 स त्वं; G1 M3.6-8 तत्त्वं) शुश्रूषमाणो वै (T1 G1 M हि). — d) Ñ3 राज्यं; D5 वाच्यं. T1 G6 M6-8 °तिष्ठसि; T2 G2-4 संप्रीतिमिच्छसि; G1 °तुष्यसि; G5 °तीर्पसि; M3 न प्रतितिष्ठसि.

2 a) K0.3 M3.5 यद् (for तद्). K2 N2.3 Dn2.n3 D1.2.5 प्रियं हितं च (D2 हि) तद्वाक्यं; K4 हितं हितं वो यद्वा°; V1 हितं हि भवतो वा°; B1.3.5 Dn1 D4 प्रियं हितं च यद्वा°; B6 Da हिताद्धिततरं वा°. — b) K4 Ñ V1 B1.3 Da Dn D1.5 G1.3.6 M3.5.8 °सत्तमः (as in text); the rest °सत्तम. — c) T2 G (except G1) राजा (for राजन्). — d) Ś1 K1 प्रतिगृण्ही(Ś1 °ण्हे)ष तन्न च; Ñ1 B5 D5 न च गृण्हासि तद्वचः; T2 G (except G1) महावीर्यपराक्रमः.

3 a) Ś1 K1 गुरुणा (for बहुधा). T2 G3.4 आचार्येण च द्रोणेन; G2 आचार्येण तथा चैव. — b) K2 °षितं तव यद्धितं; D5 हितमुक्तमनुत्तमं. — d) K0.3.4 S वचः.

4 b) K2 राजन्सुबहुकृन्मम.

5 a) Da D3 G1 इमौ वृद्धौ च वयसा; T2 इमौ वरेण्यौ वृद्धौ हि; G3.4 इमौ हि वृद्धौ वरेण्यौ. — b) K2 श्रुतेपि च. T2 G (except G1) राजनीतिविशारदौ. — c) T2 G (except G1) समानौ (for समौ च). Ś1 K (except K3) D5 transp. च and त्वयि. — d) K2 Ñ2.3 B D (except D5) तथा (for तेषु). Ś1 राज° (for पाण्डु°).

रामाद्दाशरथेश्चैव गयाच्चैव न संशयः ॥ ६
न चोक्तवन्तावश्रेयः पुरस्तादपि किंचन ।
न चाप्यपकृतं किंचिदनयोर्लक्ष्यते त्वयि ॥ ७
ताविमौ पुरुषव्याघ्रावनागसि नृप त्वयि ।
न मन्त्रयेतां त्वच्छ्रेयः कथं सत्यपराक्रमौ ॥ ८
प्रज्ञावन्तौ नरश्रेष्ठावस्मिँल्लोके नराधिप ।
त्वन्निमित्तमतो नेमौ किंचिज्जिह्मं वदिष्यतः ।
इति मे नैष्ठिकी बुद्धिर्वर्तते कुरुनन्दन ॥ ९
न चार्थहेतोर्धर्मज्ञौ वक्ष्यतः पक्षसंश्रितम् ।
एतद्धि परमं श्रेयो मेनाते तव भारत ॥ १०
दुर्योधनप्रभृतयः पुत्रा राजन्यथा तव ।
तथैव पाण्डवेयास्ते पुत्रा राजन्न संशयः ॥ ११
तेषु चेदहितं किंचिन्मन्त्रयेयुरबुद्धितः ।
मन्त्रिणस्ते न ते श्रेयः प्रपश्यन्ति विशेषतः ॥ १२
अथ ते हृदये राजन्विशेषस्तेषु वर्तते ।
अन्तरस्थं विवृण्वानाः श्रेयः कुर्युर्न ते ध्रुवम् ॥ १३
एतदर्थमिमौ राजन्महात्मानौ महाद्युती ।
नोचतुर्विवृतं किंचिन्न ह्येष तव निश्चयः ॥ १४
यच्चाप्यशक्यतां तेषामाहतुः पुरुषर्षभौ ।
तत्तथा पुरुषव्याघ्र तव तद्भद्रमस्तु ते ॥ १५
कथं हि पाण्डवः श्रीमान्सव्यसाची परंतपः ।
शक्यो विजेतुं संग्रामे राजन्मघवता अपि ॥ १६
भीमसेनो महाबाहुर्नागायुतबलो महान् ।
कथं हि युधि शक्येत विजेतुममरैरपि ॥ १७

C. 1. 7504
B. 1. 205. 17
K. 1. 224. 19

---

6 a) Ñ2.3 V1 B5.6 Dn D1.2.4 चानवरौ; D5 चानिरतौ; Cd as in text. Ñ1 B5 वीरौ (for राजन्). — b) T3 G2-4 सत्यवाक्ये (for °तायां). G3 om. from च भारत up to °गसि in $8^{b}$. — d) K2 (m as in text) भार्गवाश्च न सं°.

7 G3 om. 7 (cf. v. l. 6). — c) Ś1 K0.3 चापि कृतकं; K4 चाप्यनृतकं; Ñ1 D5 चापि विकृतं. — d) Ś1 K (except K2) M8 क्वचित्; G1 [ऽ]नघ (for त्वयि). Ñ1 ताभ्यां क्वचन शुश्रुम.

8 Dn1 M7 (hapl.) om. $8^{ab}$; G3 om. up to °गसि (cf. v. l. 6). — a) K2 Ñ2.3 B D (except D5) T3 G (G3 om.) तावुभौ. — b) Ñ2.3 B1.5.6 Dn D2.4.5 नृपे. — c) T3 G (except G1.2) तच्छ्रेयः. — d) K0 D5 °परायणौ.

9 a) T G (except G1) नृपश्रेष्ठ; M5 नरश्रेष्ठ. — c) M (except M8) इतो (for अतो). K2 Ñ1 V1 नेतौ. — After $9^{cd}$, K4 ins.:

1972* एतदर्थमिमौ राजन्महात्मानौ महाद्युती ।

— e) B6 Da निश्चिता (for नैष्ठिकी). — f) K4 च नरोत्तम; Ñ1 B1.3 Da D5 कुरुसत्तम.

10 a) T3 G4 कामाद्वा; G2.3 नः कामात् (for धर्मज्ञौ). — b) K4 B6 °संश्रितौ. T3 G2-4 न संघर्षाच्च संश्रि°. — G6 (hapl.) om. $10^{d}$–$12^{c}$. — d) K2.4 Ñ2.3 V1 B Da Dn D1.2.4 मन्येहं; K3 Ñ1 D5 मन्येते; Cd as in text. Da1 भरतर्षभ; D2 तव पार्थिव.

11 G6 om. 11 (cf. v. l. 10); B3 (hapl.) om. $11^{bc}$. — b) K2 यथा राजन्सुतास्तथा. — c) T1 तथैव पांडवास्ते वै.

12 G6 om. $12^{abc}$ (cf. v. l. 10). — a) K0.2.4 तेषु ये चाहितं. — G1 (hapl.) om. $12^{b}$–$14^{c}$. — b) Ñ3 Dn °तद्विदः; S (G1.6 om.) °बुद्धयः. — c) K3 Ñ2.3 B D G3 च (for ते). — d) G5.6 वि° (for प्र°).

13 G1 om. 13 (cf. v. l. 12). — b) K3 Ñ2.3 B D (except D5) M स्तेषु. Ś1 विश° (for वर्त°). — c) Ñ1 अंतरं ते; M2.5 अंतःस्थं तं; Cd as in text.

14 G1 om. $14^{abc}$ (cf. v. l. 12). — ab) Ś1 °र्थं महाराज. S (G1 om.) transp. इमौ राजन् and महा°. — c) Ñ1 Dn1.n3 D1 Nilp विकृतं.

15 a) D5 न च; S तथा (for यच्च). Ś1 न चापि शक्यास्ते जेतुं; K1 यच्चाप्यशकितस्तेषां. — b) Ś1 K1 महांतः पुरुषर्षभाः. — d) K0.2.4 सर्वथा भद्र°.

16 b) Ś1 K1 परंतप; K3 Ñ2.3 B D (except D5) G5.6 धनंजयः. — c) T3 G2-4 °क्योवगंतुं; G5.6 °क्यो हि जेतुं. — d) Ś1 K1 (m as in text) त्वयि; K0.3.4 D5 -पि सः; K2 Ñ V1 B Da Dn D1.2.4 -पि हि; T3 G2-4 -पि च (for अपि).

17 b) T3 G2-4 M3 °युतसमो बले. — After $17^{ab}$, D4 (marg. *sec. m.*) ins.:

1973* राक्षसाणां क्षयकरो बाहुशाली महाबलः ।
हिडिम्बो निहतो येन बाहुयुद्धेन भारत ।
यो रावणसमो युद्धे तथा च बकराक्षसः ।
स युध्यमानो राजेन्द्र भीमो भीमपराक्रमः ।
उद्योगं त्वत्कृतं श्रुत्वा युद्धार्थे पाण्डवैः सह ।
आगमिष्यन्ति सर्वे वै यादवाः शलभा इव ।

G. 1. 7505 B. 1. 205. 18 K. 1. 204. 20 तथैव कृतिनौ युद्धे यमौ यमसुताविव ।
कथं विषहितुं शक्यौ रणे जीवितुमिच्छता ॥ १८
यस्मिन्धृतिरनुक्रोशः क्षमा सत्यं पराक्रमः ।
नित्यानि पाण्डवश्रेष्ठे स जीयेत कथं रणे ॥ १९
येषां पक्षधरो रामो येषां मन्त्री जनार्दनः ।
किं नु तैरजितं संख्ये येषां पक्षे च सात्यकिः ॥ २०
द्रुपदः श्वशुरो येषां येषां श्यालाश्च पार्षताः ।
धृष्टद्युम्नमुखा वीरा भ्रातरो द्रुपदात्मजाः ॥ २१
सोऽशक्यतां च विज्ञाय तेषामग्रेण भारत ।
दायाद्यतां च धर्मेण सम्यक्तेषु समाचर ॥ २२
इदं निर्दिग्धमयशः पुरोचनकृतं महत् ।
तेषामनुग्रहेणाद्य राजन्प्रक्षालयात्मनः ॥ २३
द्रुपदोऽपि महान्राजा कृतवैरश्च नः पुरा ।
तस्य संग्रहणं राजन्स्वपक्षस्य विवर्धनम् ॥ २४
बलवन्तश्च दाशार्हा बहवश्च विशां पते ।
यतः कृष्णस्ततस्ते स्युर्यतः कृष्णस्ततो जयः ॥ २५
यच्च साम्नैव शक्येत कार्यं साधयितुं नृप ।
को दैवशप्तस्तत्कर्तुं विग्रहेण समाचरेत् ॥ २६
श्रुत्वा च जीवतः पार्थान्पौरजानपदो जनः ।
बलवद्दर्शने गृध्नुस्तेषां राजन्कुरु प्रियम् ॥ २७
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
अधर्मयुक्ता दुष्प्रज्ञा बाला मैषां वचः कृथाः ॥ २८
उक्तमेतन्मया राजन्पुरा गुणवतस्तव ।
दुर्योधनापराधेन प्रजेयं विनशिष्यति ॥ २९

इति श्रीमहाभारते आदिपर्वणि सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

---

— c) K2 Ñ2 V1 B1.3.6 D (except D5) T1 G5.6 स; Ñ1 तु; Ñ3 B5 स (for हि). T3 G2–4 शक्यस्तु.

18 c) Ñ1 B (except B3) विसहितुं; Da विषहितौ; T3 G2–4 विजयितुं. T3 G2–4 युद्धे (for शक्यौ). Ñ2.3 Dn D1.2 कथं विजेतुं शक्यौ तौ; V1 कथंचित्सहितुं युद्धे. — d) T3 G2–4 शक्यौ (for रणे). B6 Da G2 M6–8 जीवितम्.

19 c) Ś1 K2 Ñ2.3 V1 B1.3 D पांडवे ज्येष्ठे; K0.4 M8 °वज्येष्ठे. — d) Ś1 K जेतव्यः स; B5 स विजीयेत्; T1 G5.6 स जीयाश्च; G3 संजीयेत. Ś1 कथंचन; Ñ3 V1 B D (except D5) रणे कथं (by transp.).

20 a) T3 G2.3 पक्षे हितो. — b) T1 G6 च केशवः (for जना°). — K0 (hapl.) om. 20d–21a. — d) Da D4 पक्षे तु; S पक्षश्च.

21 K0 om. 21a (cf. v. l. 20). — a) T1 द्रुपदश्च गुरुर्येषां. — b) S (mostly) स्यालाः. — After 21, T1 G5.6 ins.:

1974* चैद्यश्च येषां भ्राता च शिशुपालो महारथः ।

22 a) Ś1 K1 यच्छल्यतां; K0.3 सोवश्यतां; K2 सोसह्यतां; Ñ1 B5.6 D3.4.5 अशक्यतां. — b) Ś1 K1 तेजसोग्रेण; K0.2.3 B3 D4 G5.6 °सुग्रेण; K4 तेषां यत्नेन; Ñ V1 B6 Dn D1.2 °मग्रे च; T G1–4 M °षां युद्धेन (T1 °द्धे च). K2 वर्ततां (for भारत). — K4 repeats 22ab (with v. l. सोमकानां for सोऽशक्यतां). — D1 om. 22cd. — c) Ś1 K1.2 Ñ1 B (except B6) D3.4 T G3.4 दायादतां; G2 दायादानां. — d) Ś1 सामान्येन; K0.4 D5 तेषु सम्यक् (by transp.); K1 संमतेषु; K2 °क्तेन; K3 °क्तेषां.

23 a) Ś1 K1 प्रदिग्धं; K0 V1 B1 Da1 D4 T1 G1.5.6 M6–8 निर्दग्धं; Ñ2.3 B1m.6 Da2 Dn D1.2 T3 G2–4 निर्दिष्टं; M5 निषिद्धं. Ñ1 इदानीं दग्ध°. — After 23, N T1 G5.6 ins.:

1975* तेषामनुग्रहश्चायं सर्वेषां चैव नः कुले ।
जीवितं च परं श्रेयः क्षत्रस्य च विवर्धनम् ।

[(L. 2) Ñ1 T1 G6 परमं (for च परं). K3 Da D4.5 G5 क्षत्रियस्य विव°.]

24 Ś1 K1 (? hapl.) om. 24 (see 1975*). — a) K0.2.4 च; K3 D5 T3 G2–4 M (except M8) हि (for अपि). K0.3.4 B3 D1.5 T1 G1 महाराज; Ñ1 T3 G2–4 महाराजः. — b) K0 Ñ1 D5 हि; K4 -पि (for च). K4 वर्तते; B5 नः कुले. — c) Ñ1 °हणाद्. S श्रेयः (for राजन्). — d) T1 G5.6 °स्य च वर्ध°; T3 G2–4 °स्यापि वर्ध°.

25 a) Ś1 K1 दायाहीं. — c) Ñ B D सर्वे (Ñ1 D5 धर्मो) (for ते स्युर्). — d) Ñ1 D5 धर्मः (for कृष्णः).

26 a) Ś1 K0.1.3 Ñ1 V1 D5 यत्तु; K4 B6 यत्र. S सांत्वेन. T3 G2–4 शक्यं तु (for शक्येत). — c) K0 G1.6 देवशप्तस्; K2 दैववश्यं; K3 G5 दैवशक्तस्; Ñ1 दैवयुक्तस्; G2 M (except M8) देवशक्तस्. Ñ2.3 V1 B D कार्यं (for कर्तुं). — d) V1 T3 G (except G5) M8 समारभेत्.

27 a) K2 जीवितान्. — b) Ś1 K1 °पदा जनः (sic); K3 Ñ V1 B °पदा जनाः (D5 °पदास्तव). — c) T3 G2–4 बलवान्. S (except T1 G5.6) मुदितो (for दर्शने). K0.3 गृद्धः; K2 Ñ2.3 V1 B Dn D1.3.4 हृष्टाः; K4 हृष्टः; Ñ1 Da गृद्धाः; D5 गृध्नाः; T3 G2–4 जातः; G1 गूढः.

## १९८

धृतराष्ट्र उवाच ।

भीष्मः शांतनवो विद्वान्द्रोणश्च भगवानृषिः ।
हितं परमकं वाक्यं त्वं च सत्यं ब्रवीषि माम् ॥ १
यथैव पाण्डोस्ते वीराः कुन्तीपुत्रा महारथाः ।
तथैव धर्मतः सर्वे मम पुत्रा न संशयः ॥ २
यथैव मम पुत्राणामिदं राज्यं विधीयते ।
तथैव पाण्डुपुत्राणामिदं राज्यं न संशयः ॥ ३
क्षत्तरानय गच्छैतान्सह मात्रा सुसत्कृतान् ।
तया च देवरूपिण्या कृष्णया सह भारत ॥ ४
दिष्ट्या जीवन्ति ते पार्था दिष्ट्या जीवति सा पृथा ।
दिष्ट्या द्रुपदकन्यां च लब्धवन्तो महारथाः ॥ ५
दिष्ट्या वर्धामहे सर्वे दिष्ट्या शान्तः पुरोचनः ।
दिष्ट्या मम परं दुःखमपनीतं महाद्युते ॥ ६

वैशंपायन उवाच ।

ततो जगाम विदुरो धृतराष्ट्रस्य शासनात् ।
सकाशं यज्ञसेनस्य पाण्डवानां च भारत ॥ ७
तत्र गत्वा स धर्मज्ञः सर्वशास्त्रविशारदः ।
द्रुपदं न्यायतो राजन्संयुक्तमुपतस्थिवान् ॥ ८

C. 1. 7526
B. 1. 206. 9
K. 1. 225. 10

---

— $^{d}$) $K_3$ Ñ $V_1$ B D (except $D_5$) transp. कुरु and प्रियं. — After 27, $K_3$ reads (with v. l.) st. 3-4 and $8^{ab}$ of adhy. 198 (repeating them in their proper places).

28 $^{b}$) $K_2$ $B_{1,3}$ Da एव (for अपि). — $^{c}$) $G_{5,6}$ अधर्मांश्चापि दु°.

29 $^{ab}$) $K_3$ $Ñ_{2,3}$ $B_6$ D (except $D_5$) transp. मया पुरा. $T_3$ $G_{3-6}$ महाराज (for मया राजन्). — $^{d}$) $K_4$ T $G_{3-6}$ प्रज्ञेयं. $K_2$ $Ñ_{2,3}$ B D वै ($D_{2,3}$ ते) विनंक्ष्यति; $K_3$ °क्ष्यते; $T_1$ $G_{1,5,6}$ M तव नश्यति. — After 29, $T_3$ $G_{2-4}$ ins. a passage of 29 lines given in App. I (No. 104).

Colophon. *Major parvan:* $T_3$ G M संभव° (for आदि°). — *Sub-parvan:* Ko $B_5$ विदुरागमनं; $T_1$ संभव. — *Adhy. name:* $K_{0,3,4}$ विदुरवाक्यं; $D_5$ विदुरसंत्रणं; $M_{3,5}$ मंत्राधिकारे विदुरवचनं. — *Adhy. no.* (figures, words or both): Dn$_3$ 204; $D_4$m 212; $D_5$ 155; $T_1$ 210; $T_3$ $G_4$ M 163; $G_1$ 164; $G_2$ 160; $G_3$ 165; $G_{5,6}$ 162. — *S'loka no.:* Dn $M_3$ 30. — *Aggregate s'loka no.:* Dn$_3$ 7496.

### 198

1 $Ś_1$ $K_{1,2}$ S om. उवाच. — $^{a}$) $T_1$ चैव (for विद्वान्). — $^{b}$) S द्रोणश्चैव महाद्युतिः ($G_{2,5,6}$ °मतिः). — $^{c}$) $T_3$ $G_{3-4}$ इदं (for हितं). $Ñ_{2,3}$ Dn $D_{1,2,5}$ S (except $T_1$ $G_{5,6}$) च परमं (for परमकं). — $^{d}$) $Ñ_1$ मन्ये (for सत्यं). $K_1$ मे; $M_{3,5}$ मा.

2 $^{a}$) $Ñ_3$ $D_1$ पांडवाः (for पाण्डोस्ते). — $^{b}$) $K_4$ $B_5$ $T_1$ महाबलाः.

3 $Ñ_3$ (hapl.) om. 3; $T_1$ (hapl.) om. $3^{bc}$. — $^{b}$) $B_5$ $D_5$ असंशयं (for विधी°). — $^{d}$) $Ś_1$ $K_1$ $B_{3,6}$ $T_1$ असंशयं; Ko असंशयः; $G_6$ नसंशयं.

4 $^{a}$) K (except $K_1$) $D_5$ M (except $M_3$) क्षत्त (for क्षत्तर्). $T_3$ $G_{2-4}$ गत्वा (for गच्छ). $Ś_1$ $K_1$ पुनान् (for एतान्). — $^{b}$) $Ś_1$ $K_{0,4}$ $D_5$ transp. सह and मात्रा. $K_{0,2,4}$ $T_1$ परंतपान् (for सुसत्कृ°). — $^{d}$) $K_2$ पांडवान्; $V_1$ संगतान्; $B_5$ Dn भारतान् (for भारत).

6 $^{c}$) Da मम पुनर्; $G_{1,2}$ $M_3$ च परमं; $M_{6-8}$ परमकं; Cd मम महत् (for मम परं). — $^{d}$) $K_4$ महामते; Cd °द्युते (as in text). — After 6, $G_{5,6}$ ins.:

1976* त्वमेव गत्वा विदुर तानिहानय माचिरात् ।

7 $Ś_1$ K (except Ko) S om. उवाच. — After वैशं°, $G_{5,6}$ ins.:

1977* एवमुक्तस्ततः क्षत्ता रथमारुह्य शीघ्रगम् ।
अगात्कतिपयाहोभिः पाञ्चालान्राजधर्मवित् ।

— After 7, $K_{0,2,4}$ Ñ $V_1$ B D ins.:

1978* समुपादाय रत्नानि वसूनि विविधानि च ।
द्रौपद्याः पाण्डवानां च यज्ञसेनस्य चैव हि ।

[ (L. 1) $D_5$ स गत्वा समुपादाय (for समु° रत्नानि). $Ñ_1$ transp. वसूनि and विवि°. $D_5$ रत्ना° (for वसू°). — (L. 2) $D_5$ पांडवेयानां (for पाण्डवानां च). ]

On the other hand, $G_{5,6}$ ins. after 7:

1979* आगतं विदुरं श्रुत्वा द्रुपदो राजसत्तमः ।
स्वपुत्रैः सह धर्मात्मा पूजयामास धर्मतः ।

C. 1. 7527
B. 1. 206. 10
K. 1. 225. 11

स चापि प्रतिजग्राह धर्मेण विदुरं ततः ।
चक्रतुश्च यथान्यायं कुशलप्रश्नसंविदम् ॥ ९
ददर्श पाण्डवांस्तत्र वासुदेवं च भारत ।
स्नेहात्परिष्वज्य स तान्पप्रच्छानामयं ततः ॥ १०
तैश्चाप्यमितबुद्धिः स पूजितोऽथ यथाक्रमम् ।
वचनाद्धृतराष्ट्रस्य स्नेहयुक्तं पुनः पुनः ॥ ११
पप्रच्छानामयं राजंस्ततस्तान्पाण्डुनन्दनान् ।
प्रददौ चापि रत्नानि विविधानि वसूनि च ॥ १२
पाण्डवानां च कुन्त्याश्च द्रौपद्याश्च विशां पते ।
द्रुपदस्य च पुत्राणां यथा दत्तानि कौरवैः ॥ १३
प्रोवाच चामितमतिः प्रश्रितं विनयान्वितः ।
द्रुपदं पाण्डुपुत्राणां संनिधौ केशवस्य च ॥ १४
राजञ्शृणु सहामात्यः सपुत्रश्च वचो मम ।
धृतराष्ट्रः सपुत्रस्त्वां सहामात्यः सबान्धवः ॥ १५
अब्रवीत्कुशलं राजन्प्रीयमाणः पुनः पुनः ।
प्रीतिमांस्ते दृढं चापि संबन्धेन नराधिप ॥ १६
तथा भीष्मः शांतनवः कौरवैः सह सर्वशः ।
कुशलं त्वां महाप्राज्ञः सर्वतः परिपृच्छति ॥ १७
भारद्वाजो महेष्वासो द्रोणः प्रियसखस्तव ।
समाश्लेषमुपेत्य त्वां कुशलं परिपृच्छति ॥ १८
धृतराष्ट्रश्च पाञ्चाल्य त्वया संबन्धमीयिवान् ।
कृतार्थं मन्यतेऽऽत्मानं तथा सर्वेऽपि कौरवाः ॥ १९

---

8 a) Ś1 G5.6 च; T1 तु; T3 G3-4 सु- (for स). Ko.3.4 धर्मात्मा. — c) K1 T1 °विदां वरः. — d) B6 T3 G3-4 सपुत्रम्; Cd संदुक्तम् (as in text). M8 (inf. lin. as in text).5 उपजग्मिवान्.

9 b) Ñ1 धर्मतो. Ñ1 नृपः; T3 G4 तथा; G2.3 तदा. — After 9ab, G5.6 ins.:

1980* चक्रे पूजां यथान्यायं विदुरस्य महात्मनः ।

— c) B1 °तुस्तौ; B1 m.3 °तुर्वै; D1 ऊचतुश्च; T1 चक्रे पूजां. — d) T3 G3-4 °संमितं; G1 M °संहितं; Cd as in text.

10 b) M5 च यादवं. — c) T3 G3-4 M7 च (for स). T1 G5.6 ततः स्नेहात्परिष्वज्य. — d) T3 G3-4 तदा.

11 G5.6 transp. 11ab and 11cd. — b) Ñ1.2 Dn D1.3 हि (for ऽथ). — After 11, G5.6 ins.:

1981* पाण्डवा विनयोपेता नत्वालिङ्ग्य विशां पते ।
दृष्ट्वा मुहुर्मुहू राजन्हर्षादश्रूण्यवर्तयन् ।

[ Posterior half of line 2 = (var.) 1. 105. 26d. ]

12 a) Ś1 तात; D1 तत्र (for राजन्). S दृष्ट्वा कुशलिनश्चैतान्. — c) Ś1 K (except K3) प्रदाय तेभ्यो; B3 प्रददावपि. — d) Ś1 K3 Ñ1 D1 G1 M8 transp. विवि° and वसू°. D5 T3 G3-4 धनानि विविधानि च.

13 a) Ś1 K (except K2) Ñ1 D5 पांडवेभ्यः. — b) B5 S विशेषतः (for विशां पते). — c) Ś1 K (except K3) Ñ1 D5 पुत्रेभ्यो. — D1 (hapl.) om. 13d-14c. — After 13, G5.6 ins.:

1982* संकर्षणं वासुदेवं प्रणम्य विदुरस्ततः ।
आसने काञ्चने शुभ्रे निषसाद महामतिः ।
कृत्वा मिथस्तु संलापं मुदा पुनरभाषत ।
भीष्मद्रोणाजमीढैश्च यदुक्तं पाण्डवान्प्रति ।
अवदत्तत्र तत्सर्वं सर्वेषामनुशृण्वताम् ।

14 D1 om. 14abc (cf. v. l. 13). — a) T1 G5.6 चामितप्रज्ञः. — b) K2 B3.6 Da1 (m as in text).a2 Cd प्रसृतं; T3 G3-4 प्रश्रयात्; Arjp as in text. Ś1 Ko.1.3.4 V1 विनयात्ततः; K2 B Da Dn3 D1.5 G5.6 M6.7 °न्वितं; Cd cites विनयात्. — d) S transp. संनिधौ and केशवस्य च. K2 हि; B3.5 D4 ह (for च).

15 Before 15, Ñ2.3 V1 B5.6 Dn D1.4 ins. विदुर उ°; T G3-4 विदुरः. — a) K1.3 transp. राजन् and शृणु. — c) T1 G5.6 सपुत्रं च. — d) Ś1 K सामात्यः सहबांधवः; T1 G5.6 °त्यं °वं; M5 सामात्यश्च सर्वां°.

16 c) Ś1 Ko.1.4 तु (for ते). K3 सुभृशं (for ते दृढं). B3 भृशं; G5.6 दृढः. Ś1 K1 चास- (for चापि). — d) Ko.3.4 B1.3 Da1 D4 T1 G1 M8.5 °धिपः.

17 a) T1 G5.6 अथ (for तथा). — c) K2 Da1 M5 °प्राज्ञ; T3 G3-4 °राज.

18 a) Ñ2.3 Dn महाप्राज्ञो (for महे°). — b) Ś1 K1 तथा (for तव). Ko.3.4 D5 M5-8 °सखा तव; T1 G5.6 प्रियतमः सखा. — c) Ko °श्लेषान्; K2 B1.5 D4 M3.5 °श्लिष्यन्; K4 °श्लेषाम्; Ñ1 B3.6 Da °श्लिष्य. Ñ ह्युपेत्य; B (except B1) Da स राजन्. A few MSS. त्वा. T1 स मामुपेत्य तां चैव; G5.6 सदा श्लेष सदापेत्वा (sic). — d) Ś1 K (except K2) Ñ1 तात; D5 त्वानु- (for परि-).

19 a) T1 G2.5.6 पांचाल. — b) Ko.3.4 °धमेत्य हि; K2 (m as in text) °धमेत्य च; S °धमेयि°. — c) Ś1 हि त्वं; Ñ1 V1 राजन् (for ऽऽत्मानं). — d) K2 त्वया (for तथा). Ś1 हि (for ऽपि). Ñ1 V1 स्वात्मानमपि कौरवान्. — After 19, D4 (marg. sec. m.) ins.:

1983* त्रिदशैः सह संबन्धो न तथा प्रीतिकृत्तमः ।

20 a) T3 G2.4 राज्यसंप्रीतिः. — b) T1 G5.6 तथा

न तथा राज्यसंप्राप्तिस्तेषां प्रीतिकरी मता ।
यथा संबन्धकं प्राप्य यज्ञसेन त्वया सह ॥ २०
एतद्विदित्वा तु भवान्प्रस्थापयतु पाण्डवान् ।
द्रष्टुं हि पाण्डुदायादांस्त्वरन्ते कुरवो भृशम् ॥ २१
विप्रोषिता दीर्घकालमिमे चापि नरर्षभाः ।
उत्सुका नगरं द्रष्टुं भविष्यन्ति पृथा तथा ॥ २२
कृष्णामपि च पाञ्चालीं सर्वाः कुरुवरस्त्रियः ।
द्रष्टुकामाः प्रतीक्षन्ते पुरं च विषयं च नः ॥ २३
स भवान्पाण्डुपुत्राणामाज्ञापयतु माचिरम् ।
गमनं सहदाराणामेतदागमनं मम ॥ २४
विसृष्टेषु त्वया राजन्पाण्डवेषु महात्मसु ।
ततोऽहं प्रेषयिष्यामि धृतराष्ट्रस्य शीघ्रगान् ।
आगमिष्यन्ति कौन्तेयाः कुन्ती च सह कृष्णया ॥ २५

इति श्रीमहाभारते आदिपर्वणि अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥ समाप्तं विदुरागमनपर्व ॥

## १९९

द्रुपद उवाच ।

एवमेतन्महाप्राज्ञ यथात्थ विदुराद्य माम् ।
ममापि परमो हर्षः संबन्धेऽस्मिन्कृते विभो ॥ १
गमनं चापि युक्तं स्याद्गृहमेषां महात्मनाम् ।
न तु तावन्मया युक्तमेतद्वक्तुं स्वयं गिरा ॥ २
यदा तु मन्यते वीरः कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनार्जुनौ चैव यमौ च पुरुषर्षभौ ॥ ३
रामकृष्णौ च धर्मज्ञौ तदा गच्छन्तु पाण्डवाः ।
एतौ हि पुरुषव्याघ्रावेषां प्रियहिते रतौ ॥ ४

युधिष्ठिर उवाच ।

परवन्तो वयं राजंस्त्वयि सर्वे सहानुगाः ।
यथा वक्ष्यसि नः प्रीत्या करिष्यामस्तथा वयम् ॥ ५ C. 1. 7549 B. 1. 207. 5 K. 1. 225. 5

---

(for तेषां). Ś1 प्रियकरी; M5 प्रीतिमता. T1 G5.6 मम; M5 यथा. — c) K2 यद्वा; M5 एवं (for यथा). K0.4 D5 सांबंधिकं; G2 संबंधिनः; Cd सांबंधकं. G2 प्राप्तिः. T2 G3.4 यथा संबंधसंप्राप्तिः. — d) M3 नृप (for सह).

21 a) T1 भगवान् (T1 तु भ°). — c) Ñ3 Dn D1.2 पांडुपुत्रांश्च. — d) K3 Ñ2.3 B D M त्वरंति. Ś1 K1.3 T2 G2-5 कौरवा.

22 a) Ś1 चिरकालं. — b) K3 Ñ2.3 B (except B3) D (except D5) एते (for इमे). K0.2.4 D5 पुरोत्तमात् (for नर°). — c) Ś1 सत्वरं; K1 नंतरं; T G4 नागरा; G1-3 M6-8 नागरान्. K3 उत्सुकाश्च पुरं द्रष्टुं. — d) K0.2.4 Ñ1 G5.6 M3.5 °ष्यति. T G1-4 M7.8 पृथां. K2.4 Ñ V1 B D (except D5) transp. पृथा and तथा.

23 a) B6 इमां (for कृष्णां). — b) Ś1 K D1.5 सर्वास्ताः कौरवस्त्रियः (K2 प्रजाश्च कुरुयोषितः). — d) K0.3.4 B3 Dn2 M3 विषयश्च; K3 Ñ V1 B1.5 Da Dn1.n3 D1.5 °याश्च. Ś1 पुनः (for च नः). K1 पुरे च विषये पुनः.

24 T1 (? hapl.) om. 24bc. — d) N एतदत्र मतं मम (Ś1 K0.1.3.4 परं मतं; D5 परं हि ते).

25 a) K0.4 Ñ3 Dn1.n3 D1.2 निसृष्टेषु. — d) D5 शासनात् (for शीघ्र°). — e) V1 ते वीराः (for कौन्तेयाः).

Colophon. Major parvan: T2 G M संभव° (for आदि°). — Sub-parvan: K0 B5 विदुरागमनं; T1 संभव. — Adhy. name: K3 M3 पांडवं प्रति (M3 om. प्रति) विदुरागमनं; K4 D5 द्रुपदं प्रति (K4 om. प्रति) विदुरवाक्यं; M5 विदुरप्रेषणं. — Adhy. no. (figures, words or both): Dn2 205; D4m 213; D5 156; T1 211; T2 G4 M 164; G1.3 165; G2 161; G5.6 163. — S'loka no.: Da1 Dn M3 26. — Aggregate s'loka no.: Dn2 7522.

### 199

1 Ś1 K1 D2 S om. उवाच. — b) S यदात्थ. M मा (for माम्). Ñ1 यथा विदुर मन्यते. — d) Ś1 K2 Ñ2.3 V1 B D (except D5) °ते प्रभो.

2 b) Ñ2.3 B1 Dn D1.2 इदमेषां. — cd) Ñ1 यत्तु; G5 तत्तु. Ś1 वक्तुमेतत्तावद्; K1 युक्तं वक्तुमेतद् (by transp.); Da युक्तमेतदुक्तं; G5.6 वक्तुमेतद्युक्तं.

5 Ś1 K1-3 D2 S om. उवाच. — a) Ñ1 नाथवंतो; Cd as in text. Ś1 त्वया राजन्. — b) Ś1 वयं; K1 Ñ1 G1 त्वया; K3 त्वं मे (for त्वयि). D5 हि सानुगाः; G1 M5 यथागताः; M6-8 यथानुगाः. — d) T G (except G1) चरिष्यामस. Ñ3 Dn D1.2 तत्करिष्यामहे वयं.

G. 1. 7550
B. 1. 207. 6
K. 1. 220. 6

वैशंपायन उवाच ।
ततोऽब्रवीद्वासुदेवो गमनं मम रोचते ।
यथा वा मन्यते राजा द्रुपदः सर्वधर्मवित् ॥ ६
द्रुपद उवाच ।
यथैव मन्यते वीरो दाशार्हः पुरुषोत्तमः ।
प्राप्तकालं महाबाहुः सा बुद्धिर्निश्चिता मम ॥ ७
यथैव हि महाभागाः कौन्तेया मम सांप्रतम् ।
तथैव वासुदेवस्य पाण्डुपुत्रा न संशयः ॥ ८
न तद्ध्यायति कौन्तेयो धर्मपुत्रो युधिष्ठिरः ।
यदेषां पुरुषव्याघ्रः श्रेयो ध्यायति केशवः ॥ ९
वैशंपायन उवाच ।
ततस्ते समनुज्ञाता द्रुपदेन महात्मना ।
पाण्डवाश्चैव कृष्णश्च विदुरश्च महामतिः ॥ १०
आदाय द्रौपदीं कृष्णां कुन्तीं चैव यशस्विनीम् ।
सविहारं सुखं जग्मुर्नगरं नागसाह्वयम् ॥ ११
श्रुत्वा चोपस्थितान्वीरान्धृतराष्ट्रोऽपि कौरवः ।
प्रतिग्रहाय पाण्डूनां प्रेषयामास कौरवान् ॥ १२
विकर्णं च महेष्वासं चित्रसेनं च भारत ।
द्रोणं च परमेष्वासं गौतमं कृपमेव च ॥ १३
तैस्ते परिवृता वीराः शोभमाना महारथाः ।
नगरं हास्तिनपुरं शनैः प्रविविशुस्तदा ॥ १४
कौतूहलेन नगरं दीर्यमाणमिवाभवत् ।
यत्र ते पुरुषव्याघ्राः शोकदुःखविनाशनाः ॥ १५
तत उच्चावचा वाचः प्रियाः प्रियचिकीर्षुभिः ।
उदीरिता अशृण्वंस्ते पाण्डवा हृदयंगमाः ॥ १६
अयं स पुरुषव्याघ्रः पुनरायाति धर्मवित् ।
यो नः स्वानिव दायादान्धर्मेण परिरक्षति ॥ १७
अद्य पाण्डुर्महाराजो वनादिव वनप्रियः ।

---

6 Ś$_1$ K (except K$_0$) D$_2$ S om. उवाच. — $^b$) Ñ V$_1$ B D (except D$_5$) रोचते मम (by transp.). — $^c$) K$_4$ यथा च; Ñ$_1$ यथा वो; G$_1$ M$_8$ कथं वा; G$_{3.6}$ यथायं.

7 Ś$_1$ K$_1$ D$_2$ S om. उवाच. — $^a$) T G (except G$_1$) यथैतन्मन्यते (T$_1$ °न्मनुते). — $^c$) Ś$_1$ प्राप्तकामो; K$_1$ °कालो; M$_8$ °बुद्धिर्; Cd as in text. K$_1$ महाबुद्धिः; B$_{3.6}$ Da D$_4$ °प्राज्ञः. — $^d$) K$_1$ मम निश्चिता (by transp.).

8 $^a$) Ñ$_1$ °भाग. — $^b$) Ñ$_1$ मम मानद.

9 $^a$) Ś$_1$ K$_1$ तत्तथ्या°; G$_3$ स तथ्या°. — $^b$) K$_2$ Ñ$_{2.3}$ B D पांडुपुत्रो. S महामनाः (T$_3$ G$_{2-4}$ °त्मनः). — $^c$) K$_1$ तथैषां; Ñ V$_1$ B D (except D$_5$) T$_1$ यथैषां. K$_4$ B$_3$ D$_{1.2}$ S (except G$_3$ M$_{3.5}$) °व्याघ्र. — $^d$) G$_1$ श्रेयो दास्यति. — After 9, D$_4$ (marg. *sec. m.*) S ins. a passage of 18 lines given in App. I (No. 105).

10 Ś$_1$ K (except K$_0$) D$_2$ S om. उवाच. — $^a$) K$_2$ B Da D$_4$ एवं ते. — $^d$) K$_2$ Ñ$_{2.3}$ B (except B$_3$) D (except D$_5$) महीपते (for महा°).

11 $^a$) K$_{0.2.4}$ G$_1$ सुविहारं; T$_1$ G$_3$ सविहाराः; Cd as in text. — After 11, D$_4$ (marg. *sec. m.*) S ins. a passage of 17 lines given in App. I (No. 106).

12 $^a$) Ñ$_{2.3}$ B D (except D$_5$) चाप्या(Da °भ्या)गतान्. — $^b$) K$_2$ Ñ$_{2.3}$ B D (except D$_5$) °राष्ट्रो जनेश्वरः; S °राष्ट्रोऽम्बिकासुतः. — $^c$) K$_{2.4}$ B$_1$ T$_2$ G$_{2-4}$ M (except M$_8$) प्रतिजग्राह; Cd as in text. K$_1$ पार्थानां. — $^d$) T$_1$ पार्थिवान्; G$_{5.6}$ बांधवान् (for कौर°).

13 Da (hapl.) om. 13$^{bc}$. — $^b$) Ś$_1$ K$_{1.3}$ पार्थिवं; K$_{0.4}$ पार्थिवः; Ñ$_1$ D$_5$ कौरवं (for भारत). — $^{cd}$) N$_1$ D$_1$ द्रौणिं (for द्रोणं), and द्रोणं च (for गौतमं). K$_{0.3}$ विचित्रं चैव भारत (for $^d$). — K$_3$ repeats 13$^{cd}$ (v. l. द्रौणिं for द्रोणं).

14 $^a$) Ś$_1$ K D$_2$ G$_1$ M$_8$ तैस्तैः; Ñ$_1$ T G$_{2-6}$ M$_{6-8}$ एतैः. Ś$_1$ वीरैः; K (except K$_2$) D$_5$ शूराः. — $^b$) K$_2$ Ñ$_{2.3}$ B D (except D$_5$) महाबलाः. — $^c$) Some MSS. (mostly S) हस्तिनपुरं. — After 14, D$_4$ (marg. *sec. m.*) S ins.:

1984* पाण्डवानागताञ्श्रुत्वा नागरास्तु कुतूहलात् ।
मण्डयांचक्रिरे तत्र नगरं नागसाह्वयम् ।
मुक्तपुष्पावकीर्णं तु जलसिक्तं तु सर्वशः ।
धूपितं दिव्यधूपेन मङ्गलैश्चाभिसंवृतम् ।
पताकोच्छ्रितमाल्यं च पुरमप्रतिमं बभौ । [5]
शङ्खभेरीनिनादैश्च नानावादित्रनिस्वनैः ।

[ (L. 1) M$_8$ ज्ञात्वा (for श्रुत्वा). — (L. 3) D$_4$ M$_8$ मुक्तापुष्पाव°. G$_{1.3}$ M$_{6-8}$ सर्वतः. — (L. 4) D$_4$ M$_8$ मांगल्यैश्; T$_1$ G$_{3.4.6}$ मंडनैश्. D$_4$ T$_2$ G$_{2-6}$ M$_8$ अपि (for अभि-). ]

15 $^b$) Ś$_1$ कीर्यमाणम्; N$_{2.3}$ Dn D$_{1.2}$ T$_2$ G$_{2-6}$ दीप्यमानम्; T$_1$ आपूरितम्; G$_1$ M पूर्यमाणम्. — $^c$) N$_{2.3}$ B$_{1m.3.6}$ D T$_1$ तत्र ते (Da as in text; D$_4$ ततस्ते). — $^d$) K$_3$ Ñ$_3$ दुःखशोक- (by transp.). Ś$_1$ K$_1$ °नाशिनः;

आगतः प्रियमस्माकं चिकीर्षुर्नात्र संशयः ॥ १८
किं तु नाद्य कृतं तावत्सर्वेषां नः परं प्रियम् ।
यन्नः कुन्तीसुता वीरा भर्तारः पुनरागताः ॥ १९
यदि दत्तं यदि हुतं विद्यते यदि नस्तपः ।
तेन तिष्ठन्तु नगरे पाण्डवाः शरदां शतम् ॥ २०
ततस्ते धृतराष्ट्रस्य भीष्मस्य च महात्मनः ।
अन्येषां च तदर्हाणां चक्रुः पादाभिवन्दनम् ॥ २१
कृत्वा तु कुशलप्रश्नं सर्वेण नगरेण ते ।
समाविशन्त वेश्मानि धृतराष्ट्रस्य शासनात् ॥ २२
विश्रान्तास्ते महात्मानः कंचित्कालं महाबलाः ।
आहूता धृतराष्ट्रेण राज्ञा शांतनवेन च ॥ २३

धृतराष्ट्र उवाच ।

भ्रातृभिः सह कौन्तेय निबोधेदं वचो मम ।
पुनर्वो विग्रहो मा भूत्खाण्डवप्रस्थमाविश ॥ २४
न च वो वसतस्तत्र कश्चिच्छक्तः प्रबाधितुम् ।
संरक्ष्यमाणान्पार्थेन त्रिदशानिव वज्रिणा ।
अर्धं राज्यस्य संप्राप्य खाण्डवप्रस्थमाविश ॥ २५

वैशंपायन उवाच ।

प्रतिगृह्य तु तद्वाक्यं नृपं सर्वे प्रणम्य च ।
प्रतस्थिरे ततो घोरं वनं तन्मनुजर्षभाः ।
अर्धं राज्यस्य संप्राप्य खाण्डवप्रस्थमाविशन् ॥ २६
ततस्ते पाण्डवास्तत्र गत्वा कृष्णपुरोगमाः ।

C. 1. 7571
B. 1. 207. 28
K. 1. 227. 52

---

B6 °नाशकाः.

16 b) Ñ2.3 B6 Dn D5 पौरैः; D1 परैः (for प्रियाः). — c) K2 त्वश्रृण्वंस्ते; K3 अपि श्रृ°; T G (except G1) ते श्रृण्वंतः; M द्य(M6 च)श्रृण्वंतः (all avoiding the hiatus in different ways!).

17 a) = 1. 63. 7c. — b) K2 पुरमायाति.

18 b) K2 Ñ2.3 V1 B D जन- (D5 च नः); Ñ1 स नः; S (except G5.6) मनः- (T1 मृतः; G1 मतः). — c) K3 स्वागतः. — d) Da T G (except G6) M8 चिकीर्षन्नात्र.

19 a) B3 D1.5 Nilp किं तु. K2 Ñ2.3 V1 B D तात (B6 ताताः) (for तावत्). S किं त्व(T1 M3.6–8 न्व)द्य सुकृतं कर्म (T1 G5.6 पुण्यं). — b) G1 M प्रियं प(M3 क)रं (by transp.). — c) K3.4 D1 यत्र; Ñ1 ततः; B6 यत्तु. — d) K2 Ñ2.3 V1 B D नगरं (for भर्तारः). Ko समुपागताः.

20 b) S यदि वाप्यस्ति(T1 तप्तं हि; T2 G3–4 वा ह्यस्ति). — d) Ko.4 शरदः.

21 c) Ñ1 सर्वेषां च. Ko.4 Ñ1 V1 Da1 D6 M7 तदाह(Ko °र्हा)णां; T2 G3–4 महार्हाणां; G1 नरेंद्राणां. — d) Ñ1 V1 B1.3 M6–8 °वादनं.

22 a) B1.3 Dn3 D1.2.5 कुशलं. Ś1 K (except K2) कृत्वा कुशलसंप्रश्नं. — b) T G (except G1) सर्वस्य नगरस्य. V1 ह; D (except D4.5) च (for ते). — c) Ko.2 Ñ2.3 B D (except D5) न्य(Ko नि)विशंताथ (Ko.2 °श्य). — After 22, D4 (marg. *sec. m.*) S ins. an addl. colophon [ *Adhy. name:* M नगर(M3 पांडवनगर)प्रवेशः. — *Adhy. no.:* D4 115; T1 212; T2 G1.4 166; G2 163; G3 167; G5.6 M 165 ]. — After the addl. colophon, D4 (marg. *sec. m.*) S ins. a passage of 20 lines given in App. I (No. 107).

23 b) K3 Da1 D1.2 G1 M6–8 किंचित्कालं. S सकेशवाः.

24 Ś1 K1 D2 S om. उवाच. — b) K3 Ñ2.3 B D (except D5) निबोध गदतो (K2 वचनं); T G3–6 निबोध त्वं वचो. — After 24ab, D4 (marg. *sec. m.*) S ins.:

1985* पाण्डुना वर्धितं राज्यं पाण्डुना पालितं जगत् ।
शासनान्मम कौन्तेय मम भ्राता महाबलः ।
कृतवान्दुष्करं कर्म नित्यमेव विशां पते ।
तस्मात्त्वमपि कौन्तेय शासनं कुरु माचिरम् ।
मम पुत्रा दुरात्मानः सर्वेऽहंकारसंयुताः । [5]
शासनं न करिष्यन्ति मम नित्यं युधिष्ठिर ।
स्वकार्यनिरतैर्नित्यमवलिप्तैर्दुरात्मभिः ।

[ For lines 5–6, G3.4 subst.: मम पुत्रा दुरात्मानो न करिष्यंति शासनं. ]

— c) Ko मो; K3 Ñ V1 B Da Dn D1.2.5 नो; D4 S वै (for वो). — A passage of 61 lines given in App. I (No. 108) is ins. in D4 (marg. *sec. m.*) T2 G3–6 after 24, and in T1 G1.2 M (all of which om. line 2) after 25ab.

25 D1 T2 G4 (hapl.) om. 25. — a) Da न हि; G1 न तु. K1 वसतां. Ś1 शक्तः (for तत्र). — b) Ś1 तत्र कश्चित्. T1 प्रशासितुं; M3 °वासितुं. — After 25ab, T1 G1.2 M (all om. line 2) ins. the passage given in App. I (No. 108). — Ñ1 om. 25cd. — c) D4 S अर्धराज्यं तु. — 25f = 24d.

26 Ś1 K Dn2.n3 S om. उवाच. K3 (! hapl.) om.

C. 1. 7572 B. 1. 207. 28 K. 1. 227. 53 मण्डयांचक्रिरे तद्वै पुरं स्वर्गवदच्युताः ॥ २७
ततः पुण्ये शिवे देशे शान्तिं कृत्वा महारथाः ।
नगरं मापयामासुर्द्वैपायनपुरोगमाः ॥ २८
सागरप्रतिरूपाभिः परिखाभिरलंकृतम् ।
प्राकारेण च संपन्नं दिवमावृत्य तिष्ठता ॥ २९
पाण्डुराभ्रप्रकाशेन हिमराशिनिभेन च ।
शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा ॥ ३०
द्विपक्षगरुडप्रख्यैर्द्वारैर्घोरप्रदर्शनैः ।
गुप्तमभ्रचयप्रख्यैर्गोपुरैर्मन्दरोपमैः ॥ ३१
विविधैरतिनिर्विद्धैः शस्त्रोपेतैः सुसंवृतैः ।
शक्तिभिश्चावृतं तद्धि द्विजिह्वैरिव पन्नगैः ।
तल्पैश्चाभ्यासिकैर्युक्तं शुशुभे योधरक्षितम् ॥ ३२
तीक्ष्णाङ्कुशशतघ्नीभिर्यन्त्रजालैश्च शोभितम् ।
आयसैश्च महाचक्रैः शुशुभे तत्पुरोत्तमम् ॥ ३३
सुविभक्तमहारथ्यं देवताबाधवर्जितम् ।
विरोचमानं विविधैः पाण्डुरैर्भवनोत्तमैः ॥ ३४

---

26. — b) Ko B8 G2 च (for तु). K4 T1 ते (for तद्). — c) K3 D1 वनं घो°. — d) Ko D5 वनं ते; K2 ततस्तन्; D1 वसंतं; T1 G5.6 M6-8 वनांतं. B6 मनुजेश्वराः; M8 मनुजाधिपाः (*inf. lin.* as in text). — After 26cd, D4 (marg. *sec. m.*) S ins.:

1986* पाण्डवैः सहिता गन्तुं नार्हतेति स नागरान् ।
घोषयामास नगरे धार्तराष्ट्रः ससौबलः ।

— K4 Ñ1 S om. 26ef (which is a repetition, with v. l., of 25ef). — e) Dn1. n2 D2.4 राष्ट्रस्य सं°.

27 a) V1 सर्वे (for तत्र). — b) Da तत्र पुरो°. — Ko om. 27c–28d. — c) K8 अटव्यां चक्रिरे; Ñ1 मंडपं च°; T8 G2.4 मापयांच°. Ś1 K1.4 D5 तस्मिन्; K8 तत्र. — d) Ñ2.3 B (except B8) Dn D2 परं. K2 शक्रवदच्युताः; T1 स्वर्गवदुच्छ्रितं; T8 G2-4 स्वर्गादिव च्युतं. — After 27, D4 (marg. *sec. m.*) S ins.:

1987* वासुदेवो जगन्नाथश्चिन्तयामास वासवम् ।
महेन्द्रश्चिन्तितो राजन्विश्वकर्माणमादिशत् ।
विश्वकर्मन्महाप्राज्ञ अद्य प्रभृति तत्पुरम् ।
इन्द्रप्रस्थमिति ख्यातं दिव्यं भूम्यां भविष्यति ।
महेन्द्रशासनाद्गत्वा विश्वकर्मा तु केशवम् । [5]
प्रणम्य प्रणिपातार्हं किं करोमीत्यभाषत ।
वासुदेवस्तु तच्छ्रुत्वा विश्वकर्माणमव्ययः ।
कुरुष्व कुरुराजस्य महेन्द्रपुरसंनिभम् ।
इन्द्रेण कृतनामानमिन्द्रप्रस्थं महापुरम् ।

[ (L. 3) D4 महाशिल्प. T8 G1.6 अद्य गत्वा तु. — (L. 4) T1 G5.6 रम्यं (for भूम्यां). — (L. 7) T1 आदिशत्; G1 उक्तवान्; G3 अव्ययं; M अर्चयत् (for अव्ययः). — (L. 8) T G2-6 कुरुराजाय. — (L. 9) D4 तदा पुरं; M6-8 महत्पुरं. ]

28 Ko om. 28 (cf. v. l. 27). — b) Ś1 K1.3 M8 हुत्वा (for कृत्वा). — After 28ab, S ins.:

1988* स्वस्ति वाच्य यथान्यायमिन्द्रप्रस्थं भवत्विति ।
[ G5 M6-8 °प्रस्थं भविष्यति. ]

— c) T8 G (except G1) तत्पुरं (for नगरं). G1 स्थापयामासुः. — d) G1 °पुरःसराः. — After 28, S ins.:

1989* ततस्तु विश्वकर्मा तु चकार पुरमुत्तमम् ।

29 b) T1 G (except G1.4) M6-8 परिघाभिर्; M8 *inf. lin.* पताकाभिर्. — c) D5 एव (for च). V1 संछन्नं.

30 a) Ś1 K1 पांडवाभ्र°; B S पांडराभ्र°. — b) Ñ2.3 V1 B Dn D4 हिमरश्मिनि°. — Ko om. 30cd. — c) K4 Dn8 D1 M7 तत्पुरं श्रेष्ठं. — d) =49d. K4 Ñ2 Dn8 भोगवतीमिव. K8 इंद्रस्यैवामरावती. ❀ Nil: भोगवतीमिवेति प्रथमार्थे द्वितीया । ईमिति निपातप्रश्लेषो वा । भोगवती यथेत्यपेक्षिते प्रमादपाठो वा ।❀

31 a) Ś1 K1 D5 द्विपक्षैर्गरुड°; T8 G2-4 द्विपेंद्रगरुड°; G5.6 M6-8 विपक्षग(G5.6 °गा)रुड°; Cd as in text. — T1 (hapl.) om. 31bc. — b) T8 G2-4 द्वास्थैर्. V1 घोरनिदर्शनैः; K2 (m as in text) Ñ2.3 B D (except D5) सौधैश्च शोभितं. — T8 G4 om. 31c–32d. — c) Ś1 K (except K3) Ñ1 V1 D5 अभ्रचया(V1 °घना)कारैः; G1 M अभ्रघन°; G2.3 मंत्रघन°; G5.6 मंद्रघन°.

32 T8 G4 om. 32abcd (cf. v. l. 31). — a) K1 सौधैश्च; G2.3 रुचिरैर् (for विविधैर्). Ś1 K1 N2.3 B (except B1) D1 T1 अपि; V1 अभि-; M8 शर- (for अति-). Ś1 Ko.3.4 -निर्बाधैः; K1 -निर्बोधैः; K3 V1 B1.6 D5 -निर्बंधैः; T1 -निश्छिद्रं; G2.3 -निर्बद्धैः. — c) Ś1 Dn1 D2 °ध्रवृतं. — e) Ś1 Ñ1 बलैः; Ko.2 G1 Cd तलैः (? corrupt); K8 यंत्रैः; K4 मल्लैः; B5 मल्लैः (m तल्पैः as in text). B5 om. च. S चाम्य(G5 °प्य)धिकैर् (M8 चाप्युच्छ्रितैर्). — f) Ś1 K1 योग°; G2.3.4 (before corr.).5 M यौध°.

33 N1 om. 33a–34b. — a) V1 °शताकीर्णं; S तीक्ष्णाभिश्च शत°.

34 N1 om. 34ab (cf. v. l. 33). — a) Ś1 °महाधात्यं; K1 °महाचैत्यं; T8 G3.4 संविभक्त°. — b) Ko °बंध°; K8

तत्रिविष्टपसंकाशमिन्द्रप्रस्थं व्यरोचत ।
मेघवृन्दमिवाकाशे वृद्धं विद्युत्समावृतम् ॥ ३५
तत्र रम्ये शुभे देशे कौरव्यस्य निवेशनम् ।
शुशुभे धनसंपूर्णं धनाध्यक्षक्षयोपमम् ॥ ३६
तत्रागच्छन्द्विजा राजन्सर्ववेदविदां वराः ।
निवासं रोचयन्ति स्म सर्वभाषाविदस्तथा ॥ ३७
वणिजश्चाभ्ययुस्तत्र देशे दिग्भ्यो धनार्थिनः ।
सर्वशिल्पविदश्चैव वासायाभ्यागमंस्तदा ॥ ३८
उद्यानानि च रम्याणि नगरस्य समन्ततः ।
आम्रैराम्रातकैर्नीपैरशोकैश्चम्पकैस्तथा ॥ ३९
पुंनागैर्नागपुष्पैश्च लकुचैः पनसैस्तथा ।
शालतालकदम्बैश्च बकुलैश्च सकेतकैः ॥ ४०
मनोहरैः पुष्पितैश्च फलभारावनामितैः ।
प्राचीनामलकैर्लोध्रैरङ्कोलैश्च सुपुष्पितैः ॥ ४१

C. 1. 7586
B. 1. 207. 43
K. 1. 227. 73

°यतनैर्युतं; $D_1$ देवयाधविव°; $D_4$ (before corr.). $_5$ दैवता°; Cd as in text. — $^c$) $D_2$ °मानैर्भवनैः. — $^d$) S (except $G_2$) पांडुरैः. — After 34, S ins.:

1990* हर्म्यप्रासादसंबाधं नानापण्यविभूषितम् ।
विस्पर्धयेव प्रासादा अन्योन्यस्योच्छ्रिताभवन् ।
मण्डपाश्च सभाः शालाः प्रपाश्चैव समन्ततः ।

[ (L. 1) $G_1$ हर्म्यप्राकारसं°. M नानापणवि°. — (L. 2) $G_1$ M अन्योन्येनोच्छ्रि°. — (L. 3) $G_2$ प्रभाभिश्च; $M_{6-8}$ प्रपाभिश्च. ]

☞ In S the sequence of st. beginning with 34 is as follows: 34, 1990*, 36, 44 (om. $44^{ef}$), 45, $46^{ab}$, 1993*, $35^{cd}$, 1994*, 37–40, $42^{ab}$, $41^{cd}$, $42^{cd}$, $41^{ab}$, 43 (om. $43^{cd}$), $46^{cd}$, 1995*, $35^{ab}$, 47 etc.

35 For sequence of S see above. — $^a$) B $D_2$ त्रिपिष्टप°. — $^b$) $K_2$ व्यरोचत शुभोत्तमं. — After $35^{ab}$, S reads a passage of 18 lines given in App. I (No. 109). — $^d$) Ko $\tilde{N}_{1.2}$ B D विद्धं (for वृद्धं). Ko $D_5$ °त्समाकुलं. $\tilde{N}_1$ विद्युद्भिश्च समा°; S विद्युत्सौदामिनीवृतं. — After 35, S ins. 1994*.

36 $^a$) $K_{2.3}$ $\tilde{N}_{2.3}$ B D (except $D_5$) शिवे देशे. S इंद्रप्रस्थस्य मध्ये तु. — $^b$) $\tilde{N}_1$ $D_{n3}$ $D_1$ $T_2$ $G_{2-6}$ कौरवस्य. — $^c$) $K_{0.2.3}$ वसु°; $\tilde{N}_2$ B $D_{n1.n2}$ वन°. — After 36, $D_4$ (marg. *sec. m.*) ins.:

1991* पौरवाणामधिपतिः कुन्तीपुत्रो युधिष्ठिरः ।
कृतमङ्गलसत्कारो ब्राह्मणैर्वेदपारगैः ।
द्वैपायनं पुरस्कृत्य धौम्यस्यानुमते स्थितः ।
भ्रातृभिः सहितो राजन्केशवेन सहाभिभूः ।
जयेति ब्रह्मणां वाचः श्रूयन्ते च सहस्रशः ।
संस्तूयमानो बहुभिः सूतमागधबन्दिभिः ।
औपवाह्यगतो राजा राजमार्गमतीत्य च ।
कृतमङ्गलसंस्कारं प्रविवेश गृहोत्तमम् ।
प्रविश्य भवनं राजा नागरैरभिपूजितः ।
पूजयामास विप्रेन्द्रान्केशवेन यथाक्रमम् ।

ततस्तु राष्ट्रं ववृधे नरनारीगणैर्वृतम् !,
which is a variant of passage No. 109 of App. I (q. v.); cf. v. l. 35.

37 For sequence of S cf. v. l. 34. — $^b$) $Ś_1$ $K_{0.2.4}$ सर्वभाष्य($K_4$ °षा)विदां वराः; $K_1$ सर्वे भाष्यविशारदाः; $D_a$ $G_2$ सर्वे वेदवि°. — $^c$) $Ś_1$ B $D_a$ $D_4$ रोचयंत (B °तः) स्म. — $^d$) $Ś_1$ $K_{0.1.2.4}$ $D_5$ सर्वशास्त्रविशारदाः; $\tilde{N}_1$ $V_1$ सर्व($V_1$ अशेष)भाषाविशारदाः; $K_3$ $\tilde{N}_3$ $D_{2.4}$ $T_1$ $G_{1.5.6}$ M सर्वभाष्य°. Cd cites भाषा.

38 For sequence of S cf. v. l. 34. — $^a$) $K_3$ $\tilde{N}_{2.3}$ $B_1$ $D_n$ $D_{1.2}$ चाययुस्तत्र. — $^b$) $Ś_1$ $K_1$ देवदिग्भ्यो; $K_{0.2.4}$ सर्वदि°; $K_3$ $\tilde{N}_1$ $D_5$ दशदि°; $\tilde{N}_{2.3}$ $V_1$ $B_3$ $D_a$ $D_n$ $D_{1.2}$ नानादि°; S देशेभ्योपि ($G_1$ M हि). — $^c$) $\tilde{N}_3$ $V_1$ $D_{n1.n2}$ °विदस्तत्र. — $^d$) $K_3$ $T_1$ $G_1$ M अभ्यगमन्. $V_1$ $D_a$ $T_2$ $G_{2-5}$ तथा.

39 For sequence of S cf. v. l. 34. — $^{bcd}$) S नगरस्य समीपतः । सहकाराम्रपनसैः कपित्थैरप्युदुंबरैः ($T_1$ °त्थैश्च उदुं°; $G_{1.2}$ M °त्थैश्च सतुंबरैः). — After 39, S ins.:

1992* नालिकेरैश्च लिकुचैः कदलीभिः समावृताः ।
अशोकैस्तिलकैर्लोध्रैर्नीलाशोकैश्च चम्पकैः ।

40 For sequence of S cf. v. l. 34. — $\tilde{N}_3$ om. $40^{ab}$. — $^a$) S नागवृक्षैश्च. — $D_a$ om. $40^{bc}$. — $^b$) T $G_{2-6}$ मधूकैश्च सुपुष्पितैः; $G_1$ फलपुष्पावनामितैः (cf. $41^b$); M फलितै($M_{2.3}$ पनसै)श्च सुपुष्पितैः. — $G_1$ om. $40^c$–$42^a$. — $^c$) $Ś_1$ $K_1$ $B_1$ $D_4$ S ($G_1$ om.) सालतालकदंबै($B_1$ $D_4$ °तमालै)श्च; $K_{0.4}$ $D_5$ शालैस्तालैस्तमालै($K_4$ °लैः कदंबै)श्च; $K_{2.3}$ $\tilde{N}_{2.3}$ $B_{3.4.6}$ $D_n$ $D_{1.2.4}$ °तमालैश्च; $\tilde{N}_1$ $V_1$ तथा शालकदंबैश्च. — $^d$) Ko $D_5$ कदंबै° (for बकुलै°). $Ś_1$ $K_1$ °कीचकैः; $M_{2.3}$ °केसरैः.

41 For sequence of S cf. v. l. 34; $G_1$ om. 41 (cf. v. l. 40). — $^a$) $\tilde{N}_1$ मनोरमैः. $K_{3.3}$ $\tilde{N}_{2.3}$ $V_1$ B D (except $D_5$) सु($K_3$ स)पुष्पैश्च. S अन्यैश्च विविधैर्वृक्षैः. — $^b$) $D_a$ $G_{3.6}$ °नामिभिः; $M_{5-8}$ फलपुष्पाव°. — $D_5$ S

G. 1. 7357 B. 1. 207. 48 K. 1. 227. 73

जम्बूभिः पाटलाभिश्च कुब्जकैरतिमुक्तकैः ।
करवीरैः पारिजातैरन्यैश्च विविधैर्द्रुमैः ॥ ४२
नित्यपुष्पफलोपेतैर्नानाद्विजगणायुतम् ।
मत्तबर्हिणसंघुष्टं कोकिलैश्च सदामदैः ॥ ४३
गृहैरादर्शविमलैर्विविधैश्च लतागृहैः ।
मनोहरैश्चित्रगृहैस्तथा जगतिपर्वतैः ।
वापीभिर्विविधाभिश्च पूर्णाभिः परमाम्भसा ॥ ४४
सरोभिरतिरम्यैश्च पद्मोत्पलसुगन्धिभिः ।
हंसकारण्डवयुतैश्चक्रवाकोपशोभितैः ॥ ४५
रम्याश्च विविधास्तत्र पुष्करिण्यो वनावृताः ।
तडागानि च रम्याणि बृहन्ति च महान्ति च ॥४६
तेषां पुण्यजनोपेतं राष्ट्रमावसतां महत् ।
पाण्डवानां महाराज शश्वत्प्रीतिरवर्धत ॥ ४७
तत्र भीष्मेण राज्ञा च धर्मप्रणयने कृते ।
पाण्डवाः समपद्यन्त खाण्डवप्रस्थवासिनः ॥ ४८
पञ्चभिस्तैर्महेष्वासैरिन्द्रकल्पैः समन्वितम् ।
शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा ॥ ४९
तान्निवेश्य ततो वीरो रामेण सह केशवः ।
ययौ द्वारवतीं राजन्पाण्डवानुमते तदा ॥ ५०

इति श्रीमहाभारते आदिपर्वणि एकोनद्विशततमोऽध्यायः ॥ १९९ ॥ समाप्तं राज्यलम्भपर्व ॥

---

om. 41$^{cd}$; but cf. 1992*, and v. l. 42. — c) Ś1 K1.2 रोध्रैः. — d) Ñ1 कंकोलै°; B Da अंकोचै°. B6 Da D4 सुगंधिभिः.

42 For sequence of S cf. v. l. 34; G1 om. 42 (cf. v. l. 40). — a) M6–8 कंबूभिः. S (G1 om.) पाटलीभिश्च. — b) Ś1 K1 कुब्यकैरति°; K3.4 कुसुदैश्चाति° (K3 °पि°); Ñ1 फलपुष्पमनोहरैः; S (G1 om.) अंकोलैरति° (cf. 41$^{cd}$). — cd) T G (G1 om.) कर्णिकारैः पारिजातैः करवीरैः सु(G2 च)पुष्पितैः; M करवीरैः कर्णिकारैः पारिजातैश्च पुष्पितैः.

43 For sequence of S cf. v. l. 34. — a) Ś1 K1.2 B6 D4 °फलोपेतं. — b) Ś1 °द्विजगणैर्युतं; K0.4 D5 °पक्षिगणायुतैः; K1 °द्विजगणैर्वृतं; K2 Da1 °द्विजगणान्वितं; K3 Ñ B6 Dn D1.2 °द्विजगणायुतैः; V1 °मृगगणायुतैः; S शोभितास्ते गृहोत्तमाः. — S om. 43$^{cd}$. — c) K0.3.4 D5 °घुष्टैः; Ñ1 °युक्तैः; N2.3 V1 D2 °घुष्ट-; D1 °जुष्टि-. — K1 (? hapl.) om. from सदामदैः up to विविधैश्च (in 44$^{b}$).

44 For sequence of S cf. v. l. 34. K1 om. up to विविधैश्च (in 44$^{b}$; cf. v. l. 43). — b) Ś1 K0.3.4 Ñ1 D5 विपुलै° (for विविधै°). — c) K0.4 D5 मनोरमैश्च. Ś1 चित्ररूपैः. — d) Ś1 च गति°; K4 मृण्मय°; B6 राजत° (m as in text); T1 क्रीडन°; Cd as in text. — S om. 44$^{ef}$. — e) V1 B1 (m as in text) विमलाभिश्च. — f) Ñ1 B6 Da D4 विविधांभसा.

45 For sequence of S cf. v. l. 34. — a) K0 चैव; K4 Da अभि- (for अति-). D2.4 सरोभिरभितो रम्यैः; S पुष्करिण्यश्च विविधाः. — b) S °समावृताः (T1 °समन्विताः; M °समायुताः). — cd) S °कारंडवाकीर्णाः °शोभिताः.

46 For sequence of S cf. v. l. 34. — a) V1 अन्या°; M6–8 हर्म्या° (for रम्या°). — b) S वाप्यश्चैव (T1 वाप्यशैल-). Ñ1 वनांतरे; B5.6 वनानि च; T1 G1 M समावृताः. — After 46$^{ab}$, S ins.:

1993* वेश्ममध्ये शिवं दिव्यमिन्द्रवासगृहोपमम् ।
राज्ञो वासगृहं रम्यं विश्वकर्मा त्वकारयत् ।
सुवर्णमणिसोपानं सर्वरत्नविचित्रितम् ।
विहारभूम्यो विविधाः कारिताः स्युर्मनोहराः ।

Then follows 35$^{cd}$, which again is followed by:

1994* तथा प्रासादमालाश्च शोभन्ते स्म सहस्रशः ।
निरन्तरा राजमार्गाः क्षीरलैः शोभिताः सिताः ।

— c) Ś1 K1 तडाकानि; T G (except G1) तटाकानि. B6 Da D4 दिव्यानि (for रम्याणि). — d) K0.2–4 Ñ V1 B D (except Da) सु- (K2–4 B1.3 D4 च) बहूनि (for च महान्ति). Cd cites महांति (as in text). S विविधानि दिशासु (T2 G4 सरांसि) च. — After 46, S ins.:

1995* नदी च नन्दिनी नाम सा पुरीमुपगूहते ।
चातुर्वर्ण्यसमाकीर्णं माल्यैः शिल्पिभिरावृतम् ।
उपभोगसमर्थैश्च सर्वैर्द्रव्यैः समावृतम् ।
नित्यमार्यजनोपेतं नरनारीगणायुतम् ।
मत्तवारणसंपूर्णं गोभिरुष्ट्रैः खरैरजैः ।
सर्वदाभिसृतं सद्भिः कारितं विश्वकर्मणा ।,

which is followed by 35$^{ab}$.

47 b) Ñ2 B6 Dn D1.2 M8 राष्ट्रमाविशतां. — c) V1 नरश्रेष्ठ (for महा°). — d) K2 यशः; K4 B1 D2 Cd श्रः

## २००

जनमेजय उवाच ।

एवं संप्राप्य राज्यं तदिन्द्रप्रस्थे तपोधन ।
अत ऊर्ध्वं महात्मानः किमकुर्वन्त पाण्डवाः ॥ १
सर्व एव महात्मानः पूर्वे मम पितामहाः ।
द्रौपदी धर्मपत्नी च कथं तानन्ववर्तत ॥ २
कथं वा पञ्च कृष्णायामेकस्यां ते नराधिपाः ।
वर्तमाना महाभागा नाभिद्यन्त परस्परम् ॥ ३
श्रोतुमिच्छाम्यहं सर्वं विस्तरेण तपोधन ।
तेषां चेष्टितमन्योन्यं युक्तानां कृष्णया तया ॥ ४

वैशंपायन उवाच ।

धृतराष्ट्राभ्यनुज्ञाताः कृष्णया सह पाण्डवाः ।
रेमिरे पुरुषव्याघ्राः प्राप्तराज्याः परंतपाः ॥ ५
प्राप्य राज्यं महातेजाः सत्यसंधो युधिष्ठिरः ।
पालयामास धर्मेण पृथिवीं भ्रातृभिः सह ॥ ६
जितारयो महाप्राज्ञाः सत्यधर्मपरायणाः ।
मुदं परमिकां प्राप्तास्तत्रोषुः पाण्डुनन्दनाः ॥ ७
कुर्वाणाः पौरकार्याणि सर्वाणि पुरुषर्षभाः ।
आसांचक्रुर्महार्हेषु पार्थिवेष्वासनेषु च ॥ ८

C. 1. 7603
B. 1. 208. 8
K. 1. 223. 8

---

श्वः (for शश्वत्). — After 47, S ins.:

1996* सौबलेन च कर्णेन धार्तराष्ट्रैः कृपेण च ।

48 a) S (except M3) तथा (for तत्र). — b) T G2–4 °यिना कृते; G1.6 M °यिनस्त(G1.6 M3 °नः सः; M3 *inf. lin.* °ना स)दा; G5 °यिनः कृते. Cd cites °प्रणयनं.

49 b) G1 M °ह्यैः समावृतं. — d)=30d. K4 इंद्रेणेवामरावती. — After 49, D4 (marg. *sec. m.*) S ins. a passage of 26 lines given in App. I (No. 110).

50 a) T3 G2–4 निवेद्य; G5 निशम्य; G6 निवर्त्स. Da राजन् (for वीरः). — b) Da S सह रामेण (by transp.). — d) Ś1 °मतस्तदा; Cd as in text.

Colophon. *Major parvan:* T3 G2–6 M संभव° (for आदि°). — *Sub-parvan* (or *adhy. name*): Ś1 K0–3 B3.5.6 Da Dn1.n3 D4 राज्यलंभ (Dn1.n3 D4 °लाभ); K4 Ñ3 B1 पांडव(Ñ3 °वानां)राज्यलंभ (K4 °भनं); T1 संभव and राज्यलंभ; M3.5 युधिष्ठिरराज्यलंभ. — *Adhy. name:* K0 कृष्णद्वारकागमनं; K3 इंद्रप्रस्थनिवेशः; D6 पांडवाना- मिन्द्रप्रस्थगमनं. — *Adhy. no.* (figures, words or both): Dn D1 201 (Dn3 203); D4m 216; D5 157; T1 213; T3 G1.4 167; G2 164; G3 168; G5.6 M 166. — *S'loka no.:* Da1 Dn 51; M3 108. — *Aggregate s'loka no.:* Dn3 7537.

### 200

1 Ś1 K1 Dn3 D2 S om. उवाच. — a) B5 संप्राप्त- राज्यास्; Cd as in text. K3 B5 ते; B1.3.6 Da Dn3 D1.5 तु; G1 तं; Cd तद् (as in text). — b) Ñ Dn D1.2 G2 °प्रस्थं; Cd as in text. — c) Ś1 K1 Da1 तत ऊर्ध्वं. G1 नरव्याघ्राः. — d) K1 Ñ V1 B Da2 Dn D5 T1 G2 किमकुर्वत.

2 a) Ñ1 B (except B5) Da ते तु वीरा (for सर्व एव). Ś1 महाव्याघ्राः; K0.2–4 B Da D1.5 नरव्याघ्राः (B1 °श्रेष्ठाः); K1 °भागाः; Ñ2.3 V1 Dn D1.2 °सत्वाः. — c) K1.2 Ñ V1 Dn D1.2.5 मम पूर्व- (D2 पूर्वं); K3 B Da D4 सर्वे मम. — d) Ñ1.2 D2 अनुवर्तते.

3 a) Ñ V1 Dn D1.2.3 च पंच; B6 D4 ते पंच; T1 G3 M वासं च; T3 G1–4.6 आसंश्च. — b) Ś1 K0.1.4 Ñ1 D5 तपोधन (K4 °नाः) (for नरा°). — Ś1 (hapl.) om. 3c–4b. — c) T G (except G1) महेष्वासा (for महा°).

4 Ś1 om. 4ab (cf. v. l. 3). — a) S तत्र (M3 तत्तु). — b) S यथातथं. — d) K2 Ñ2.3 B6 Dn D1.2 S कृष्णया सह (T3 G4 सह कृष्णया); K3 Ñ1 B1.3 कृष्णया तदा.

5 Ś1 K (except K0) D2 S om. उवाच. — b) S इंद्रप्रस्थं प्रविश्य तद् (M3.5 ते; M6–8 तं); see below. — c) Ñ V1 D (except Da D4) खांडवप्रस्थे; M3 *inf. lin.* हि महाभागाः. — d) Ś1 K1 परंतप; Ñ1 महारथाः. S कृष्णया सह पांडवाः (=5b).

6 a) Ś1 K1 D5 प्राप्तराज्यो म°.

7 a) Ś1 K0.1.4 Ñ1 V1 D5 महात्मानः; Ñ2.3 B1.6 D2 महाप्रज्ञाः. — d) Ś1 तुष्टुवुः; K1 तुतुषुः (for तत्रो°).

8 a) Ś1 पौरकर्माणि. — b) K3 पौराणि. S (except G3) भरतर्षभाः. — d) S पराार्घ्येष्वा°. B3 G2 ते (for च).

9 Ñ3 V1 B Da D1 om. 9ab. — a) K3 एवं वै

C. 1. 7604
B. 1. 208. 9
K. 1. 228. 9

अथ तेषूपविष्टेषु सर्वेष्वेव महात्मसु ।
नारदस्त्वथ देवर्षिराजगाम यदृच्छया ।
आसनं रुचिरं तस्मै प्रददौ स्वं युधिष्ठिरः ॥ ९
देवर्षेरुपविष्टस्य स्वयमर्घ्यं यथाविधि ।
प्रादाद्युधिष्ठिरो धीमान्राज्यं चास्मै न्यवेदयत् ॥ १०
प्रतिगृह्य तु तां पूजामृषिः प्रीतमनाभवत् ।
आशीर्भिर्वर्धयित्वा तु तमुवाचास्यतामिति ॥ ११
निषसादाभ्यनुज्ञातस्ततो राजा युधिष्ठिरः ।
प्रेषयामास कृष्णायै भगवन्तमुपस्थितम् ॥ १२
श्रुत्वैव द्रौपदी चापि शुचिर्भूत्वा समाहिता ।
जगाम तत्र यत्रास्ते नारदः पाण्डवैः सह ॥ १३
तस्याभिवाद्य चरणौ देवर्षेर्धर्मचारिणी ।
कृताञ्जलिः सुसंवीता स्थिताथ द्रुपदात्मजा ॥ १४
तस्याश्चापि स धर्मात्मा सत्यवागृषिसत्तमः ।
आशिषो विविधाः प्रोच्य राजपुत्र्यास्तु नारदः ।
गम्यतामिति होवाच भगवांस्तामनिन्दिताम् ॥ १५
गतायामथ कृष्णायां युधिष्ठिरपुरोगमान् ।
विविक्ते पाण्डवान्सर्वानुवाच भगवानृषिः ॥ १६
पाञ्चाली भवतामेका धर्मपत्नी यशस्विनी ।
यथा वो नात्र भेदः स्यात्तथा नीतिर्विधीयताम् ॥ १७
सुन्दोपसुन्दावसुरौ भ्रातरौ सहितावुभौ ।
आस्तामवध्यावन्येषां त्रिषु लोकेषु विश्रुतौ ॥ १८
एकराज्यावेकगृहावेकशय्यासनाशनौ ।
तिलोत्तमायास्तौ हेतोरन्योन्यमभिजघ्नतुः ॥ १९
रक्ष्यतां सौहृदं तस्मादन्योन्यप्रतिभाविकम् ।
यथा वो नात्र भेदः स्यात्तत्कुरुष्व युधिष्ठिर ॥ २०

युधिष्ठिर उवाच ।

सुन्दोपसुन्दावसुरौ कस्य पुत्रौ महामुने ।
उत्पन्नश्च कथं भेदः कथं चान्योन्यमघ्नताम् ॥ २१
अप्सरा देवकन्या वा कस्य चैषा तिलोत्तमा ।
यस्याः कामेन संमत्तौ जघ्नतुस्तौ परस्परम् ॥ २२
एतत्सर्वं यथावृत्तं विस्तरेण तपोधन ।
श्रोतुमिच्छामहे विप्र परं कौतूहलं हि नः ॥ २३

इति श्रीमहाभारते आदिपर्वणि द्विशततमोऽध्यायः ॥ २०० ॥

---

वर्तमानेषु; S तेषु तत्रोपविष्टेषु. — $^b$) Ñ$_1$ सर्वेष्वेषु; S पांडवेषु. — After $9^{ab}$, D$_4$ (marg. *sec. m.*) S ins. a passage of 27 lines given in App. I (No. 111). — $^{cd}$) S आययौ धर्मराजं तु द्रष्टुकामोऽथ नारदः. — After $9^{cd}$, S ins.:

1997* तमागतमृषिं दृष्ट्वा प्रत्युद्गम्याभिवाद्य च ।

— $^f$) M$_{6-8}$ च (for स्वं). T$_1$ G$_{1.5.6}$ स्वं ददौ स (T$_1$ च); T$_3$ G$_{2-4}$ संदधौ स; M$_{3.5}$ ददौ राजा. — After 9, S ins.:

1998* कृष्णाजिनोत्तरे तस्मिन्नुपविष्टो महानृषिः ।

10 $^b$) K$_0$ Da$_2$ अर्घं; T$_3$ G$_{2-4}$ एव (G$_3$ °वं). — After $10^{ab}$, K$_3$ repeats $9^a$ (as in text) and $10^b$. — $^{cd}$) N$_1$ ददौ (for प्रादाद्). Da$_2$ D$_1$ transp. धीमान् and राज्यं. N (except Ś$_1$ K$_1$) तस्मै (for चास्मै).

11 $^a$) Ñ$_1$ प्रतिगृह्यात्ततः पूजाम्. — $^b$) N (except Ñ$_1$ V$_1$) °मनास्तदा (D$_4$ °स्तथा). — $^c$) Ś$_1$ K (except K$_3$) Ñ V$_1$ B$_6$ Dn D$_{1.2}$ च (for तु).

12 G$_1$ om. $12^a$–$14^b$. — $^b$) T G (G$_1$ om.) तदा राजा; M$_8$ धर्मराजो. — $^c$) Ñ$_{2.3}$ D$_{1.2}$ कथयामास.

13 G$_1$ om. 13 (cf. v. l. 12). — $^a$) K$_3$ Ñ$_{2.3}$ B Dn$_1$.n$_2$ D$_{1.2.4.5}$ T G (G$_1$ om.) श्रुत्वैतद्. S (except M$_{3.5}$; G$_1$ om.) चैव (for चापि). — $^c$) K$_3$ T G$_{3-5}$ यत्र तत्रास्ते (by transp.). — $^d$) Ñ$_1$ सह पांडवैः (by transp.).

14 G$_1$ om. $14^{ab}$ (cf. v. l. 12). — $^a$) Ś$_1$ K$_1$ अभिवंद्य. — $^c$) Ś$_1$ K$_1$ बद्धांजलिः; G$_1$ M$_{6-8}$ कृत्वांजलिं. — $^d$) D$_5$ सा; S वै (for अथ).

15 $^a$) T$_1$ तस्या अपि स; G$_1$ तस्याश्चापीदं. — $^c$) G$_1$ M प्रोक्त्वा (for प्रोच्य). — $^d$) K$_2$ B$_6$ D$_{2.4}$ च; M$_{6-8}$ स (for तु). — $^e$) S चोवाच.

16 $^a$) T$_3$ G$_{2-4}$ स तु (for अथ). — After 16, N (except D$_5$) G$_1$ ins. नारद उ° (Ś$_1$ K$_1$ G$_1$ om. उ°).

18 $^a$) Ñ$_{2.3}$ B D G$_1$ M हि पुरा; T G$_{2-6}$ ह्यसुरौ (for असुरौ). — $^c$) S देवैर् (for आस्ताम्). T$_3$ G (except G$_1$) असुरौ (for अन्ये°).

19 $^a$) T$_1$ एककार्यौ (for °गृहौ). — $^b$) K$_{0.3}$ °शय्या°

युवाभ्यां पुरुषाग्र्याभ्यां तर्पितोऽस्मि यथासुखम् ।
अनुजानामि वां वीरौ चरतं यत्र वाञ्छितम् ॥ १७
एवं तौ समनुज्ञातौ पावकेन महात्मना ।
अर्जुनो वासुदेवश्च दानवश्च मयस्तथा ॥ १८
परिक्रम्य ततः सर्वे त्रयोऽपि भरतर्षभ ।
रमणीये नदीकूले सहिताः समुपाविशन् ॥ १९

C. 1. 8479
B. 1. 234. 19
K. 1. 260. 21

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां आदिपर्वणि पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥२२५॥

॥ समाप्तं खाण्डवदाहपर्व ॥

॥ समाप्तमादिपर्व ॥

---

17 Before 17, G1.3.6 M ins. अग्निः. T2 G2.4 om. 17ᵃ (cf. v. l. 16). — ᵃ) K0.2.3 D1 °पाग्राभ्यां; K4 °पाभ्यां च. T1 G1.3 अहं युवाभ्यां शूराभ्यां. — ᵇ) Ñ1.3 B1 Da तर्पितोहं. D2 यथारुचि. — ᶜ) K4 अनुजानीहि. K2 B6 तौ; K4 Da1 G1 मां; V1 उभौ (for वां). — ᵈ) Ś1 सरतां; K0 D2 चरतां; K2.4 गम्यतां; D1 वदतां; T1 दिविता; T2 G M2 भविता (G1 भवद्यां); M5 भवता; M6-8 भवतां. Ś1 वांछतः; K0.3.4 वांछथ; K1 वांछथः; Ñ1 स्वेच्छया. — After 17, K0.3.4 D2.4.5 ins.:

2160* गाण्डीवं च धनुर्दिव्यमक्षय्यौ च महेषुधी ।
कपिध्वजो रथश्चायं तव दत्तौ महारथ ।
अनेन धनुषा चैव रथेनानेन भारत ।
विजेष्यसि रणे शत्रून्ससुरासुरमानुषान् ।

18 Before 18, T2 G2-6 M2 ins. वैशं°. — ᵃᵇ) Ñ1.3 अनुज्ञातास्ततः सर्वे अग्निना च म°. — ᵈ) K1 दानवोपि; K4 मायावी च. B6 तथा मयः (by transp.); G3.6 मयस्तदा. Ś1 मयोपि दानवस्तथा.

19 ᵃ) T1 G2 आक्रम्य च. K0 ततस्ते तु; K2 ततो राजन्. G1 परिरम्य त्रयः सर्वे. — ᵇ) K2 मुदिता जनाः; Ñ1.3 B6 Da2 D4 पुरुषर्षभ (B6 Da2 °भाः); Da1 भरतर्षभाः. — ᶜ) K2 B6 नदीतीरे. — ᵈ) K2 Ñ1.3 समुपागमन्.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K0-3 B Dn D1.2.4.5 T2 G2-6 M2.5.7 खांडवदाह; T1 संभव and खांडवदाह; to these K0.2.3 B1.5 D1.2 T1 G1.3 M2.5 add शार्ङ्गको(B5 शारंगो-; G2 शार्ङ्गिको)पाख्यान; B3 मन्दपालोपाख्यान. K4 G1 (both om. the sub-parvan name) mention only शार्ङ्गको(G1 शार्ङ्गो)पाख्यान. — MSS. mostly add समाप्तं after the major parvan, sub-parvan or upākhyāna name; some add it after each of them. — *Adhy. name:* Ś1 K1 वरदानं; T2 G2-5 अग्निवचनं; G1 वरग्रहणं; M2.5 इंद्रप्रतिनिवर्तनं. — *Adhy. no.* (figures, words or both): Dn2 233; D1m 250; D5 33 (? for 233); T1 237; T2 G1.4-6 M 200; G2 198; G3 203. — *S'loka no.:* Da1 Dn2.n3 M2 19. — *Aggregate s'loka no.:* Dn2 8449.

☞ After adhy. 225, Ś1 K0.1.4 ins. an addl. adhy. given in App. I (No. 121), which is a variant version of the famous S'vetaki episode and seems to have been added here as supplementary matter, since these same MSS. also contain, at the proper place, the longer version which other N MSS. ins. after 1. 215. 11 (cf. App. I, Nos. 118, 120).

After the addl. adhy. (cf. App. I, No. 121), Ś1 K1 ins.: समाप्तं चैतदादिपर्व । अस्मात्तु सभापर्व भविष्यति । तस्यायमादिश्लोकः ।

2161* ततोऽब्रवीन्मयः पार्थं वासुदेवस्य संनिधौ ।
प्राञ्जलिः श्लक्ष्णया वाचा पूजयित्वा पुनः पुनः ॥

आदिपर्वण्यमी वृत्तांताः ।

Then follows the list of the vṛttāntas (arranged here in parallel columns: the central column giving the names common to both MSS.; the lateral columns, those peculiar to each of the two MSS.):

| Additional in Ś1 | Common to Ś1 K1 | Additional in K1 |
|---|---|---|
| | अनुक्रमणी। | |
| | पर्वसंग्रहः। | |
| | पौष्यं। | |
| | पौलोमं। | |
| | | द्रौपदीस्वयंवरः। |
| | अमृतमथनं। | |
| | सौपर्णं। | |
| | अंशावतरणं। | |
| | शाकुंतलं। | |
| | यायातं। | |
| | पुरुवंशानुकीर्तनं। | |
| | संभवः। | |
| | अस्त्रदर्शनं। | |
| | | वारणावतयात्रा। |
| | जतुगृहदाहः। | |
| | हिडिंबवधः। | |
| | | घटोत्कचोत्पत्तिः। |
| | | एकचक्राप्रवेशः। |
| | | बकवधः। |
| | | ब्राह्मणवाक्यं। |
| | द्रौपदीसंभवः। | |
| | | व्यासागमनं। |
| | अंगारपर्णं। | |
| | तापत्यं। | |
| | वासिष्ठं। | |
| | और्वं। | |
| | | पंचेंद्रोपाख्यानं। |
| | द्रौपदीविवाहः। | |
| | राज्यलाभः। | |
| | | नारदागमनं। |
| | सुंदोपसुंदोपाख्यानं। | |
| | अर्जुनतीर्थयात्रा। | |
| | | उलूपीसमागमः। |
| | सुभद्राहरणं। | |
| | हरणहारिका। | |
| | | अभिमन्युजन्म। |
| | | जलक्रीडा। |
| खांडवदाहः। | | |
| | | श्वेतक्युपाख्यानं। |
| | शार्ङ्गकोपाख्यानं। | |
| | श्वेतकेतूपाख्यानं। | |

Then follow the stanzas (cf. 1. 2. 95–6):

इत्येतदादिपर्वोक्तं प्रथमं बहुविस्तरम्।
अध्यायानां शते द्वे तु संख्याते परमर्षिणा।

| | |
|---|---|
| त्रिंशच्चैव तथाध्याया | |
| व्यासेनोत्तमतेजसा। | |
| सप्त श्लोकसहस्राणि | अष्ट श्लोकसहस्राणि |
| तथा नव शतानि च। | तथा नव शतानि च। |

श्लोकाश्च चतुराशीतिर्ग्रन्थो दृष्टो महात्मना।

Then follows in Ś1 a repetition of 1. 2. 242. The MSS. end the parvan with namaskāras (Ś1 ॐ नमः शिवाय; K1 श्रीकृष्णाय नमः).

— K0, after the addl. adhy. (cf. App. I, No. 121), ins.:

2162* अतः परं सभापर्व द्वितीयं पुण्यवर्धनम्।
प्रतिसंधिरयं श्लोकः प्रथमः परिकीर्तितः।

Then follows 2161* (with वैशं° उ° before it); then 4 lines of दानप्रशस्ति; and finally: वृत्तांतामी। अनुक्रमणी १। पर्वसंग्रहः २। पौष्यं ३। पौलमं ४। आस्तीकं ५। अमृतमथनं ६। सौपर्णं ७। सर्पयज्ञं ८। कथासंक्षेपः ९। व्यासोक्तिः १०। अंशावतारं ११। प्रजासर्गः १२। शाकुंतलं १३। यायातं १४। उत्तरयायातं १५। पुरुवंशानुकीर्तनं १६। भीष्मोत्पत्तिः १७। धृतराष्ट्रोत्पत्तिः १८। कर्णसंभवः १९। दुर्योधनादिजन्म २०। पांडुजन्म २१। पांडुदाहः २२। नगरागमनं २३। पांडुसंस्कारः २४। श्राद्धदानं २५। कुमारचेष्टा २६। कृपोत्पत्तिः २७। अश्वत्थामाजन्म २८। अस्त्रशिक्षा २९। अस्त्रदर्शनं ३०। वारणावतगमनं ३१। जतुगृहदाहः ३२। हिडिंबवधः ३३। घटोत्कचोत्पत्तिः ३४। एकचक्रागमनं ३५। बकवधः ३६। द्रौपदीसंभवः ३७। व्यासदर्शनं ३८। अंगारपर्णं ३९। तापत्यं ४०। वासिष्ठं ४१। और्वं ४२। द्रौपदीस्वयंवरः ४३। पंचेन्द्रोपाख्यानं ४४। द्रौपदीविवाहः ४५। विदुरागमनं ४६। * * * * (?राज्यलंभः) ४७। सुंदोपसुंदोपाख्यानं ४८। अर्जुनतीर्थयात्रा ४९। कृष्णार्जुनसमागमः ५०। सुभद्राहरणं ५१। हरणहारिका ५२। ब्राह्मणदर्शनं ५३। श्वेतकेतूपाख्यानं ५४। खांडवदाहः ५५। देवैर्युद्धं ५६। मयमोचनं ५७। शार्ङ्गकोपाख्यानं ५८॥

इत्येतदादिपर्वोक्तं प्रथमं बहुविस्तरम्।
अध्यायानां शते द्वे तु अष्टादश तथापरे।
अष्टौ श्लोकसहस्राणि तथा नव शतानि च।
श्लोकाश्च चतुराशीतिः कृष्णद्वैपायनोऽब्रवीत्।

आदिपर्व अध्याय २१८ श्लोक ८९८४। सभापर्व अध्याय ७८ श्लोक २५११। वनपर्व अध्याय २५९ श्लोक ११६६४। विराटपर्व अध्याय ६७ श्लोक २५००। उद्योगपर्व अध्याय १८६ श्लोक ६६२०। भीष्मपर्व अध्याय ११७ श्लोक ५८८४।

द्रोणपर्व अध्याय १७० श्लोक ९९०९। कर्णपर्व अध्याय ६९ श्लोक ४९००। शल्यपर्व अध्याय ५९ श्लोक ३२२०। गदापर्व अध्याय १८ श्लोक ८७०। ऐषीकसौप्तिकपर्व अध्याय २९ श्लोक ७७५। विशोकस्त्रीपर्व अध्याय ८ श्लोक २५०। शांतिपर्व अध्याय ३३९ श्लोक १६५२५। आनुशासनिकपर्व अध्याय १४६ श्लोक ८०००। आश्वमेधिकपर्व अध्याय १०३ श्लोक ३३२०। आश्रमवासिकपर्व अध्याय ४२ श्लोक * * *। महाप्रस्थान अध्याय ३ श्लोक ३२०। स्वर्गारोहण अध्याय ५ श्लोक २०। हरिवंश अध्याय ३४४ श्लोक १२०००। भविष्यपर्व अध्याय ३११ श्लोक ३४४८ ॥

— For K1 see above.

— K3 ins. after 1. 125. 19 (i. e. before the last colophon), four stanzas of phalas'ruti.

— K3 ins., after the colophon, 2162*, 2161* (as in Ko above); then cont.:

> इत्येतदादिपर्वोक्तं प्रथमं बहुविस्तरम् ।
> अध्यायाश्च तथा प्रोक्ताः शतद्वयमुदारधीः ।
> द्विसप्तत्यधिकास्तथा ।
> श्लोकाश्च नवसाहस्राः संख्याताः परमर्षिणा ।
> श्लोकाश्च चतुराशीतिर्व्यासेनोक्ता महात्मना ।
> विधिवद्भोजयेद्राजन्दद्याच्चैव गुडौदनम् ।

अथादिपर्वणि वृत्तान्ताश्चामी। Then it enumerates the episodes as in Ko (om. only श्राद्धदानं), with the serial numbers, and cont.: इति वृत्तांताः समाप्ताः। ग्रंथ ९०८४। संवत् १५७५ वर्षे श्रावणमासे वलक्ष [? read कृष्ण] पक्षे पंचम्यां तिथौ अभिनंदनवासरे श्रीवटपत्रपुरप्रतिबद्धशमीयालाग्रामनिवासिनान्धुराजातिवर-उपाध्यायशिवदासात्मजभट्टश्रीभाणसुतानामध्ययनार्थं श्रीसंखेटकपुरप्रतिबद्धकांदलाजग्रामनिवासिसाद्वद्रानागरवरपंडितकालीदासात्मजनांजीकेन लिखितम् ।

> सूनुना कालिदासस्य नांजीसंज्ञेन धीमता ।
> पुस्तकं लिखितं सम्यगादिपर्वाख्यमुत्तमम् ॥
> यावल्लवणसमुद्रो यावन्नक्षत्रमण्डितो मेरुः ।
> यावच्चन्द्रादित्यौ तावदिदं पुस्तकं जयतु ॥

श्रीसंखेटकपुरप्रतिबद्धकूकरजग्रामनिवासिललाटवंशोद्भवपरमवैष्णवपरमधार्मिकमंत्रिवरश्रीकान्हविजयतेजसां भार्या उभयकुलानन्ददायिनीबाईमधूसुत-उभयकुलोद्धरणमंत्रिवरश्रीकीणदासेन इदं पुस्तकमादिपर्वाख्यं शमीयालग्रामनिवासि-उपाध्यायशिवदासनांधुरान्वयप्रदीपः तस्य सुतभट्टभाणकस्येदं पुस्तकं ब्रह्मार्पणबुद्ध्या समर्पितम् । भगवान् श्रीलक्ष्मीपतिः प्रीतोऽस्तु । लेखकपाठकयोः शुभं भवतु ॥छ॥ श्रीरस्तु ॥

— K4 ins., after the addl. adhy. (cf. App. I, No. 121), 3 stanzas of दानप्रशस्ति and फलश्रुति; and ends with अतः सभापर्व.

— K5.6 were discontinued after adhy. 2. The colophons of these and of Ñ1.2 V1 were not collated.

— Ñ3 ins. after 1. 125. 19 (i. e. before the last colophon), 2 stanzas of फलश्रुति.

— B1 ins. after the colophon: समाप्तं चेदमादिपर्वेति। अस्यानंतरं सभापर्व भविष्यति। तस्यायमाद्यः श्लोकः।, followed by 2161*. Then it cont.: ॐ नमो भगवते वासुदेवाय। ॐ तत्सत्। श्रीहरिः शरणम्। शकाब्दाः १६६२।

> युगलक्रतुयुगेन्दौ विश्वविस्तीर्णशाके
> शशिसुतशुभवारे माघमासे च रम्ये ।
> अनुपदमनुसृतं कृष्णरामद्विजेन
> लिखितमखिलयत्नैर्भारतस्यादिपर्व ॥
> जज्ञे बहुज्ञं परमत्युदारं
> यं द्वीपमध्ये सुतमात्मयोगात् ।
> पराशरात्सत्यवती महर्षिं
> तस्मै नमोऽज्ञानतमोनुदाय ॥

॥ ॐ नमः परदेवतायै ॥

— The fragm. MS. B2 breaks off in the middle of the Āstīkaparvan.

— B3 ins., after the colophon: 22 stanzas of दानप्रशस्ति and फलश्रुति; then इत्यादिपर्व। अस्यानंतरं सभापर्व भविष्यति। तस्यायमाद्यः श्लोकः।; and then 2161*, ending with शकाब्दाः १६८१ मार्गशीर्षके।

— The fragm. MS. B4 breaks off in the middle of the Sambhavaparvan.

— B5.6 ins. after the colophon, अस्यानंतरं सभापर्व (B5 cont. भविष्यति)। तस्यायमाद्यः श्लोकः।; then 2161*, which in B5 is followed by शकाब्दाः १७०८।

— Da Dn2 ins. after the colophon: श्रीरामाय नमः। अस्मिन्पर्वणि वृत्तांताः। अनुक्रमणिकाध्यायः। पर्वसंग्रहः (Da1 om. from श्रीरामाय up to °संग्रहः)। पौष्योपाख्यानं। तत्रैवोत्तंकोपाख्यानं। पौलोमं। अग्निशापः। प्रमद्वरोपाख्यानं। आस्तीकं। अमृतमथनं। सौपर्णोपाख्यानं। सर्पसत्रं। वरप्रदानं। वैशंपायनानुशासनं। कुरुपांडवचरितसूत्रं। अंशावतरणं। शाकुंतलं। यायातं। उत्तरयायातं। पुरुवंशानुकीर्तनं। महाभिषोपाख्यानं। वसूनां शापः। भीष्मोत्पत्तिः। सत्यवतीलंभः। विचित्रवीर्योत्पत्तिः। काशिराजसुतास्वयंवरः। धृतराष्ट्रोत्पत्तिः। मांडव्योपाख्यानं। गांधार्यादिविवाहः। पांडोर्दिग्विजयः। दुर्योधनादिजन्म। तन्नामकीर्तनं। पांडुमृगया। ब्रह्मशापः। पांडवोत्पत्तिः। द्रोणोत्पत्तिः। कृपोत्पत्तिः। अस्त्रशिक्षा। भीमस्य विषादिदानं। पाताललोकगमनं। अस्त्रदर्शनं। पांडवविवासनं। जतुगृहदाहः। हैडिंबं। घटोत्कचोत्पत्तिः। एकचक्रागमनं।

($D_{a2}$ ins. here बकवधः ।) द्रौपदीसंभवः । अंगारपर्णं । तापत्यं । वासिष्ठं । और्वं । द्रौपदीस्वयंवरः । पंचेंद्रोपाख्यानं । द्रौपदीविवाहः । विदुरागमनं । राज्यलंभः । सुंदोपसुंदोपाख्यानं । अर्जुनतीर्थयात्रा । बभ्रुवाहनोत्पत्तिः । सुभद्राहरणं । द्रौपदेयाभिमन्यूत्पत्तिः । खांडवदाहः । शार्ङ्गोपाख्यानं । इति ॥ Then follow 25 stanzas of दानप्रशस्ति and फलश्रुति; and then: इदमादिपर्वं समाप्तं । अतः परं सभापर्वं भविष्यति । तत्रायमाद्यः श्लोकः ।, which is followed by 2161*.
— $D_{a1}$ cont.: इत्यादिपर्वणि फलश्रुतिः समाप्ता । लेखक जानी जगजीवनरामेण ॥ ६ ॥ शुभं भवतु । कल्याणमस्तु ॥; while $D_{a2}$ cont.: शुभमस्तु ।, followed by 6 stanzas of कृष्णप्रशस्ति, पुस्तकप्रशस्ति and गुरुगोपालप्रशस्ति; on the other hand, $D_{n3}$ cont.: श्रीसांबसदाशिवार्पणमस्तु । श्रीगुरुगजाननार्पणमस्तु । श्रीरामकृष्ण ॥ श्री ॥ सांब ॥ श्री ॥

— $D_{n1}$ ins. after the colophon: ईश्वरसंवत्सरे मार्गशीर्षशुद्धत्रयोदश्यां लिखितं । आदिपर्वं समाप्तिमगमत् ॥

— $D_{n2}$ ends with the colophon; for $D_{n3}$ see above.

— $D_r$ was discontinued after adhy. 2.

— $D_1$ ins. before the colophon, 2 stanzas of फलश्रुति; and after the colophon: समाप्तमादिपर्वं । अतः परं सभापर्वं ।, followed by 2161*.

— $D_2$ ins. after 1. 225. 19, six stanzas of फलश्रुति; and after the colophon: शुभं भवतु । संवत् १६५४ समये आषाढसुदि १३ भृगुवासरे लिखितमिदं वाराणस्यां गोविंदब्राह्मणेन वासुदेवभट्टानां पुस्तकं । श्रीभवानीशंकर ॥, followed by 2161*. Then follows: अनुक्रमणिका । पर्वसंग्रहः । पौलोमाख्यानं । सर्पसत्रं । तक्षकयज्ञमोक्षः । गरुडोत्पत्तिः । शासनं । कुरुपांडवचरितसूत्रं । अंशावतरणं । शाकुंतलं । यायातं । उत्तरयायातं । पुरुवंशानुकीर्तनं । महाभिषोपाख्यानं । भीष्मोत्पत्तिः । सत्यवतीलंभः । विचित्रवीर्योत्पत्तिः । अंबास्वयंवरः । धृतराष्ट्रोत्पत्तिः । मांडव्योपाख्यानं । गांधारीविवाहः । पांडोर्दिग्विजयः । दुर्योधनादिजन्म । तेषां नामानुकीर्तनं । पांडोर्मृगव्यवाये ब्राह्मणशापः । पांडवोत्पत्तिः । अस्त्रशिक्षा । भीमस्य विषभक्षणं । अस्त्रदर्शनं । जतुगृहदाहः । हिडिंबवधः । घटोत्कचोत्पत्तिः । बकासुरवधः । द्रौपदीसंभवः । तापत्यं । वासिष्ठं । और्वं । द्रौपदीस्वयंवरः । पंचेंद्रोपाख्यानं । पांडवानां विवाहः । विदुरागमनं । राज्यलाभः । इंद्रप्रस्थागमनं । सुंदोपसुंदोपाख्यानं । ४२ ॥

अध्यायानां शते द्वे तु संख्याते परमर्षिणा ।
अष्टौ श्लोकसहस्राणि नव श्लोकशतानि च ।
श्लोकाश्च चतुराशीतिर्दृष्टो ग्रन्थो महात्मना ।

Then 3 stanzas of दानप्रशस्ति, followed by इति श्रीअनुक्रमणिकाध्यायः समाप्तः । शुभं भवतु ॥

— The fragm. MS. $D_3$ breaks off in the middle of the Yayāti episode.

— $D_4$ (marg. *sec. m.*) ins. after 1. 225. 19 (i. e. before the colophon): इतः परं सभापर्वं भविष्यति । तस्यायमाद्यः श्लोकः ।, followed by 2161*.

— $D_5$ ins. after 1. 225. 19 (i. e. before the colophon), 7 stanzas of फलश्रुति, ending with:

इत्येतदादिपर्वोक्तं प्रथमं बहुविस्तरम् ।

अस्मात्तु सभापर्वं भविष्यति । तस्यायमाद्यः श्लोकः ।, followed by 2161*; then follows: आद्यपर्वण्यमी वृत्तांताः । पर्वानुक्रमः । पर्वसंख्यासंग्रहः । कथासंक्षेपः । व्यासोत्पत्तिः । अंशवर्णनं । राजसर्गः । शाकुंतलं । यायातं । उत्तरयायातं । पुरुवंशानुकीर्तनं । शंतनोर्विवाहः । शंतनोर्विपत्तिः । अंबिकाविवाहः । धृतराष्ट्रपांडुविदुरजन्म । पांडवोत्पत्तिः । पौलमे गुरुशिक्षा । अश्विस्तोत्रं । पौलोमे भृगुवंशवर्णनं । पुलोम्नो वधः । शार्ङ्गोपाख्यानं । आस्तीकसर्पसत्रं ॥ शुभं भूयात् ॥ संवत् १८५८॥

— $D_{6.7}$ were discontinued after adhy. 53; $D_{8-14}$, after adhy. 2.

— $T_1$ ins. after the colophon: ॐ शुभमस्तु । संभवपर्व समाप्तम् । श्रीकृष्णाय परब्रह्मणे नमः ॥

— The colophon of the fragm. MS. $T_2$ is missing.

— $T_3$ ins. after the colophon: करकृतमपराधं क्षंतुमर्हंति संतः ॥ श्रीत्यागेश्वराय नमः । श्रीवेंकटेशाय नमः ॥ मंगलं ॥ श्री ॥ श्रीर्जयतु ॥ ६ ॥

— $G_1$ ins. after the colophon: हरिः ॐ । शुभमस्तु ।

आदिपर्व महापुण्यं वत्सरे पिङ्गले शुभे ।
अयने दक्षिणे पुण्ये लिखितं वाञ्छितप्रदम् ।

— $G_2$ ins. after the colophon: श्रीकृष्णाय नमः । श्रीकृष्णार्पणमस्तु । शुभमस्तु ॥; then a stanza of क्षमापन; and finally श्रीरंगनाथपरब्रह्मणे नमः । श्रीसुंदरराजपरब्रह्मणे नमः । हरिः ॐ । आदिपर्वं समाप्तं । श्रियै नमः ॥

— $G_3$ ins. after the colophon: श्रीवेदव्यासाय नमः । श्रीकृष्णार्पणमस्तु ॥; then 13 stanzas of फलश्रुति and दानप्रशस्ति; then a repetition of श्रीवेदव्यासाय नमः । श्रीकृष्णार्पणमस्तु ।, followed by 3 stanzas of नमन; then:

अर्जुनो जयतां श्रेष्ठो मोक्षयित्वा मयं तदा ।
किं चकार महातेजास्तन्मे ब्रूहि द्विजोत्तम ।

श्रीवैशंपायनः ।

शृणु राजन्नवहितश्चरितं पूर्वजन्मनः ।
मोक्षयित्वा मयं तत्र पार्थः शस्त्रभृतां वरः ।

आदिपर्वं समाप्तं । करकृतमपराधं क्षंतुमर्हंति संतः ॥ श्रीवेदव्यासाय नमः ॥; and finally a stanza of दोषनिरास.

Prof. STEN KONOW, Ethnographic Museum, Christiania: "Every serious student will feel sincerely thankful to you and your collaborators for the great and conscientious work you have given us."

Prof. LIONEL D. BARNETT, British Museum: "I heartily congratulate you on the excellent manner of the work. The critical method is thoroughly scientific, and the results are very interesting. I hope that the enterprise will receive all the support that it deserves."

Prof. F. BELLONI FILIPPI, University of Pisa: "I congratulate you and your colleagues of the Mahābhārata Editorial Board on the difficult task you have fulfilled with the first fascicule of the *editio critica* of the Great Epic of India. All the Sanskrit scholars who follow your endeavour with the most lively interest will be satisfied with the constituted text, that seems to give the most faithful picture of the original possible to be retraced under the present circumstances."

Prof. H. ZIMMER, University of Heidelberg: "Your edition will be the classical one, of this classical text, superseding all former editions, and may serve for all further investigation concerning the great Indian Epic."

*Zeitschrift für Indologie und Iranistik*, Leipzig: "Eine gediegene Leistung, die zu den besten Hoffnungen berechtigt und sowohl dem durch seine scharfsinnigen Arbeiten wohlbekannten Herausgeber als auch den anderen beteiligten alle Ehre macht. . . . Wir müssen uns dankbar damit zufrieden gehen, dass Indien das leistet, was zur Zeit möglich und notwendig ist. Wir sehen schon jetzt, das die bahnbrechenden Arbeiten der Kommission uns eine reiche wissenschaftliche Ernte schenken werden."

*Rivista degli Studi Orientali*, Rome: "L'avvenimento è troppo importante perchè non meritdi esser segnalato ai sanscritisti ed agli amici dell' India. . . . Il "General Editor", dott. V. S. Sukthankar, che accoppia all'acutezza dell'ingei gno e alla vastità delle letture la severità dei metodi europei, derettamente appresi alla scuola del Lüders, parla del lavoro come di un "very fascinating work" nè risparmia fatica per la riuscita di un'opera, a cui resterà per sempre legato il nome dei dotti collaboratori. E lo stabilimento tipografico *Nirnaya Sagar* di Bombay . . . non ha lesinato i mezzi per giungere a un'edizione, la quale per nitidezza di caratteri e bontà di material impiegati nulla ha da invidiare alle migliori edizioni europee."

*Orientalistische Literatur Zeitung*: "Nur soviel kann schon jetzt festgestellt werden, dass der Herausgeber offenbar mit der rühmenswertesten Akribie gearbeitet und sich alle Mühe gegeben hat, um einen wahrhaft kritischen Text herzustellen. Wenn es den indischen Gelehrten möglich werden wird—was wir immer ernstlich hoffen—in absehbarer Zeit einen kritischen Text des ganzen gewaltigen Epos hervorzubringen, so werden sie sich damit ein monumentum aere perennius errichtet haben und sich die Dankbarkeit vieler Generationen von Sanskritgelehrten zugesichert haben."

*Journal of the American Oriental Society*: "One of the most valuable of Sukthankar's results is his establishment for the first time of a "Kāśmīrī" recension of the epic. . . . Dr. Sukthankar deserves to be heartily congratulated on the brilliant success of his work. More than that, he deserves the active support of all Sanskritists, and of all who are interested in the furtherance of this supremely important work, which none could do better than he."

*Indian Historical Quarterly*: "The Institute is to be congratulated on the admirable beginning that has been made, under the able editorship of Dr. Sukthankar, of a truly colossal task, which we sincerely hope it will be able to bring to a successful completion. . . . So far as one can judge from the published specimen, the course adopted by the editor is fully justified by the facts of the case, and the major part of the text has been reconstructed with a degree of approximation which may be deemed sufficient for all critical purposes. The reviewer, as an Indian, may be excused for entertaining a pardonable pride in the fact that the first critical edition of the great Indian epic is undertaken, as it should be, by a band of Indian scholars. Let us hope that when it is completed it will stand as a glorious monument of Indian scholarship."

*The Times, Literary Supplement*: "The lines... on which they are proceeding appear to be thoroughly sound. This first tiny instalment shows that the work has been begun in earnest, and all Sanskrit scholars will wish it success."

## The Indian Press

*The Times of India*, Bombay: "There is no doubt that, when completed, this first critical edition of the great epic will be an achievment of international importance reflecting no little credit on the Sanskrit scholarship of India. We have no hesitation in appealing to the Indian public and all lovers of learning to extend their generous help to a work of such monumental importance."

*The Bombay Chronicle*, Bombay: "The whole public of India, especially the Indian Princes and Universities, owe it to themselves and the country to finance this project.'

*The Leader*, Allahabad: "Considering the importance of the undertaking, which is of a national character, every financial help renderd to the Institute for the successful completion of the enterprise, will be help rendered to a very deserving object."

*United India and Indian States*, Delhi: "When this is done for the whole work, the Institute will have accomplished a great task of international importance, which would be admired and highly prized both by the Indian and European scholars."

## Donations (of Rs. 250 and above) received and promised

ANNUAL GRANTS.

| | |
|---|---|
| Ruler of Aundh | Rs. 6,000 |
| Government of Bombay | „ 6,000 |
| Government of India | „ 4,000 |
| University of Bombay | „ 3,000 |
| Government of Madras | „ 1,000 |
| Government of Burma | „ 500 |
| Government of Baroda | „ 500 |
| Government of Mysore | „ 500 |
| Chief of Phaltan | „ 500 |
| Maharaja of Porbandar | „ 250 |
| Chief of Sangli | „ 250 |
| Chief of Ichalkaranji | „ 250 |
| Chief of Vishalgad | „ 100 |
| Chief of Ramdurg | Rs. 100 |
| Sardesai of Vantmuri | „ 50 |

OTHER DONATIONS.

| | |
|---|---|
| Bhavnagar Darbar | „ 2,000 |
| H. A. Shah Esq., Bombay | „ 1,000 |
| Chief of Bhor | „ 500 |
| V. P. Vaidya Esq., Bar.-at-law, Bombay. | „ 500 |
| Harilal Jagannath Esq., Cambay | „ 500 |
| Tulsidas Charities, Bombay | „ 500 |
| Shantaram N. Dabholkar Esq., Bombay. | „ 500 |
| Savitribai Bhat Trust, Bombay | „ 400 |
| Jaikrishna Trust, Bombay | „ 300 |
| Haridas Dhanji Mulji Esq., Bombay | „ 300 |
| Rajguru Hemraj Pandit, C. I. E.; Nepal. | „ 250 |

## Critical Edition of the Mahābhārata: Rates of Subscription

Class A (Payment *in advance*):

(i) Paper-cover fascicules . . . Rs. 150

(ii) Cloth bound volumes . . . . „ 165

Class B (*Deferred* payment):

(i) Paper-cover fascicules . . . Rs. 200

(ii) Cloth bound volumes . . . . „ 215

Subscribers of class B are required to deposit Rs. 10 out of the price for registration of the order; the balance will be recoverd by V. P. P. as the fascicules or the volumes are published. Permanent members of the Institute obtain the edition at reduced rates; these rates for class A (i) and (ii) are Rs. 120 and 132 respectively.

Price of fascicule 6 . . . . . Rs. 7-0

Price of fascicules 1—6 . . . . „ 27-0

*All the above prices are exclusive of postage.*

For further particulars, apply to the Secretary, Mahābhārata Editorial Board, Bhandarkar Oriental Research Institute, Poona 4.

Published by the Bhandarkar Oriental Research Institute, Poona.

Printed by Ramchandra Yesu Shedge at the Nirnaya Sagar Press, 26-28, Kolbhat Lane, Bombay.

*Parts are not sold singly.*

ĀDIPARVAN: FASCICULE 7.

# THE MAHĀBHĀRATA

FOR THE FIRST TIME CRITICALLY EDITED BY

VISHNU S. SUKTHANKAR

WITH THE CO-OPERATION OF

SHRIMANT BALASAHEB PANT PRATINIDHI; S. K. BELVALKAR; A. B. GAJENDRAGADKAR; P. V. KANE; R. D. KARMARKAR; V. G. PARANJPE; V. K. RAJAVADE; N. B. UTGIKAR; P. L. VAIDYA; V. P. VAIDYA; M. WINTERNITZ; R. ZIMMERMANN, S. J. AND OTHER SCHOLARS

AND ILLUSTRATED FROM ANCIENT MODELS BY

SHRIMANT BALASAHEB PANT PRATINIDHI

RULER OF AUNDH

VOLUME 1

Under the Patronage of the Ruler of Aundh; the Imperial Government of India; the Provincial Governments of Bombay, Madras and Burma; the Hyderabad (Deccan), Baroda and Mysore States; the University of Bombay; and other Distinguished Donors

POONA

BHANDARKAR ORIENTAL RESEARCH INSTITUTE

1933

## Opinions and Reviews

His Excellency Sir LESLIE WILSON, P. C., G. C. I. E., C. M. G., D. S. O., Late Governor of Bombay: "I heartily congratulate you and all those who have been working with you, on this production. The first critical examination of the Mahabharata is undoubtedly a *national* work, and I sincerely trust that you will receive whole-hearted support in this publication."

The late Prof. A. HILLEBRANDT: "Your enormous undertaking represents the greatest progress in the philological history of the Indian epics and is sure to throw into shade all previous works, and to add to the glory of Indian scholarships. I take the liberty to congratulate you on seeing your name, so well known to your fellow workers, connected with that edition. It is one of the weakest (if not *the* weakest) points in Indian philology, that we have as yet no scientific editions of the Mahābhārata or the Rāmāyaṇa; and I am glad to see the much-felt gap now being filled up in a thoroughly worthy manner."

Prof. H. JACOBI, University of Bonn: "Your edition furnishes us *just* with what we want. I consider your text as reliable as can be expected under the circumstances. . . . Your plan is the best which can be advised."

Prof. H. LUEDERS, University of Berlin: "I was greatly impressed by the arrangements that have been made at the Institute for the collation of the Mahābhārata MSS. The arrangements are such as will ensure great accuracy and perfect clearness in the registration of the various readings. . . . Your work seems to me to merit the highest possible praise both as regards the constituting of the text, and the clarity and succinctness with which the MSS. evidence has been recorded....In my reading of the text I came across no passage of any importance, where I had occasion to differ from you, as to the choice of the right reading."

Prof. M. WINTERNITZ, University of Prag: "I have read very carefully your "Foreword," and I may say that I fully agree with the general principles laid down in it. . . . As far as I have read in the text it seems to me that you have done your level best in the work of "purifying" the text. . . . I am happy to see that the actual beginning you have made *proves* not only the possibility, but also the absolute necessity and usefulness of such an edition."

Prof. F. W. THOMAS, University of Oxford: "I agree with the views expressed in your "Foreword". It seems we can have a single text, much superior to what is represented by any existing edition."

Prof. FRANKLIN EDGERTON, Yale University: 'I have examined very minutely considerable sections of the work on the first two Adhyāyas' as completed by Dr. Sukthankar, and he has fully explained to me the methods adopted in collating and classifying the MSS., establishing the text, and recording the manuscript variants. . . . I do not think it would be possible to improve on the work as it is now being done, with the materials at the disposal of the editor. . . . His notions of text-criticism, his weighing of discordant readings, his estimates of the relations and comcarative value of various MSS. and recensions, the clarity and succinctness with which he presents his results—all these seem to me to merit the highest possible praise."

Prof. A. BERRIEDALE KEITH, Edinburgh University: "The prime need appears to me to be fulfilled excellently by the form in which your collations are presented....As to the possibility of arriving at a definitive early text, nothing can be added to your own observations, and after much consideration of reasons for and against, I think that you are right in endeavouring to carry the work of reconstruction out in the manner which has commended itself to you. . . . So far as I have tested the readings adopted, I can see that a good case can always be made out for them. I cannot, therefore, suggest any alterations in the mode of procedure adopted and I consider that by working along the lines already followed a very important service will be rendered to the study of the epic."

Mahamahopadhyaya Dr. GANGANATHA JHA, Vice-Chancellor, University of Allahabad: "As the work has been so well done, I do not find anything to suggest or criticize. Allow me to congratulate you on the success of your work."

— G4 ins. after the colophon: हरिः ॐ । शुभमस्तु । संभवपर्व समाप्तं । शुभमस्तु ॥ करकृतमपराधं क्षंतुमर्हंति संतः । श्रीमत्स्वामिने नमः । श्रीनिवासाय नमः । राघवस्य लिपिः ॥

— G5 ins. after the colophon: हरिः ॐ । शुभमस्तु । कल्याणसुंदर्यै नमः । अस्मद्गुरुभ्यो नमः ॥

— G6 ins. after the colophon: हरिः ॐ । शुभमस्तु । श्रीकृष्णाय नमः । करकृतमपराधं क्षंतुमर्हंति संतः । आदिपर्व समाप्तं । श्रीवेदव्यासाय नमः । श्रीमीनाक्षीसुंदरेश्वराय नमः । श्रीहास्यपतये नमः । श्रीरामचंद्राय नमः ।. Then follow the date and other details in Tamil. The MS. was copied by the son of Vaidyanāthas'iva of Tepperumāl Nallūr for Seshappayyar's Sarasvati Library, situated in Mahāpura road in Madhyārjuna (village), on the 22nd day of the month Kumbha of Krodhi Saṁvatsara.

— G7 was discontinued after adhy. 2.

— The incomplete MSS. M1.2.4 end with adhy. 53 (*q. v.*)

— M3 ins. after the colophon: १०१३ संवत् [*ca.* A. D. 1837–38] मिथुनमासे २८ दिवसे मंगलवासरे श्रवणनक्षत्रे अपरपक्षे तृतीयायामपराह्णे द्विवादनवेलायां लिखितं । नारायणेन लिखितमिदं ॥ श्रीगोपालकृष्णार्पणमस्तु ॥ शुभमस्तु ॥

— M5 ins. after the colophon, one stanza of क्षमापन; then follows: श्रीवेदव्यासाय नमः । संभवपर्व समाप्तं । शुभमस्तु । श्रीगुरुभ्यो नमः ॥

— M6 ins. after the colophon: संभवपर्व समाप्तं । शुभमस्तु ॥

— M7 ins. after the colophon: श्रीसंभवपर्व समाप्तं । श्रीकृष्णाय नमः । करकृतमपराधं क्षंतुमर्हंति संतः ॥

— M8 ins. after the colophon: संभवपर्व समाप्तं । शुभमस्तु ॥ कोल्लं १०१७ आमत् धनुर्मासं २६ तेति शनियाऴ्च तिरिञ्ञु ओरटियाकुंचोळ मीनराशिकोंड एऴुदितीर्न्न पुस्तकं संभवमूलं व्याख्यानं ग्रंथं उळच्चाणूर् कळरिक्कल् रामन्‌करलिखितं ॥ The date given here is Malabar year 1017 (*ca.* A. D. 1841–42) the 26th day of the month of Dhanus, which was a Saturday; the copyist was Uḷaccāṇūra-Kaḷarikkal-Rāman.

# APPENDIX I

This Appendix comprises a series of additional passages found in different MSS. which have been cited in the foregoing footnotes to the constituted text, but which, for various reasons, were not quoted there in extenso. They are mainly passages which were too long to be included in the footnotes; but along with them there will be found a certain number of short unimportant passages also, which could have been very easily accomodated in the footnotes, but which, being found in single MSS. or in a very small group of cognate MSS., have been relegated to this Appendix as being of no special value for critical purposes.

The variants cited here are of the same order as those of the additional lines noted in the footnotes to the constituted text; in other words, the variants of monosyllabic verse-filling particles (such as च-वै-तु-हि) and adverbs (such as तथा-तदा-ततः, एव-एवं), discrepant readings of single MSS., corrupt readings, and common doublets (वेदि-वेदी, रोम-लोम) have been generally ignored, scribes' errors have been silently corrected. Furthermore, the variants of the short prose formulaic, references to the speaker (such as वैशंपायन उवाच) have been uniformly ignored here.

In stray cases, slight discrepancies may be found to exist between the statements already made and the statements made in the sequel as regards the precise number of MSS. which contain a particular Appendix passage, or its exact point of insertion, or finally the exact number of lines comprising a passage. Such discrepancies have been pointed out in the sequel, whenever they were noticed; a certain number might have escaped attention. In all such cases, however, it should be borne in mind that the previous statements were based on a somewhat cursory inspection of the respective passages, which were re-examined in the course of the preparation of this Appendix. Consequently, the statements made in this Appendix concerning such minutiae should be regarded as more authoritative, and as correcting or supplementing the information given in the footnotes.

1

D6.8 T2 G3–6 M (M1 om. lines 1–56) ins. after 62: D14 G1.2, after 26: K4 (suppl. fol.).6 Dn Dr D2.4.5, after 53[ab]: D3.7.9–13, after 60: T1 G7, after 30*: K5, after 62[ab]:

तस्याख्यानवरिष्ठस्य कृत्वा द्वैपायनः प्रभुः ।
कथमध्यापयानीह शिष्यानित्यमचिन्तयत् ।
तस्य चिन्तयतश्चापि ऋषेर्द्वैपायनस्य च ।
स्मृत्वाजगाम भगवान्ब्रह्मा लोकगुरुः स्वयम् ।
प्रियार्थं महर्षेश्चापि लोकानां हितकाम्यया । [5]
तं दृष्ट्वा विस्मितो भूत्वा प्राञ्जलिः प्रणतः स्थितः ।
आसनं कल्पयामास सर्वदेवगणैर्युतम् ।
हिरण्यगर्भमासीनं तस्मिंस्तु परमासने ।
परिवृत्यासनाभ्याशे वासवेयः स्थितो नतः ।
अनुज्ञातोऽथ कृष्णस्तु ब्रह्मणा परमेष्ठिना । [10]
निषसादासनाभ्याशे प्रीयमाणः सुविस्मितः ।
उवाच स महातेजा ब्रह्माणं परमेष्ठिनम् ।
कृतं मयेदं भगवन्काव्यं परमपूजितम् ।
ब्रह्मन्वेदरहस्यं च यच्चान्यत्ख्यापितं मया ।
साङ्गोपनिषदानां च वेदानां विस्तरक्रिया । [15]
इतिहासपुराणानामुन्मेषं निमिषं च यत् ।
भूतं भव्यं भविष्यच्च त्रिविधं कालसंज्ञितम् ।
जरामृत्युभयव्याधिभावाभावविनिश्चयम् ।
विविधस्य च धर्मस्य ह्याश्रमाणां च लक्षणम् ।
चातुर्वर्ण्यविधानं च पुराणार्थं च कृत्स्नशः । [20]
तपसो ब्रह्मचर्यस्य पृथिव्याश्चन्द्रसूर्ययोः ।
ग्रहनक्षत्रताराणां प्रमाणं च युगैः सह ।
ऋचो यजूंषि सामानि वेदाध्यात्मं तथैव च ।
न्यायः शिक्षा चिकित्सा च ज्ञानं पाशुपतं तथा ।
इति नैकाश्रयं जन्म दिव्यमानुषसंश्रितम् । [25]
तीर्थानां चैव पुण्यानां देशानां चैव कीर्तनम् ।
नदीनां पर्वतानां च वनानां सागरस्य च ।
पुराणां चैव दिव्यानां कल्पानां युद्धकौशलम् ।
वाक्यजातिविशेषांश्च लोकयात्राक्रमश्च यः ।
यच्चापि सर्वगं वस्तु तत्प्रभो क्षन्तुमर्हसि । [30]

1

(L. 1) K4.6 Dn Dr D2.3.6–8 तदाख्यानवरिष्ठं स. D9–11 T G5–7 M2–4 कृष्णद्वैपा°. — (L. 2) K6 Dn3 Dr D2.5 G4 M3.4 शिष्यानित्यन्वचिंतयत्; Dn1.n2 शिष्यानेवं व्यचिं°; D3.4.6–12 G6 M1 °नित्यभ्यचिं°; T1 G5 स शिष्यानित्यचिं°. — (L. 3) K4 D6 G6 M2–4 तस्य चिंतयमानस्य; K5 D1.6–13 तस्य तच्चिंतयानस्य; K6 Dn Dr D2.5 तस्य तच्चिंतितं ज्ञात्वा. — (L. 4) K6 Dn Dr D2.5 तत्र (for स्मृत्वा). — (L. 5) K4–6 Dn Dr D2–13 T2 प्रीत्यर्थं तस्य चैवर्षेर्. G1–3 महर्षेश्चापि लोकानां प्रीत्यर्थं हित°. — (L. 7) MSS. सर्वैर् (for सर्व-), -मुनि- (for -देव-), and वृतः or वृतं (for युतम्) in different combinations. — (L. 9) K4–6 Dn Dr D2–13 [ऽ]भवत् (for नतः). — (L. 10) G4–6 कृतिना (for कृष्णस्तु). — (L. 11) K4–6 Dn Dr D2–13 शुचिस्मितः (for सुवि°). — (L. 14) K4–6 Dn Dr D2–13.14 M3 स्थापितं (for ख्यापितं). — (L. 15) K5.6 Dn D2–13 T G1.4.5.7 M3 °निषदां चैव. — (L. 16) K4–6 Dn Dr D2.4.5 निर्मितं (for निमिषं). — (L. 17) K4–6 Dn Dr D2.4–8 T1 भविष्यं च. — (L. 18) G1–5.7 M2.3 °निश्चयं (as in text); the rest °निश्चयः. — (L. 20) D6.14 G2 M3 पुराणानां; G1.6 M2.4 पुरुषाणां. — (L. 24) K4–6 Dn Dr D2–8 दानं (for ज्ञानं). — (L. 25) K4.6 Dn Dr D2.5 हेतुनैव समं; T1 G1.4–6 इत्यनेकाश्रयं. — (L. 30) K4.6 Dn Dr D2–5 तथैव प्रतिपादितं. — After line 30, K4 ins.:

सर्वं च मत्कृतं कर्म तत्प्रभो क्षन्तुमर्हसि ।

K4 cont.: K6 Dn Dr D2.5 ins. after line 30:

परं न लेखकः कश्चिदेतस्य भुवि विद्यते ।

— (L. 31) K4–6 Dn Dr D2 G1.7 विशिष्टात् (for वसिष्ठात्). K6 Dn Dr D2 मुनिसंचयात्. — (L. 32) K4–6 Dn Dr D2–13 M3 श्रेष्ठतरं त्वां वै; G2.3 श्रेष्ठमपि त्वा°. — (L. 33) K4–6 Dn Dr D2.4.5 वेद्मि. — Lines 35–36 = (var.) 187*. — Dn D2–13 (D3.4.6–13 om. lines 2 [with सौति°], 4–5, 8, 12, 14, 19–20) ins. after line 36: K4.6 Dr after line 39:

काव्यस्य लेखनार्थाय गणेशः स्मर्यतां मुने ।
सौतिरुवाच ।
एवमाभाष्य तं ब्रह्मा जगाम स्वं निवेशनम् ।
ततः सस्मार हेरम्बं व्यासः सत्यवतीसुतः ।
स्मृतमात्रो गणेशानो भक्तचिन्तितपूरकः ।
तत्राजगाम विघ्नेशो वेदव्यासो यतः स्थितः । [5]
पूजितश्चोपविष्टश्च व्यासेनोक्तस्तदानघ ।
लेखको भारतस्यास्य भव त्वं गणनायक ।
मयैव प्रोच्यमानस्य मनसा कल्पितस्य च ।
श्रुत्वैतत्प्राह विघ्नेशो यदि मे लेखनी क्षणम् ।
लिखतो नावतिष्ठेत तदा स्यां लेखको ह्यहम् । [10]
व्यासोऽप्युवाच तं देवमबुद्ध्वा मा लिख क्वचित् ।
ओमित्युक्त्वा गणेशोऽपि बभूव किल लेखकः ।
ग्रन्थग्रन्थिं तदा चक्रे मुनिर्गूढं कुतूहलात् ।
यस्मिन्प्रतिज्ञया प्राह मुनिर्द्वैपायनस्त्विदम् ।
अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च । [15]

ब्रह्मा ।

तपोविशिष्टादपि वै वसिष्ठान्मुनिपुंगवात् ।
मन्ये श्रेष्ठतमं त्वाद्य रहस्यज्ञानवेदनात् ।
जन्मप्रभृति सत्यां ते वेद्मि गां ब्रह्मवादिनीम् ।
त्वया च काव्यमित्युक्तं तस्मात्काव्यं भविष्यति ।
अस्य काव्यस्य कवयो न समर्था विशेषणे । [ 35 ]
विशेषणे गृहस्थस्य शेषास्त्रय इवाश्रमाः ।
जडान्धबधिरोन्मत्तं तमोभूतं जगद्भवेत् ।
यदि ज्ञानहुताशेन त्वया नोज्ज्वलितं भवेत् ।
तमसान्धस्य लोकस्य वेष्टितस्य स्वकर्मभिः ।
ज्ञानाञ्जनशलाकाभिर्बुद्धिनेत्रोत्सवः कृतः । [ 40 ]
धर्मार्थकाममोक्षार्थैः समासव्यासकीर्तनैः ।
त्वया भारतसूर्येण नृणां विनिहतं तमः ।
पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्नाप्रकाशिना ।
नृणां कुमुदसौम्यानां कृतं बुद्धिप्रबोधनम् ।
इतिहासप्रदीपेन मोहावरणघातिना । [ 45 ]
लोकगर्भगृहं कृत्स्नं यथावत्संप्रकाशितम् ।
संग्रहाध्यायबीजो वै पौलोमास्तीकमूलवान् ।
संभवस्कन्धविस्तारः सभारण्यविटङ्कवान् ।
अरणीपर्वरूपाढ्यो विराटोद्योगसारवान् ।
भीष्मपर्वमहाशाखो द्रोणपर्वपलाशवान् । [ 50 ]
कर्णपर्वचितैः पुष्पैः शल्यपर्वसुगन्धिभिः ।
स्त्रीपर्वैषीकविश्रामः शान्तिपर्वबृहत्फलः ।
अश्वमेधामृतरसस्त्वाश्रमस्थानसंश्रयः ।
मौसलश्रुतिसंक्षेपः शिष्टद्विजनिषेवितः ।
सर्वेषां कविमुख्यानामुपजीव्यो भविष्यति । [ 55 ]
पर्जन्य इव भूतानामक्षयो भारतद्रुमः ।

सूतः ।

एवमाभाष्य तं ब्रह्मा जगाम स्वं निवेशनम् ।
भगवान्स जगत्स्रष्टा ऋषिदेवगणैः सह ।
तस्य वृक्षस्य वक्ष्यामि शश्वत्पुष्पफलोदयम् ।
स्वादुमेध्यरसोपेतमच्छेद्यममरैरपि । [ 60 ]

☞ After the above passage, $D_{3.7-12}$ ins. 27*, while $D_{14}$ $G_{1.2}$ *repeat* 23, an unmistakable indication that the passage, in these MSS. or in their exemplars at least, is an interpolation!

## 2

Between 1. 1. 53[ab] and passage No. 1 given above, $K_6$ marg. ins. the following lines, containing a curious derivation of 'Bhārata':

कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ॥
भाति सर्वेषु वेदेषु रतिः सर्वेषु जन्तुषु ।
तरणं सर्वलोकानां तस्माद्भारतमुच्यते ॥

---

अहं वेद्मि शुको वेत्ति संजयो वेत्ति वा न वा ।
तच्छ्लोककूटमद्यापि ग्रथितं सुदृढं मुने ।
भेत्तुं न शक्यतेऽर्थस्य गूढत्वात्प्रश्रितस्य च ।
सर्वज्ञोऽपि गणेशो यत्क्षणमास्ते विचारयन् ।
तावच्चकार व्यासोऽपि श्लोकानन्यान्बहूनपि । [ 20 ]

[ Line 2 = line 57 (*q. v.*) of passage No. 1. $D_{3.4.6-12}$ (which om. lines 3, 4–5, 8, 12, 14, 19–20) read in line 3 स्मरणादागतो हि सः (for व्यासः सत्य°); for line 7, ले° भारतस्य त्वमहं कर्ता भवामि च; for lines 9–10,

श्रुत्वावोचद्गणेशस्तु यदा मे नैव शाम्यति ।
लेखनी मुनिशार्दूल लेखकोऽहं तदा मुने ।;

in line 11, प्रोवाच वचनं व्यासोप्यबुध्वा; for line 12, इत्यभूल्लेखको देवः सर्वज्ञः कृतनिश्चयः; and, finally, for lines 17–18, इति संश्राव्य भिद्यंते नाद्यापि ग्रंथयो दृढाः. ]

— $K_3$ Dn $D_{2.5}$ om. lines 37–38. $K_4$ repeats lines 37, 39, and Dr repeats line 39 after the Gaṇeśa interpolation. — (L. 39) $K_6$ Dn Dr $D_{2.5}$ अज्ञानतिमिरांधस्य लोकस्य तु विचेष्टतः. — (L. 40) $K_6$ Dn Dr $D_{2.5}$ नेत्रोन्मीलनकारकं. — (L. 42) $K_{4-6}$ Dn $D_{2-5}$ $G_3$ तथा (for त्वया). — (L. 43) $K_{4-6}$ Dn Dr $D_{2.5.7.10}$ °ज्योत्स्नाः प्रकाशिताः. — (L. 44) $K_6$ Dn Dr $D_{2.5}$ नृबुद्धिकै(MSS. mostly °कौ)रवाणां च कृतमेतत्प्रकाशनं. — (L. 48) $K_{4-6}$ Dn Dr $D_{2.3.5-8}$ $G_{1-6}$ सभारण्य° (as in text); the rest सभापर्व°. — (L. 49) S (mostly) आरण्यपर्व°; a few MSS. अरणीपूर्व°. — (L. 51) $K_{4-6}$ Dn Dr $D_{2.3.5-8}$ °सितैः (for °चितैः). — After line 51, $D_{9-12}$ ins.:

गदापर्वापकफलैरैषीकेपत्फलोदयैः ।
सौप्तिकैः पर्वसहितैः फलसंस्कारकारणैः ।

— (L. 52) $G_6$ स्त्रीपर्वैकांत°. $K_{4-6}$ Dn Dr $D_{2-12}$ $G_{4-6}$ °महा° (for °बृहत्°). — After line 52, $K_4$ ins.:

अनुशासनिकं पर्व रसमित्यभिधीयते ।

— $K_{3.6}$ $D_{2.3.5.7}$ om. lines 53–56; $D_{6.8}$ $M_{2.3}$ om. 55–56; $M_4$ om. 53–54. — (L. 53) Some MSS. स्वाश्रम° (for त्वाश्रम°). — (L. 56) $K_4$ Dr $D_{14}$ पक्षिणां; $D_{4.10.11}$ $G_{3.5}$ आश्रयो (for अक्षयो). — $K_{4.6}$ Dn Dr $D_{2.5}$ read line 57 (which is om. in $D_{7.9}$) of the Brahmā passage after line 1 of Gaṇeśa's interlude. — (L. 58) Om. in $K_6$ Dn Dr $D_{2.3.7.9.14}$. Some N MSS. मुनिदेवगणैर्वृतः (*or* °र्युतः). — (L. 59) $K_4$ $D_{14}$ $T_1$ $G_{4-6}$ शाखापुष्प°; $G_3$ यावत्पुष्प°.

3

After the colophon of the first adhy., G1.2 ins.:

श्रीसूतः ।
कृष्णद्वैपायनं व्यासं विद्धि नारायणं विभुम् ।
को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ।
मतिमन्थानमाविध्य येन वेदमहार्णवात् ।
जगद्धिताय जनितो महाभारतचन्द्रमाः ।
स्तुत्यं तस्यास्ति किं चान्यत्सर्वलोकहितैषिणः । [5]
वेदा व्यस्ताः कृतं तेन महाभारतमद्भुतम् ।
सर्वे तरन्तु दुर्गाणि सर्वो भद्राणि पश्यतु ।
इत्युक्त्वा सर्ववेदार्थान्भारते तेन दर्शिताः ।
श्रूयतां सिंहनादोऽयमृषभस्य महात्मनः ।
धर्मे चार्थे च कामे च मोक्षे च परमर्षभ । [10]
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ।
एष प्रकृत्यैव यतो लोकः सक्तोऽर्थकामयोः ।
धर्ममोक्षपरं तस्मात्करिष्येऽहं समुच्चयम् ।
कामिनो वर्णयन्कामं लोभं लुब्धस्य वर्णयन् ।
नरः किं फलमाप्नोति कूपेऽन्धमिव पातयन् । [15]
मुनिनापि च कामार्थौ मत्वा लोकमनोहरौ ।
निन्द्यावपि स्थितावेतौ धर्ममोक्षविवक्षया ।
अन्यथा घोरसंसारबन्धहेतू जनस्य तौ ।
वर्णयेत कथं धीमान्महाकारुणिको मुनिः ।
लोकचिन्तावतारार्थं वर्णयित्वा च तेन तौ । [20]
इतिहासैर्विचित्रार्थैः पुनरत्रैव निन्दितौ ।
भारतं भानुमानिन्दुर्यदि न स्युरमी त्रयः ।
अज्ञानतिमिरान्धे का व्यवस्था जगतो भवेत् ।
एतद्विज्ञाय विद्वद्भिर्नित्यं श्रद्धासमन्वितैः ।
अध्येयो भारतीयोऽयमितिहाससमुच्चयः । [25]

G3 cont.:

श्लोका ये भारते वापि क्वचित्केचिद्व्यवस्थिताः ।
तुल्यार्थास्संहितां पुण्यां योजयिष्ये तु तामहम् ।
तच्छ्लोकांश्च समुद्धर्तुं कः कृत्स्नान्भारते क्षमः ।
योगतः सर्वरत्नानि समुद्धर्तुं महार्णवात् ।
न च प्रज्ञाभिमानेन यदयं कर्तुमुद्यतः ।
किं तु भारतभक्तिर्मां विवशं समचूचुदत् ।

Colophon.

4

After line 20 of 178* (v. l. 1. 2. 233), K3 ins.:

अध्यायास्त्वेकमेकानां सप्তाशीतिरुदाहृता ।
श्लोकानां च सहस्राणि दश त्रीणि शतानि च ।
पौलोमादीनि सर्वाणि दशाष्टौ च महानृषिः ।
उक्तवान्सपुराणानि रहस्यं चावसानिकम् ।
एवमष्टादशैतानि पर्वाण्युक्तानि धीमता । [5]
अध्यायानां सहस्रे द्वे पर्वणां शतमेव च ।
श्लोकानां च सहस्राणि नवतिर्दश एव च ।
एषा वै पर्वणां संख्या श्लोका ग्रन्थे यथाक्रमम् ।
यदुक्तमृषिणा तेन व्यासेनोत्तमतेजसा ।
जनमेजयस्याश्वमेधं द्रष्टुकामस्य धीमतः । [10]
संप्रवृत्तोऽश्वमेधश्च यत्र शक्रेण धर्षितः ।
विरोधश्चाभवद्राज्ञो ब्राह्मणैस्तस्य ऋत्विजैः ।
विश्वावसुपुरानीतो राजा राज्यमचीकरत् ।
एषा वै पर्वणां संख्या खिलान्याह ततः परम् ।

5

After 1. 2. 236, B1 ins.:

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ।
एवं विज्ञाय तत्त्वज्ञाः कथयन्ति मनीषिणः ।
भरतानां महज्जन्म महाभारतमित्युत ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते । [5]
भारताध्ययनात्पुण्यादपि पादमधीयतः ।
श्रद्दधानस्य पूयन्ते सर्वपापान्यसंशयः ।
त्रिभिर्वर्षैर्महाभागः कृष्णद्वैपायनः शुभः ।
प्रबन्धं भारतस्येमं चकार भगवान्प्रभुः ।
कृष्णद्वैपायनः पुत्रं पूर्वमध्यापयच्छुकम् । [10]
सुमन्तुं जैमिनिं पैलं वैशंपायनमेव च ।
तैश्चाप्यनन्यबुद्धिभ्यो ब्राह्मणेभ्यः प्रकाशितम् ।
या क्रिया क्रियते काचिचश्च कश्चित्क्रियाविधिः ।
इदं प्रवर्तते सर्वं श्रोतॄणां प्रीतये क्षितौ ।

Then follows 237*ab, which is followed by:

अधीयीत यथान्यायं वेदज्ञो वेदभृद्द्विजः ।
वेदैश्चतुर्भिः समितमिदमाख्यानमुत्तमम् ।

---

3

For lines 1–2, cf. passage No. 2 above. — For lines 3–4, 22–23, cf. 66* (v. l. 1. 1. 191). — Lines 10–11 = (var.) 1. 56. 33.

5

Lines 1–2 = 1. 56. 33. — Lines 4–5 = (var.) 1. 56. 31. — Lines 6–7 = (var.) 1. 1. 191cd/. — Lines 8–9 = (var.) 1. 56. 32.

भविष्यत्युपजीव्यं च कवीनामिदमब्रवत् ।
न चास्य कवयः केचिद्भविष्यन्ति विशेषणे ।
विशेषणे गृहस्थस्य त्रय एवाश्रमा यथा ।
धन्यमारोग्यमायुष्यं पुण्यं सत्कर्मसाधकम् ।
बुभूषते महाख्यानमभिमन्तव्यमादितः ।
यदधीतं तदा सम्यग्द्विजश्रेष्ठैर्द्विजोत्तमात् ।
वैशंपायनविप्राद्यैस्तैश्चापि कथितं तदा ।

6

After 216* (cf. v. l. 1. 5. 6), Ñ2 V1 ins.:

भृगोर्बभूवुः षट् पुत्रास्तपसा भावितात्मनः ।
कविश्च च्यवनश्चैव शङ्कुलश्च महातपाः ।
सुरश्मिः ससरश्मिश्च वितथश्च महातपाः ।
वीतहव्यस्य तनयः स्मृतो गृत्समदः प्रभुः ।
गृत्सस्यापि सुतस्तस्य ब्रह्मन्सावेदसोऽभवत् । [5]
सावेदस्य तु पुत्रोऽभूदूर्वः श्रुतवतां वर ।
ऊर्वस्य तु विहव्योऽभूद्ब्रह्मसूनुर्महात्मनः ।
विहव्यस्य तु दायादो विहरः कीर्तिमान्स्मृतः ।
विहरस्यात्मवान्पुत्रो वत्सश्चाधिरथः स्मृतः ।
वत्सस्यापि विनिन्दस्तु सूनुरासीन्महातपाः । [10]
भृगोर्विनिन्दस्य सुतः सद्यो नाम बभूव ह ।
सद्यस्याप्यात्मजो ब्रह्मन्वित्तो नाम सुवीर्यवान् ।
वित्तस्य तु महातेजा बभूव च श्रुतश्रवाः ।
श्रुतश्रवसस्तु सूनुर्बभूव तपवान्प्रभो ।
तपसस्तु महातेजाः प्रकाशस्तनयोऽभवत् । [15]
ऊर्ध्वः प्रकाशस्य सुतो ब्रह्मर्षिर्ब्रह्मवित्तमः ।
ब्रह्मसृष्टो मतो येन येन पूर्वं महात्मना ।
ऊर्ध्वस्य चैव वागिन्द्रो वागिन्द्रो ब्रह्मवादिनः ।
ऋचीकस्तस्य तनयो ब्रह्मसूनुर्महातपाः ।
जमदग्निः सुतस्तस्य जज्ञे जनकसंनिभः । [20]
जमदग्नेस्तु वै पञ्च आसन्पुत्रा महात्मनः ।
रुमण्वांश्च सुषेणश्च वसुर्विश्वावसुस्तथा ।
रामस्तस्य जघन्योऽभून्महात्मा रेणुकासुतः ।
त्रिःसप्तकृत्वः पृथिवी येन निःक्षत्रिया कृता ।

7

After 1. 11. 3ab, G1 ins.:

मैवं सर्पेण बाधेथाः सखे भीराविशन्मम ।
शप्तश्च त्वं मया विप्र न नन्दामि कदाचन ।
तेनैव बहुशोक्तोऽहं सर्पके त्वात्मणे (sic) द्विज ।
अग्निहोत्रे समासीनं वेपयामि समोहितः ।

8

Between adhy. 12 and 13, there are in M2-4 the foll. insertions, reference to which was inadvertently om. in the footnotes to the text (p. 111). At the indicated place, M2 ins.:

किमर्थं राजशार्दूल राजा स जनमेजयः ।
सर्पसत्रेण सर्पाणां गतोऽन्तं तद्वदस्व मे ।

इति श्रीरामाय नमः । श्रीगुरुभ्यो नमः । श्रीवेदव्यासाय नमः ।

अक्षरं यत्परिभ्रष्टं मात्राहीनं तु यद्भवेत् ।
क्षन्तुमर्हन्ति विद्वांसः कस्य न स्याद्व्यतिक्रमः ।
शिव शिव । कपर्दि समर्थ भूतेश भगनेत्रनिपातन ।
व्यतिक्रमं मे भगवन्क्षन्तुमर्हसि शंकर ।

नारायणाय नमः । श्रीवेदव्यासाय नमः । गणपतये नमः । अविघ्नमस्तु ।;

M3 ins.: हरिः स्वस्ति श्रीवेदव्यासाय नमः ।;
M4 ins.: हरिः श्रीगणपतये नमः । अविघ्नमस्तु ।.

9

After 1. 16. 15, S (except M1) ins.:

वासुकेर्मथ्यमानस्य निःसृतेन विषेण च ।
अभवन्मिश्रितं तोयं तदा भार्गवनन्दन ।
मथनान्मन्दरेणाथ देवदानवबाहुभिः ।
विषं तीक्ष्णं समुद्भूतं हालाहलमिति श्रुतम् ।
देवाश्च दानवाश्चैव दग्धास्तेन विषेण ह । [5]
अपाक्रामंस्ततो भीता विषादमगमंस्तदा ।
ब्रह्माणमब्रुवन्देवाः समेत्य मुनिपुंगवैः ।
मथ्यमानेऽमृते जातं विषं कालानलप्रभम् ।
तेनैव तापिता लोकास्तस्य प्रतिकुरुष्व ह ।
एवमुक्तस्तदा ब्रह्मा दध्यौ लोकेश्वरं हरम् । [10]
त्र्यक्षं त्रिशूलिनं रुद्रं देवदेवमुमापतिम् ।
तदाथ चिन्तितो देवस्तज्ज्ञात्वा द्रुतमाययौ ।
तस्याथ देवस्तत्सर्वमाचचक्षे प्रजापतिः ।
तच्छ्रुत्वा देवदेवेशो लोकस्यास्य हितेप्सया ।
अपिबत्तद्विषं रुद्रः कालानलसमप्रभम् । [15]

---

6

Ñ2, which om. lines 8–10, has the following v. l.: — (L. 4–5) कवेश्च तनयः पूर्वं स्मृतः सर्पमदः प्रभुः । सर्पमदस्यापि सुतस्तस्य सावेदसोऽभवत् ।. — (L. 6) वर्चा (for ऊर्वः). — (L. 7) वर्चसस् (for ऊर्वस्य). — (L. 11) भृगोर्विहसस्य सुतः सद्यो etc. — (L. 12) सद्यस्य तनयो ब्रह्मन्सवितो नाम वीर्यवान्. — (L. 13) सवितस्य (for वित्तस्य तु). — (L. 17) ब्रह्मसृष्टं सहायेन येन etc.

कण्ठे स्थापितवान्देवो लोकानां हितकाम्यया ।
यस्मात्तु नीलता कण्ठे नीलकण्ठस्ततः स्मृतः ।
पीतमात्रे विषे तत्र रुद्रेणामिततेजसा ।
देवाः प्रीताः पुनर्जग्मुश्चक्रुर्वै कर्म तत्तथा ।

S (except G6 M1) end the adhy. here, beginning the new adhy. with:

सूतः ।
मथ्यमानेऽमृतस्यार्थे भूयो वै देवदानवैः ।,

which in T2 G (except G3) is followed by a *repetition* of 1. 16. 15, an unmistakable sign that the passage is an interpolation!

10

After 1. 16. 27, K4 ins.:

एतस्मिन्नन्तरे जातं वासुकेर्मुखनिःस्रवात् ।
कालकूटं विषं घोरं सर्वसत्त्वभयंकरम् ।
तस्मिन्समुत्थिते घोरे विषे कालानलप्रभे ।
संत्रस्तासुरदेवौघा दिशः सर्वाः प्रपेदिरे ।
येन विष्णुः कृतः कृष्णो विषेण महता तदा । [ 5 ]
यत्र हाहाकृतं सर्वं जगदासीच्चराचरम् ।
ततस्तु ब्रह्मणो वाक्याद्देवदेवो महेश्वरः ।
अपिबत्तद्विषं घोरं प्रत्यक्षं दैवतेषु वै ।
तस्मिन्विषे पीयमाने हरेणामिततेजसा ।
विस्मयं परमं जग्मुर्देवाश्च मुनिदानवाः । [ 10 ]
ततः कण्ठमनुप्राप्तं विषं दृष्ट्वा हरस्य च ।
ब्रह्मा प्रोवाच देवेशं कण्ठे धारय वै प्रभो ।
स्वयंभुवचनाच्छंभुर्दधार विषमुत्तमम् ।
कण्ठे हालाहलं घोरं नीलकण्ठस्ततः स्मृतः ।

11

After 1. 16. 36, K4 ins.:

भ्रममाणस्य तु गिरेर्मन्दरस्य तु विप्रुषः ।
तेष्वष्टाप्सरसो जज्ञे षष्टिः कोट्यो वराङ्गनाः ।
अजरामराश्चारुरूपाः पीनश्रोणिपयोधराः ।
यासां संदर्शनान्मर्त्यः उन्मत्तक इवाभवत् ।

12

After adhy. 19, Ñ1.2 (both om. lines 1-6) V1 B D (which all transp. 1. 19. 17) ins. an addl. adhy.:

सौतिरुवाच ।
ततस्ते पणितं कृत्वा भगिन्यौ द्विजसत्तम ।
जग्मतुः परमप्रीते परं पारं महोदधेः ।
कद्रूश्च विनता चैव दाक्षायण्यौ विहायसा ।
आलोकयन्त्यावक्षोभ्यं समुद्रं निधिमम्भसाम् ।
वायुनातीव महता क्षोभ्यमाणं महास्वनम् । [ 5 ]
तिमिंगिलसमाकीर्णं मकरैरावृतं तथा ।
संयुतं बहुसाहस्रैः सत्त्वैर्नानाविधैरपि ।
घोरैर्घोरमनाधृष्यं गम्भीरमतिभैरवम् ।
आकरं सर्वरत्नानामालयं वरुणस्य च ।
नागानामालयं चापि सुरम्यं सरितां पतिम् । [ 10 ]
पातालज्वलनावासमसुराणां तथालयम् ।
भयंकराणां सत्त्वानां पयसो निधिमव्ययम् ।
शुभं दिव्यममर्त्यानाममृतस्याकरं परम् ।
अप्रमेयमचिन्त्यं च सुपुण्यजलसंमितम् ।
महानदीभिर्बह्वीभिस्तत्र तत्र सहस्रशः । [ 15 ]
आपूर्यमाणमत्यर्थं नृत्यन्तमिव चोर्मिभिः ।

☞ In Dn D1-4 this passage is *immediately preceded* by passage No. 13 given below (*q. v.*); it is uniformly followed by 1. 19. 17 and colophon.

13

K (except K1) V1 (marg.) Da D5-7 G1.2.4.5 ins. after सूत उ° (resp. its v. l.) of 1. 20. 1: Dn D1-4, after सौतिरु° of passage No. 12 above:

नागाश्च संविदं कृत्वा कर्तव्यमिति तद्वचः ।
निःस्नेहा वै दहेन्माता असंप्राप्तमनोरथा ।
प्रसन्ना मोक्षयेदस्मांस्तस्माच्छापाच्च भामिनी ।
कृष्णं पुच्छं करिष्यामस्तुरगस्य न संशयः ।
तथा हि गत्वा ते तस्य पुच्छे वाला इव स्थिताः । [ 5 ]
एतस्मिन्नन्तरे ते तु सपत्न्यौ पणिते तदा ।

---

12

(L. 2) Dn D1 परया प्रीत्या (for परम°). — (L. 5) Ñ1.2 Dn D1 सहसा; some D MSS. सहितं (for महता). — D1 om. lines 6-16. — (L. 13) Ñ1.2 V1 Dn शुभ्रं (for शुभं).

13

(L. 1) G1.2.4.5 नागास्तु सहिताः कृत्वा. Da कर्तव्ये कृतनिश्चयाः; D5 कद्रोश्चैव च तद°. — (L. 2) K (except K1) D2 अस्नेहादै; D5 निश्चेष्टा वै; G1.2.4.5 विस्नेहा वि°. D5 भवेत् (for दहेत्). — (L. 3) Da प्रसादयामो यत्नेन (for prior half). Da D1.6 भाविनी. — (L. 4) G1.2.4.5 महात्मनः (for न सं°). — (L. 5) K (except K1) Da D2.5-7 G1.2.4.5 इति (for हि). K (except K1) D2 उक्त्वा; D3.4 कृत्वा; G1.2.4.5 तस्य (for गत्वा). K (except K1) D2 तु (for ते). G1.2.4.5 कृष्णा (for पुच्छे). Dn D1 स्मृताः (for स्थिताः). — (L. 6) G1.2.4.5 पत्न्यौ वै (for सपत्न्यौ).

☞ In Dn D1-4 this passage is followed by passage No. 12 above; in K (except K1) V1 Da D5-7, by 1. 20. 1; and lastly in G1.2.4.5 *irrelevantly* by 294*.

14

After adhy. 20, K4 (marg.) N V1 B D (except D5; D3 on a suppl. fol.) T1 G1.2.4.5 ins.:

सौतिरुवाच ।

स श्रुत्वाथात्मनो देहं सुपर्णः प्रेक्ष्य च स्वयम् ।
शरीरप्रतिसंहारमात्मनः संप्रचक्रमे ।

सुपर्ण उवाच ।

न मे सर्वाणि भूतानि बिभियुर्देहदर्शनात् ।
भीमरूपात्समुद्विग्नास्तस्मात्तेजस्तु संहरे ।

सौतिरुवाच ।

अरुणं चात्मनः पृष्ठमारोप्य स पितुर्गृहात् । [ 5 ]
ततः कामगमः पक्षी कामवीर्यो विहंगमः ।
मातुरन्तिकमागच्छत्परया मुदया युतः ।
तत्रारुणः स निक्षिप्तः दिशं पूर्वां महाद्युतिः ।
सूर्यतेजोविनिहताँल्लोकान्दग्धुं महारथः ।

रुरुरुवाच ।

किमर्थं भगवान्सूर्यो लोकान्दग्धुमनास्तदा । [ 10 ]
किमस्यापकृतं देवैर्येनेमं मन्युराविशत् ।

प्रमतिरुवाच ।

चन्द्रादित्यैर्यदा राहुराख्यातो ह्यमृतं पिबन् ।
वैरानुबन्धं कृतवांश्चन्द्रादित्ये तदानघ ।
वध्यमाने ग्रहेणाथ आदित्ये मन्युराविशत् ।
सुरार्थाय समुत्पन्नो रोषो राहोस्तु मां प्रति । [ 15 ]
बह्वनर्थकरं पापमेकोऽहं समवाप्नुयाम् ।
सहाय एकः कार्येषु न मे कृच्छ्रेषु जायते ।
पश्यन्ति ग्रस्यमानं मां सह देवैर्दिवौकसः ।
तस्माल्लोकविनाशाय ह्यवतिष्ठे न संशयः ।
एवं कृतमतिः सूर्यो ह्यस्तमभ्यगमद्गिरिम् । [ 20 ]
ततोऽर्धरात्रसमये सर्वलोकभयावहः ।
उत्पत्स्यते महान्दाहस्त्रैलोक्यस्य विनाशनः ।
ततो देवाः सर्षिगणा उपगम्य पितामहम् ।

देवा ऊचुः ।

भगवन्किमिदं चाद्य महद्दाहकृतं भयम् ।
न तावद्दृश्यते सूर्यः क्षयेयं न प्रभाति च । [ 25 ]
उदिते भगवन्भानौ कथमेतद्भविष्यति ।

पितामह उवाच ।

एष लोकविनाशाय रविरुद्यन्तुमुद्यतः ।
दृश्यन्नेव हि लोकान्स भस्मराशीकरिष्यति ।
तस्य प्रतिविधानं च विहितं पूर्वमेव हि ।
कश्यपस्य सुतो विद्वानरुणेत्यभिविश्रुतः । [ 30 ]
महाकायो महातेजाः स स्थास्यति पुरो रवेः ।
करिष्यति च सारथ्यं तेजश्चास्य हरिष्यति ।
लोकानां शान्तिरेवं स्यादृषीणां च दिवौकसाम् ।

प्रमतिरुवाच ।

ततः पितामहाज्ञातः सर्वं चक्रे तदारुणः ।
उदितश्चैव सविता अरुणेन तदावृतः । [ 35 ]
एतत्ते सर्वमाख्यातं यत्सूर्यं मन्युराविशत् ।
अरुणश्च यथैवास्य सारथ्यमकरोत्प्रभुः ।
भूय एवापरं प्रश्नं शृणु पूर्वमुदाहृतम् ।

Colophon.

G3 ins. lines 1–4 of the above passage before 1. 21. 1; G3.6 ins. line 6 after 1[35].

---

14

G1.2 om. lines 1–2; G5 om. 1–4. — (L. 1) Ñ3 स तु श्रुत्वात्मनो; B Da स तच्छ्रुत्वात्म°; T1 स्तवं श्रुत्वाप्य°; G4 वचः श्रुत्वात्म°. — (L. 4) T1 G1.2.4 समुद्विग्नानि रूपान्मे इति तेजः समाहरत्. — After line 4, G1.2 ins. a colophon, while G4 repeats 1. 20. 15, which latter is then followed by a colophon. — Da Dn D1.2 T1 G1.2.4.5 transp. lines 5 and 6. — (L. 5) Ñ3 अभिरोप्य; G1.2.4.5 उपारोप्य (for आरोप्य स). — (L. 6) G1.2.4.5 महा° (for काम°), and महाबलः (for विहं°). — (L. 7) G1.2.4.5 आगम्य (for आगच्छत्). Ñ3 Dn D1.2 T1 परं तीरं महोदधेः (for the posterior half). — (L. 8) G1.2.4.5 पुरोदेशे महाद्युतेः. — K4 om. lines 9–38. — (L. 9) This is the reading of B Da, which is unintellegible and appears to be corrupt, but the other readings seem to be all emendations. B3.4 सूर्यस्तेजोविनि°; Ñ1.2 V1 Dn D1-4.6.7 T1 सूर्यस्तेजोभिरत्युग्रैः; G1.2.4.5 सूर्यस्तु सहितांल्लोकान्. G1.2.4.5 तदा (for लोकान्). Ñ2 V1 B1 महाबलः; Ñ3 महातपाः; G1.2.4.5 समुद्यतः (for महारथः). B5 Dn D1-4.6.7 T1 लोकान्दग्धुमना यदा. — D4 (by corr.) G1.2.4.5 शौनकः (for रुरुः). — (L. 11) B4 Dn D1.2 °स्यापहृतं. — D4 सूत उ°; D6 T1 प्रमतिः; G1.2.4.5 सूतः (for प्रमतिर°). — (L. 12–13) G1.2.4.5 चंद्रार्काभ्यां (for चन्द्रादित्यैः and °दित्ये). — (L. 14) B4 ग्रस्यमाणे; G1.2.4.5 बाध्यमाने. — (L. 15) G1.2.4.5 सुरार्थं यत्समुत्पन्नो रोषो राहोस्तु सांप्रतं. — (L. 16) G1.2.4.5 अहोहं (for एकोऽहं). — (L. 17) Ñ1.2 V1 Dn D1.2 T1 G1.2.4.5 एव; D3.4.6.7 एवं (for एकः). Dn D1.2 T1 न च कृ° दृश्यते. — (L. 18) G1.2.4.5

## 15

After विनता of 1. 24. 6, M$_{1.3}$ (which om. उवाच) ins.:

मेखलाजिनदण्डेन ब्रह्मचारीति लक्षयेत् ।
शुक्लवस्त्रः शुचिर्दान्तो रुक्मकुण्डलमण्डितः ।
वैणवीं धारयन्यष्टिमुपवीतं कमण्डलुम् ।
एतैस्तु लक्षणैर्युक्तं गृहस्थमिति लक्षयेत् ।
नखरोमाचितं विप्रं चीराजिनजटाधरम् । [5]
वनवासरतं नित्यं वनवासीति लक्षयेत् ।
मुण्डी त्रिदण्डी काषायी कमण्डलुधरो यतिः ।
एतैस्तु लक्षणैः पुत्र विद्धि तान्ब्राह्मणानृजून् ।

## 16

K$_4$ ins. after 1. 25. 2:

कथं च त्वमिहायातो निषादानां महालयम् ।
अस्पृश्या याजिनां नित्यं सत्यं च वद मे द्विज ।;

after 3$^{ab}$:

ब्राह्मण उवाच ।

मध्यदेशात्समायातो धनार्थी मेदिनीं भ्रमन् ।
ततो निषादान्संप्राप्तो रतिं चाप्यत्र लब्धवान् ।
गां हिरण्यं धनं धान्यं घटांश्च कटकांस्तथा ।
निषादा मे प्रयच्छन्ति सततं प्रियकारिणः ।
निषादी शोभना चात्र भार्या जाता खगोत्तम ।
तया सह वसन्नित्यं रतिमभ्यामवाप्तवान् ।;

and after 3$^{cd}$:

ततोऽहं निर्गमिष्यामि न निर्गच्छेयमन्यथा ।

## 17

After 1. 30. 22, Ko.$_4$ ins. a *phalas'ruti:*

न चाग्निजं चोरनृपाश्रयं वा
क्षुरसर्पवेतालपिशाचजं वा ।
भयं भवेद्यत्र गृहे गरुत्मतो
तिष्ठेत्कथेयं लिखितापि पुस्तके ॥
यः संस्मरेन्नित्यमतन्द्रितो नरो
गरुत्मतो मूर्तिमथार्चयेद्गृहे ।
ॐ पक्षिराजेति जपंश्च सर्वदा
तस्याशु सर्पा वशगा भवन्ति ॥

## 18

After 1. 32. 1, Ko.$_4$ Da$_1$ ins.:

कश्च तेषां भवेन्मन्त्रः सर्पाणां सूतनन्दन ।
किं वा कार्यमकुर्वन्त शापजं भुजगोत्तमाः ।
वासुकिश्चापि नागेन्द्रो महाप्राज्ञः किमाचरत् ।

## 19

After 1. 33. 4, Ko.$_4$ Da$_1$ ins.:

आराध्य तु जगन्नाथं ब्रह्माणं पन्नगोत्तमाः ।
मातृशापविमोक्षार्थं न शेषो लब्धवान्वरम् ।

## 20

After पितामह उ° of 1. 35. 8, K$_{3.4}$ ins.:

मातृशापो नान्यथायं कर्तुं शक्यो मया सुराः ।
यस्मान्माता गुरुतरी सर्वेषामेव देहिनाम् ।

## 21

After 1. 37. 20, Ko.$_4$ ins.:

कामं क्रोधं तथा लोभं यस्तपस्वी न शक्नुयात् ।
विजेतुमकृतप्रज्ञः स याति नरकं ध्रुवम् ।
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ।
यः प्रव्रज्यां गृहीत्वा तु न भवेद्विजितेन्द्रियः । [5]
वर्षकोटिसहस्राणि स याति नरकं ध्रुवम् ।

---

बध्यमानं (for ग्रस°). B$_4$ Dn D$_2$ T$_1$ सहंते वै; G$_{1.2.4.5}$ सह लोकैर्. — (L. 19) Ñ$_{1.2}$ V$_1$ Dn D$_{1-4.6.7}$ T$_1$ °विनाशार्थे. G$_{1.2.4.5}$ व्यवतिष्ठे. — After line 20, B$_3$ (om. line 1).$_5$ Dn D$_{1-4}$ T$_1$ ins.:

तस्माल्लोकविनाशाय संतापयत भास्करः ।
ततो देवानुपागम्य प्रोचुरेवं महर्षयः ।

— (L. 21) Ñ$_1$ Dn D$_{1-4.6}$ T$_1$ अथार्धरात्र°; B$_3$ Da D$_7$ अपररात्र°; B$_5$ अपूर्वो रात्र°; G$_{1.2.4.5}$ अह्नः प्रारंभ°. — (L. 22) G$_{1.2.4.5}$ उत्पतस्यति महाबाहुः. — After 23, B$_1$ ins.:

ऊचुरुद्विग्नमनसः सर्वलोकपितामहम् ।;

while D$_{4.6}$ ins.:

ऊचुर्विस्मयमापन्नाः प्रणताः सर्वतो भृशम् ।

— Ñ$_{1.3}$ Da Dn D$_{1.2}$ T$_1$ G$_{1.2.4.5}$ om. देवा ऊ°. — (L. 24) Ñ$_{1.2}$ Dn D$_{1.2}$ T$_1$ अब्रुवन्किमिवेहाद्य. G$_{1.2.4.5}$ अब्रुवन् किमिदं देव अद्य भानुकृतं भयम्. — (L. 25) V$_1$ Dn D$_{1-3}$ T$_1$ क्षयोयं प्रतिभाति च. — (L. 28) V$_1$ B$_{1.3.5}$ पश्यन्. D$_{3.6.7}$ दृश्यंते च हि; G$_{1.4}$ दृश्यंते यदि. Ñ B Da D$_3$ G$_{1.4}$ °राशि. — (L. 30) Dn D$_{1.2}$ T$_1$ धीमान् (for विद्वान्). — (L. 33) Ñ$_3$ Dn D$_{1.2}$ T$_1$ स्वस्ति चैवं (for शान्तिरेवं). G$_{1.2.4.5}$ सूतः (for प्रमतिरु°). — (L. 34) Ñ$_3$ G$_{1.2.4.5}$ °महाद्युतः. — (L. 35) Ñ V$_1$ B (except B$_3$) Da Dn D$_{1-4.6.7}$ T$_1$ द्वारुणेन. Ñ$_{1.2}$ V$_1$ Dn D$_{1.2}$ T$_1$ समावृतः; G$_{1.2.4.5}$ सदा युतः. — (L. 37–38) G$_{1.2.4.5}$ तदा चास्य (for यथैवास्य), and ब्रह्मन् (for प्रश्नं). — Colophon om. in T$_1$ G$_{1.2.4.5}$.

22

After 1. 37. 27, Ko.4 ins.:

क्रोधात् शापमुत्सृजता तपोहानिरनुत्तमा ।
कृतात्मनस्त्वया तात विप्रेणेव प्रतिग्रहात् ।
अतोऽहं त्वां प्रब्रवीमि शापोऽस्य न भवेद्यथा ।
परिक्षितो महाभाग तथा कुरु यतव्रत ।

23

After 1. 38. 8, Ko.4 ins.:

तेऽत्र धन्याः शुभधियो ये धर्मे सततं रताः ।
नराः सुकृतकल्याणा आत्मनः प्रियकाङ्क्षिणः ।

After 11, K4 ins.:

ततो गौरमुखं शिष्यं शीलवन्तं गुणान्वितम् ।
आहूय याहि राजानं वृत्तान्तमिदमुच्यताम् ।
[With line 1, cf. 1. 38. 14$^{cd}$.]

24

After 1. 39. 17, Ko.4 ins.:

तद्धनं तस्य वो राजा न प्रहीष्यति किंचन ।
इमे नागा वहिष्यन्ति दत्तं हेम मया बहु ।

25

After 1. 39. 19$^{cd}$, D5 ins.:

दशको प्रस्तं मे देहि धनं पन्नगसत्तम ।
न राजानं गमिष्यामि किं तेन नृपसूनुना ।
इत्युक्तस्तक्षकस्तेन विंशत्कोटीर्धनं ददौ ।
स जगाम ततो विप्रो धनं लब्ध्वा यथासुखम् ।

26

After 1. 41. 21$^{cd}$, B4 ins.:

न तच्च कुतपोदानैः प्राप्यते फलमुत्तमम् ।
यच्च कुदारसंतानप्राप्तौ संप्राप्यतेऽमितम् ।
क्षालनस्नात जायंते सर्व एव हि मानवाः ।
पितृदेवर्षिमनुजा भर्तव्या आर्यवर्णजैः ।
अथान्यथा वर्तमाना वार्याः स्युस्त्रिदिवौकसाम् । [5]
त्वं तात सम्यग्जानीहि धर्मज्ञः सन्न वेत्सि किम् ।

27

After 1. 42. 3, Ko.4 Da1 ins.:

धर्मार्थकामैस्तु सुखप्रहीणा
भिक्षाटनाः कर्पटबद्धगात्राः ।
क्षुत्क्षामकण्ठा वसुधां भ्रमन्ति
दारान्परित्यज्य गता नरा ये ॥
न ते क्रतुशतैर्लोकाः प्राप्यन्ते दिवि मानद ।
तपोभिर्विविधैर्वापि याल्लोकान्पुत्रिणो गताः ।

28

After 1. 42. 20, B3 ins.:

रुरुरुवाच ।

किमर्थं सा तु नागेन्द्रो द्विजेन्द्राय कृतात्मने ।
अविज्ञाताय वै दत्ता स्वसा राजीवलोचना ।

प्रमतिरुवाच ।

Then follows a *repetition* (with slight variation) of 1. 13. 35–36.

29

D1 (marg. *sec. m.*) ins. after 1. 50. 1: D5 T2 G6, after 1. 50. 5:

दिलीपराज्ञो नहुषस्य राज्ञो
नलस्य राज्ञः शतबिन्दोश्च राज्ञः ।

Then follows the refrain तथा यज्ञोऽयं etc.

30

After 1. 50. 6, D2 ins.:

नहुषस्य यज्ञः सगरस्य यज्ञः
धुन्धोस्तथा रन्तिदेवस्य चैव ।

Then the refrain तथा यज्ञोऽयं etc.

31

After 1. 55. 3, K4 ins.:

शौनक उवाच ।

जनमेजयेन राज्ञा वै किमर्थं सूतनन्दन ।
सर्पसत्रान्तरे पृष्टो व्यासशिष्यो महातपाः ।
पूर्वजानां कथां मां वै तन्नो वद महामते ।
सर्वज्ञः सर्वदर्शी च न ते ह्यविदितं क्वचित् ।

सूत उवाच ।

सर्पसत्रे च संपूर्णे ऋत्विजश्चागतश्रमाः । [5]
धूमसंभ्रान्तनेत्रास्तु दशाष्टौ सुषुपुस्तदा ।
तेषु सुप्तेषु सर्वेषु राजा पारिक्षितस्तदा ।
यज्ञान्ते ऋषिभिर्नैव निद्रा कार्या कथंचन ।
इति स्मृत्युक्तवचनं स्मृत्वा तानृषिसत्तमान् ।
अभिमन्त्रितेनोदकेन ऋषिभिश्चाभिचारकैः । [10]
प्रोक्षयामास तेषां वै निद्रान्तं तु चिकीर्षवान् ।
एतस्मिन्नन्तरे तत्र मूर्च्छामापुः सुदीर्घिकाम् ।
अचेतनांश्च मुनयस्तान्दृष्ट्वा दुःखितोऽभवत् ।
तदा सभासदो विप्राः प्रोचुश्च जनमेजयम् ।
धिग्धिक्ते चेष्टितं राजन्ब्राह्मणान्हतवानसि । [15]
ब्रह्महत्याष्टादश वै कृतास्त्वया नराधिप ।
चर तीर्थान्यनेकानि पश्चाच्छुद्धिमवाप्स्यसि ।

एतस्मिन्नन्तरे तत्र वागुवाचाशरीरिणी ।
दुःखितं चिन्तयाक्रान्तं राजानं जीवयन्निव ।
ब्रह्महत्याविमोक्षार्थं कृत्वा चीरं निळीयुतम् । [ 20 ]
अष्टादशारत्निकं च तद्वासः परिधाय च ।
पाण्डवानां कथा यत्र अष्टादशकपर्वकम् ।
श्रृणु त्वं भारतं च ततः शुद्धिमवाप्स्यसि ।
इति तद्वचनं श्रुत्वा ऋषिभिश्चानुमोदितः ।
वासस्तदुक्तं वासित्वा व्यासं सत्यवतीसुतम् । [ 25 ]
प्रश्रयावनतो राजा पप्रच्छ पूर्वजां कथाम् ।
तामहं वर्णयिष्यामि श्रृणुध्वं भो मुनीश्वराः ।

Colophon.

32

For 1. 56. 29-32, $D_5$ S subst.:

यस्तु राजा श्रृणोतीदमखिलामश्नुते महीम् ।
प्रसूते गर्भिणी पुत्रं कन्या चाशु प्रदीयते ।
वणिजः सिद्धयात्राः स्युर्वीरा विजयमाप्नुयुः ।
आस्तिकाञ्श्रावयेन्नित्यं ब्राह्मणाननसूयकान् ।
वेदविद्याव्रतस्नातान्क्षत्रियाश्रयमास्थितान् । [ 5 ]
स्वधर्मनित्यान्वैश्यांश्च श्रावयेत्क्षत्रसंश्रितान् ।
एष धर्मः पुरा दृष्टः सर्ववर्णेषु भारत ।
ब्राह्मणाच्छ्रवणं राजन्विशेषेण विधीयते ।
भूयो भूयः पठेन्नित्यं गच्छेत्स परमां गतिम् ।
श्लोकं वाप्यनुगृह्णीत तथार्धं श्लोकमेव वा । [ 10 ]
अपि पादं पठेन्नित्यं न च निर्भारतो भवेत् ।
इह नैकाश्रयं जन्म राजर्षीणां महात्मनाम् ।
इह मन्त्रपदं युक्तं धर्मं चानेकदर्शनम् ।
इह युद्धानि चित्राणि राज्ञां वृद्धिरिहैव च ।
ऋषीणां च कथास्तात इह गन्धर्वरक्षसाम् । [ 15 ]
इह तत्तत्समासाद्य विहितो वाक्यविस्तरः ।
तीर्थानां नाम पुण्यानां दर्शनं चैव कीर्तितम् ।
वनानां पर्वतानां च नदीनां सागरस्य च ।
देशानां चैव दिव्यानां पुराणां चैव कीर्तनम् ।
उपचारस्तथैवाग्र्यो वीर्यमप्रतिमानुपम् । [ 20 ]
इह सत्कारयोगश्च भारते परमर्षिणा ।
रथाश्ववारणेन्द्राणां कल्पना युद्धकौशलम् ।
वाक्यजातिरनेका च सर्वमस्मिन्समर्पितम् ।
यथा समुद्रोऽतिमहान्यथा च हिमवान्गिरिः ।
ख्यातौ रत्नाकरौ तद्वन्महाभारतमुच्यते । [ 25 ]
नाप्रीतिरुपपद्येत यथा प्राप्य त्रिविष्टपम् ।
पुण्यं तथेदमाख्यानं श्रुत्वा प्रीतिर्भवत्युत ।
स्त्रियश्च शूद्राः श्रृणुयुः पुरस्कृत्य द्विजोत्तमान् ।
प्राप्नुवन्ति यथोक्तानि फलान्यविकलानि च ।
कुलस्य वृद्धये राजन्नायुषे विजयाय च । [ 30 ]
श्रृणु कीर्तयतः कृत्स्नमितिहासं पुरातनम् ।
यश्चेदं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः ।
अक्षय्यमन्नपानं तत्पितॄंस्तस्योपतिष्ठति ।
य इदं श्रावयेद्विद्वान्यश्चेदं श्रृणुयान्नरः ।
स ब्रह्मणः स्थानमेत्य प्राप्नुयाद्देवतुल्यताम् । [ 35 ]
प्रातर्यदेनः कुरुते इन्द्रियैर्ब्राह्मणश्चरन् ।
महाभारतमाख्याय पश्चात्संध्यां प्रमुच्यते ।
रात्र्यां यदेनः कुरुते इन्द्रियैर्ब्राह्मणश्चरन् ।
महाभारतमाख्याय पूर्वां संध्यां प्रमुच्यते ।
भारतानां महज्जन्म महाभारतमुच्यते । [ 40 ]
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ।
त्रिभिर्वर्षैर्महाभागः कृष्णद्वैपायनोऽब्रवीत् ।
नित्योत्थितः सदा योगी महाभारतमादितः ।

33

After 1. 56. 31, N ($Ś_1$ missing; for $K_{0-4}$ see footnotes) ins.:

भरतानां यतश्चायमितिहासो महाद्भुतः ।
महतो ह्येनसो मर्त्यान्मोचयेदनुकीर्तितः ।
त्रिभिर्वर्षैर्लब्धकामः कृष्णद्वैपायनो मुनिः ।
नित्योत्थितः शुचिः शक्तो महाभारतमादितः ।
तपो नियममास्थाय कृतमेतन्महर्षिणा । [ 5 ]
तस्मान्नियमसंयुक्तैः श्रोतव्यं ब्राह्मणैरिदम् ।
कृष्णप्रोक्तामिमां पुण्यां भारतीमुत्तमां कथाम् ।
श्रावयिष्यन्ति ये विप्रा ये च श्रोष्यन्ति मानवाः ।
सर्वथा वर्तमाना वै न ते शोच्याः कृताकृतैः ।

---

32

$G_{4.5}$ read line 3 after line 6; M, after 11. — (L. 6) $D_5$ T $G_{2.4.5}$ शूद्रांश्च द्विजसंश्रितान्. — (L. 9) $D_5$ $T_2$ $G_{4-6}$ भूयो वा यः. Some MSS. transp. गच्छेत् and स. Lines 12, 17–18, 22–23 occur (with v. l.) in passage No. 1 of this App. — (L. 13) $D_5$ $T_1$ इदं मंत्रं पठन् ज्ञात्वा; $T_2$ $G_{2.4.5}$ इमं मंत्रमपि ज्ञात्वा; M इदं मंत्रं वरं ज्ञेयं ($M_5$ इमं मंत्रं परं ज्ञात्वा). — (L. 17) $G_{4-6}$ देशानां (for दर्शनं). $D_5$ $T_1$ $G_{3.6}$ कीर्तनं. — (L. 19) $G_{1.3.6}$ पुण्यानां (for दिव्यानां). — (L. 20) $D_5$ $G_{1-3}$ °र्यमप्यतिमा°. — (L. 22) $T_2$ $G_{4-6}$ रथाश्वेभनरेंद्राणां; $G_2$ रथाश्वानां नरेंद्राणां. $T_1$ $G_1$ कल्पानां युद्ध°. — With lines 24–25, 31–32, 40–41, 42–43 cf. 1. 56. 27, 29, 31–32. — $T_1$ $G_3$ M om. lines 28–29. — Lines 36–39 = (var.) 190*.

नरेण धर्मकामेन सर्वः श्रोतव्य इत्यपि । [ 10 ]
निखिलेनेतिहासोऽयं ततः सिद्धिमवाप्नुयात् ।
न तां स्वर्गगतिं प्राप्य तुष्टिं प्राप्नोति मानवः ।
यां श्रुत्वैव महापुण्यमितिहासमुपाश्नुते ।
शृण्वञ्श्राद्धः पुण्यशीलः श्रावयंश्चेदमद्भुतम् ।
नरः फलमवाप्नोति राजसूयाश्वमेधयोः । [ 15 ]
यथा समुद्रो भगवान्यथा मेरुर्महागिरिः ।
उभौ ख्यातौ रत्ननिधी तथा भारतमुच्यते ।
इदं हि वेदैः समितं पवित्रमपि चोत्तमम् ।
श्रव्यं श्रुतिसुखं चैव पावनं शीलवर्धनम् ।
पारिक्षित कथां दिव्यां पुण्याय विजयाय च । [ 20 ]
कथ्यमानां मया कृत्स्नां शृणु हर्षकरीमिमाम् ।

34

After 1. 56. 33, $K_4$ ins.:

दातुं भोक्तुं तथा श्रोतुं प्रहर्तुमरिभिः सह ।
स किं जानाति पुरुषो भारतं येन न श्रुतम् ।
य इदं भारतं राजन्वाचकाय प्रयच्छति ।
तेन सर्वा मही दत्ता भवेत्सागरमेखला ।
पर्वाण्यष्टादशेमानि व्यासेन कथितानि वै । [ 5 ]
यद्येकमपि यो दद्यात्तेन सर्वं कृतं भवेत् ।

35

After 1. 57. 57, $D_{3.4}$ (suppl. fol., *see. m.*) T G ins.:

संभवं चिन्तयित्वा तां ज्ञात्वा प्रोवाच शक्तिजः ।
क्व कर्णधारो नौर्येन नीयते ब्रूहि भामिनि ।

मत्स्यगन्धा ।

अनपत्यस्य दाशस्य सुता तत्प्रियकाम्यया ।
सहस्रजनसंपूर्णा नौर्मया वाह्यते द्विज ।

पराशरः ।

शोभनं वासवि शुभे किं चिरायसि वाह्यताम् । [ 5 ]
कलशं भविता भद्रे सहस्रार्धेन संमितम् ।
अहं शेषो भविष्यामि नीयतामचिरेण नौः ।

वैशंपायनः ।

मत्स्यगन्धा तथेत्युक्त्वा नावं वाहयती जले ।
वीक्षमाणं मुनिं दृष्ट्वा प्रोवाचेदं वचस्तदा ।

मत्स्यगन्धा ।

मत्स्यगन्धेति मामाहुर्दाशराजसुतां जनाः । [ 10 ]
जन्म शोकाभितप्तायाः कथं ज्ञास्यसि कथ्यताम् ।

पराशरः ।

दिव्यज्ञानेन दृष्टं हि दृष्टमात्रेण ते वपुः ।
प्रणयग्रहणार्थाय वक्ष्ये वासवि तच्छृणु ।
बर्हिषद इति ख्याताः पितरः सोमपास्तु ते ।
तेषां त्वं मानसी कन्या अच्छोदा नाम विश्रुता । [ 15 ]
अच्छोदं नाम तद्दिव्यं सरो यस्मात्समुत्थितम् ।
त्वया न दृष्टपूर्वास्तु पितरस्ते कदाचन ।
संभूता मनसा तेषां पितॄन्स्वान्नाभिजानती ।
सा त्वन्यं पितरं वव्रे स्वानतिक्रम्य तान्पितॄन् ।
नाम्ना वसुरिति ख्यातं मनुपुत्रं महीश्वरम् । [ 20 ]
अद्रिकाप्सरसा युक्तं विमाने दिवि विष्ठितम् ।
सा तेन व्यभिचारेण मनसा कामचारिणी ।
पितरं प्रार्थयित्वान्यं योगाद्भ्रष्टा पपात सा ।
अपश्यत्पतमाना सा विमानत्रयमन्तिकात् ।
त्रसरेणुप्रमाणांस्तांस्तत्रापश्यत्स्वकान्पितॄन् । [ 25 ]
सुसूक्ष्मानपरिव्यक्तानङ्गैरङ्गेष्विवाहितान् ।
त्रातेति तानुवाचार्ता पतन्ती सा ह्यधोमुखी ।
तैरुक्ता सा तु मा भैषीस्तेन सा संस्थिता दिवि ।
ततः प्रसादयामास स्वान्पितॄन्दीनया गिरा ।
तामूचुः पितरः कन्यां भ्रष्टैश्वर्यां व्यतिक्रमात् । [ 30 ]

---

33

$K_{0-4}$ have a variant version, differing from the above mainly as regards sequence, which in these MSS. is as follows: 1. 56. 31; lines 3–11 of the passage under reference; then 1. 56. 27, $25^{cd}$, $26^{ab}$ (both latter repetitions with v. l.); then 491*, and 1. 56. 28–30, 31 (repetition); and finally lines 1–2, 12–15, 18–21 of the passage under reference. The variant readings, being unimportant, may be ignored. — Ñ$_1$ om. lines 3–11; Ñ$_2$ $V_1$ B Dn $D_{3.5}$ om. 3–4 (cf. 1. 56. 32). — With lines 16–18, cf. 1. 56. 27, $15^{ab}$. — Dn ins. after line 19: $D_{1.2.4}$, after 1. 56. 33: $K_4$, after line 2 of passage No. 34 below:

य इदं भारतं राजन्वाचकाय प्रयच्छति ।
तेन सर्वा मही दत्ता भवेत्सागरमेखला ।

35

*N. B.* The passage occurs in $T_1$ also, which was ignored, through oversight, in the footnotes. — After line 16, $G_{1.3.4.5}$ repeat (with v. l.) 1. 57. 21. — (L. 42) $D_4$ $G_{1.2.4.5}$ महाराज्याभिषिक्तस्य (for the prior half). — (L. 43) $D_4$ $G_{4.5}$ चित्रवीर्यं यवीयसं. — (L. 53) $T_2$ $G_{1-6}$ विस्मयाद्दृष्ट°.

अष्टैश्वर्यां स्वदोषेण पतसि त्वं शुचिस्मिते ।
यैरारभन्ते कर्माणि शरीरैरिह देवताः ।
तैरेव तत्कर्मफलं प्राप्नुवन्ति स्म देवताः ।
मनुष्यास्त्वन्यदेहेन शुभाशुभमिति स्थितिः ।
सद्यः फलन्ति कर्माणि देवत्वे प्रेत्य मानुषे । [ 35 ]
तस्मात्त्वं पतसे पुत्रि प्रेत्य त्वं प्राप्स्यसे फलम् ।
पितृहीना तु कन्या त्वं वसोर्हि त्वं समागता ।
मत्स्ययोनौ समुत्पन्ना सुता राज्ञो भविष्यसि ।
अद्रिका मत्स्यरूपाभूद्ब्रह्मायमुनसंगमे ।
पराशरस्य दायादं त्वं पुत्रं जनयिष्यसि । [ 40 ]
यो वेदमेकं ब्रह्मर्षिश्चतुर्धा विभजिष्यति ।
महाभिषक्सुतस्यैव शंतनोः कीर्तिवर्धनम् ।
ज्येष्ठं चित्राङ्गदं वीरं चित्रवीरं च विश्रुतम् ।
एतानुत्पाद्य पुत्रांस्त्वं पुनरेवागमिष्यसि ।
व्यतिक्रमात्पितॄणां च प्राप्स्यसे जन्म कुत्सितम् । [ 45 ]
अस्यैव राज्ञस्त्वं कन्या ह्यद्रिकायां भविष्यसि ।
अष्टाविंशे भवित्री त्वं द्वापरे मत्स्ययोनिजा ।
एवमुक्ता पुरा तैस्त्वं जाता सत्यवती शुभा ।
अद्रिकेत्यभिविख्याता ब्रह्मशापाद्वराप्सराः ।
मीनभावमनुप्राप्ता त्वां जनित्वा गता दिवम् । [ 50 ]
तस्यां जातासि सा कन्या राज्ञो वीर्येण चैव हि ।
तस्माद्वासवि भद्रं ते याचे वंशकरं सुतम् ।

वैशंपायनः ।

विस्मयाविष्टसर्वाङ्गी जातिस्मरणतां गता ।

36

After 1. 57. 68^ab, $D_5$ $T_2$ G (except $G_6$) ins. :

ततो रम्ये वनोद्देशे दिव्यास्तरणसंवृतम् ।
वीरासनमुपास्थाय योगी ध्यानपरोऽभवत् ।
श्वेतपट्टगृहे रम्ये पर्यङ्के सोत्तरच्छदे ।
तूष्णींभूतां तदा कन्यां ज्वलन्तीं योगतेजसा ।
दृष्ट्वा तां तु समाधाय विचार्य च पुनः पुनः । [ 5 ]
स चिन्तयामास मुनिः किं कृतं सुकृतं भवेत् ।
शिष्टानां तु समाचारः शिष्टाचार इति स्मृतः ।
श्रुतिस्मृतिविदो विप्रा धर्मज्ञा ज्ञानिनः स्मृताः ।
धर्मज्ञैर्विहितो धर्मः श्रौतः स्मार्तो द्विधा द्विजैः ।
दानाग्निहोत्रमिज्या च श्रौतस्यैतद्धि लक्षणम् । [ 10 ]
स्मार्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः ।
धर्मे तु धारणे धातुर्महत्त्वे चापि पठ्यते ।
तत्रेष्टफलभाग्धर्म आचार्यैरुपदिश्यते ।
अनिष्टफलभाक्चेति तैरधर्मो भविष्यति ।
तस्मादिष्टफलार्थाय धर्ममेव समाचरेत् । [ 15 ]
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यश्च धार्मिकः ।
विवाहा ब्राह्मणानां तु गान्धर्वो नैव धार्मिकः ।
त्रिवर्णेतरजातीनां गान्धर्वासुरराक्षसाः ।
पैशाचो नैव कर्तव्यः पिशाचश्चाष्टमोऽधमः ।
सार्मर्पां व्यङ्गितां कन्यां मातुः स्वकुलजां तथा । [ 20 ]
वृद्धां प्रव्राजितां वन्ध्यां पतितां च रजस्वलाम् ।
अपस्मारकुले जातां पिङ्गलां कुष्ठिनीं व्रणीम् ।
न चाज्ञातां स्त्रियं गच्छेदिति धर्मानुशासनम् ।
पिता पितामहो भ्राता माता मातुल एव च ।
उपाध्यायर्त्विजश्चैव कन्यादाने प्रभूत्तमाः । [ 25 ]
एतैर्दत्तां निषेवेत नादत्तामाददीत च ।
इत्येव ऋषयः प्राहुर्विवाहे धर्मवित्तमाः ।
अस्या नास्ति पिता भ्राता माता मातुल एव च ।
गान्धर्वेण विवाहेन न स्पृशामि यदृच्छया ।
क्रियाहीनं तु गान्धर्वं न कर्तव्यमनापदि । [ 30 ]
यद्यस्यां जायते पुत्रो वेदव्यासो भवेदृषिः ।
क्रियाहीनः कथं विप्रो भवेदृषिरुदारधीः ।
एवं चिन्तयतो भावं महर्षेर्भावितात्मनः ।
ज्ञात्वा चैवाभ्यवर्तन्त पितरो बर्हिषस्तदा ।
तस्मिन्क्षणे ब्रह्मपुत्रो वसिष्ठोऽपि समेयिवान् । [ 35 ]
एवं स्वागतमित्युक्त्वा वसिष्ठः प्रत्यभाषत ।

पितृगणाः ।

अस्माकं मानसीं कन्याममेच्छापेन वासवीम् ।
यदि चेच्छसि पुत्रार्थं कन्यां गृह्णीष्व माचिरम् ।

वैशंपायनः ।

पितॄणां वचनं श्रुत्वा वसिष्ठः प्रत्युवाच ह ।
महर्षीणां वचः सत्यं पुराणेऽपि मया श्रुतम् । [ 40 ]
पराशरो ब्रह्मचारी प्रजार्थी मम वंशधृत् ।
एवं संभाषमाणे तु वसिष्ठे पितृभिः सह ।
ऋषयोऽभ्यागमंस्तत्र नैमिषारण्यवासिनः ।
विवाहं द्रष्टुमिच्छन्तः शक्तिपुत्रस्य धीमतः ।
अरुन्धती महाभागा अदृश्यन्त्या सहैव सा । [ 45 ]

36

(L. 2) $T_2$ $G_{1.3.4.5}$ ततो (for योगी). — (L. 6) $G_3$ चिंतयामास तेजस्वी विवाहश्च कुतो भवेत्. — (L. 8) $G_3$ °विदो विप्रो ज्ञानाद्धर्मश्च उच्यते. — (L. 20) $G_{2.4.5}$ वक्रितां (for व्यङ्गितां). — (L. 36) MSS. वसिष्ठं (for °ष्ठः). — (L. 61) $G_1$ स वृतोथो; $G_3$ स प्रयातो; $G_{4.5}$ संधृतोसौ (for सम्प्रतोदो). — (L. 63) $G_{1.2.4.5}$ स्वगुत्तमाम्. — (L. 73) $G_3$ वर्धिता; $G_4$ पालिता (for धीमता). — (L. 79) $G_{1.4.5}$ निष्कृतिनो. — MSS. wrongly ins. वैशंपायनः *after* line 84, instead of inserting it *before* the line (as in text).

विश्वकर्मकृतां दिव्यां पर्णशालां प्रविश्य सा ।
वैवाहिकांस्तु संभारान्संकल्प्य च यथाक्रमम् ।
अरुन्धती सत्यवतीं वधूं संगृह्य पाणिना ।
भद्रासने प्रतिष्ठाप्य इन्द्राणीं समकारयत् । [ 50 ]
आपूर्यमाणपक्षे तु वैशाख्यां सोमदैवते ।
शुभग्रहे त्रयोदश्यां मुहूर्ते मैत्र आगते ।
विवाहकाल इत्युक्त्वा वसिष्ठो मुनिभिः सह ।
यमुनाद्वीपमासाद्य शिष्यैश्च मुनिपत्निभिः ।
स्थण्डिलं चतुरस्रं च गोमयेनोपलिप्य च । [ 55 ]
अक्षतैः फलपुष्पैश्च स्वस्तिकैरार्द्रपल्लवैः ।
जलपूर्णघटैश्चैव सर्वतः परिशोभितम् ।
तस्य मध्ये प्रतिष्ठाप्य बृस्यां मुनिवरं तदा ।
सिद्धार्थयवकल्कैश्च स्नातं सर्वौषधैरपि ।
कृत्वार्जुनानि वस्त्राणि परिधाप्य महामुनिम् । [ 60 ]
वाचयित्वा तु पुण्याहमक्षतैस्तु समर्चितः ।
गन्धानुलिप्तः स्रग्वी च सप्रतोदो वधूगृहे ।
अपदातिस्ततो गत्वा वधूज्ञातिभिरर्चितः ।
स्नातामहतसंवीतां गन्धलिप्तां स्रगुज्ज्वलाम् ।
वधूं मङ्गलसंयुक्तामिषुहस्तां समीक्ष्य च । [ 65 ]
उवाच वचनं काले कालज्ञः सर्वधर्मवित् ।
प्रतिग्रहो दातृवशः श्रुतमेवं मया पुरा ।
यथा वक्ष्यन्ति पितरस्तत्करिष्यामहे वयम् ।
वैशंपायनः ।
तद्धर्मिष्ठं यशस्यं च वचनं सत्यवादिनः ।
श्रुत्वा तु पितरः सर्वे निःसङ्गा निष्परिग्रहाः । [ 70 ]
वसुं परमधर्मिष्ठमाहूयेदं वचोऽब्रुवन् ।
मत्स्ययोनौ समुत्पन्ना तव पुत्री विशेषतः ।
पराशराय मुनये दातुमर्हसि धर्मतः ।
वसुः ।
सत्यं मम सुता सा हि दाशराजेन धीमता ।
अहं प्रभुः प्रदाने तु प्रजापालः प्रजार्थिनाम् ।
पितरः ।
निराशिषो वयं सर्वे निःसङ्गा निष्परिग्रहाः । [ 75 ]
कन्यादानेन संबन्धो दक्षिणाबन्ध उच्यते ।
कर्मभूमिस्तु मानुष्यं भोगभूमिस्त्रिविष्टपम् ।
इह पुण्यकृतो यान्ति स्वर्गलोकं न संशयः ।
इह लोके दुष्कृतिनो नरकं यान्ति निर्घृणाः ।
दक्षिणाबन्ध इत्युक्ते उभे सुकृतदुष्कृते । [ 80 ]
दक्षिणाबन्धसंयुक्ता योगिनः प्रपतन्ति ते ।
तस्मान्नो मानसीं कन्यां योगाद्भ्रष्टां विशां पते ।
सुतात्वं तव संप्राप्तां सतीं भिक्षां ददस्व वै ।
वैशंपायनः ।
इत्युक्त्वा पितरः सर्वे क्षणादन्तर्हितास्तदा ।
याज्ञवल्क्यं समाहूय विवाहाचार्यमित्युत । [ 85 ]
वसुं चापि समाहूय वसिष्ठो मुनिभिः सह ।
विवाहं कारयामास श्रुतिदृष्टेन कर्मणा ।
वसुः ।
पराशर महाप्राज्ञ तव दास्याम्यहं सुताम् ।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ।
वैशंपायनः ।
वसोस्तु वचनं श्रुत्वा याज्ञवल्क्यमते स्थितः । [ 90 ]
कृतकौतुकमङ्गल्यः पाणिना पाणिमस्पृशत् ।
प्रभूताज्येन हविषा हुत्वा मन्त्रैर्हुताशनम् ।
त्रिरग्निं तु परिक्रम्य समभ्यर्च्य हुताशनम् ।
महर्षीन्याज्ञवल्क्यादीन्दक्षिणाभिः प्रतर्प्य च ।
लब्धानुज्ञोऽभिवाद्याशु प्रदक्षिणमथाकरोत् । [ 95 ]
पराशरे कृतोद्वाहे देवाः सर्षिगणास्तदा ।
हृष्टा जग्मुः क्षणादेव वेदव्यासो भवत्विति ।

37

After 1. 57. 69, D5 T (T1 contains only line 1) G ins.:

जातमात्रः स ववृधे सप्तवर्षोऽभवत्तदा ।
स्नात्वाभिवाद्य पितरं तस्थौ व्यासः समाहितः ।
स्वस्तीति वचनं चोक्त्वा ददौ कलशमुत्तमम् ।
गृहीत्वा कलशं पार्श्वे तस्थौ व्यासः समाहितः ।
ततो दाशभयात्पत्नी स्नात्वा कन्या बभूव सा । [ 5 ]
अभिवाद्य मुनेः पादौ पुत्रं जग्राह पाणिना ।
स्पृष्टमात्रे तु निर्भर्त्स्य मातरं वाक्यमब्रवीत् ।
मम पित्रा तु संस्पर्शान्मातस्त्वमभवः शुचिः ।
अद्य दाशसुता कन्या न स्पृशेर्मामनिन्दिते ।
वैशंपायनः ।
व्यासस्य वचनं श्रुत्वा बाष्पपूर्णमुखी तदा । [ 10 ]
मनुष्यभावात्सा योषित्पतिता मुनिपादयोः ।
महाप्रसादो भगवान्पुत्रं प्रोवाच धर्मवित् ।
मा त्वमेवंविधं कार्षीर्नैतद्धर्म्यं मतं हि नः ।
न दूष्यौ मातापितरौ तथा पूर्वोपकारिणौ ।
धारणाद्दुःखसहनाच्चयोर्माता गरीयसी । [ 15 ]
बीजक्षेत्रसमायोगे सस्यं जायेत लौकिकम् ।
जायते च सुतस्तद्वत्पुरुषस्त्रीसमागमे ।
मृगीणां पक्षिणां चैव अप्सराणां तथैव च ।
शूद्रयोन्यां च जायन्ते मुनयो वेदपारगाः ।
ऋष्यशृङ्गो मृगीपुत्रः कण्वो बर्हिसुतस्तथा । [ 20 ]
अगस्त्यश्च वसिष्ठश्च उर्वश्यां जनितावुभौ ।
सोमश्रवास्तु सर्प्यां तु अश्विनावश्विसंभवौ ।
स्कन्दः स्कन्नेन शुक्रेन जातः शरवणे पुरा ।
एवमेव च देवानामृषीणां चैव संभवः ।
लोकवादप्रवृत्तिर्हि न मीमांस्या बुधैः सदा । [ 25 ]

वेदव्यास इति प्रोक्तः पुराणे च स्वयंभुवा ।
धर्मनेता महर्षीणां मनुष्याणां त्वमेव च ।
तस्मात्पुत्र न दूष्येत वासवी योगचारिणी ।
मत्प्रीत्यर्थं महाप्राज्ञ सस्नेहं वक्तुमर्हसि ।
प्रजाहितार्थं संभूतो विष्णोर्भागो महानृषिः । [30]
तस्मात्स्वमातरं स्नेहात्प्रब्रवीहि तपोधन ।
वैशंपायनः ।
गुरोर्वचनमाज्ञाय व्यासः प्रीतोऽभवत्तदा ।
चिन्तयित्वा लोकवृत्तं मातुरङ्कमथाविशत् ।
पुत्रस्पर्शात्तु लोकेषु नान्यत्सुखमतीव हि ।
व्यासं कमलपत्राक्षं परिष्वज्याश्ववर्तयत् । [35]
स्तन्यासारैः क्लिद्यमाना पुत्रमाघ्राय मूर्धनि ।
वासवी ।
पुत्रलाभात्परं लोके नास्तीह प्रसवार्थिनाम् ।
दुर्लभं चेति मन्येऽहं मया प्राप्तं महत्तपः ।
महता तपसा तात महायोगबलेन च ।
मया त्वं हि महाप्राज्ञ लब्धोऽमृतमिवामरैः । [40]
तस्मात्त्वं मामृषेः पुत्र त्यक्तुं नार्हसि सांप्रतम् ।
वैशंपायनः ।
एवमुक्तस्ततः स्नेहाद्व्यासो मातरमब्रवीत् ।
त्वया स्पृष्टः परिष्वक्तो मूर्ध्नि चाघ्रायितो मुहुः ।
एतावन्मात्रया प्रीता भविष्येथा नृपात्मजे ।

38

After 1. 57. 70, D8 T2 G ins.:

ततः कन्यामनुज्ञाय पुनः कन्या भवत्विति ।
पराशरोऽपि भगवान्पुत्रेण सहितो ययौ ।
गत्वाश्रमपदं पुण्यमदृश्यन्त्याः पराशरः ।
जातकर्मादिसंस्कारं कारयामास धर्मतः ।
कृतोपनयनो व्यासो याज्ञवल्क्येन भारत । [5]
वेदानधिजगे साङ्गानोंकारेण त्रिमात्रया ।
गुरवे दक्षिणां दत्त्वा तपः कर्तुं प्रचक्रमे ।

39

After 1. 57. 75, D8 T2 G ins.:

ततः सत्यवती हृष्टा जगाम स्वं निवेशनम् ।
तस्यास्तु योजनाद्गन्धमाजिघ्रन्ति नरा भुवि ।
दाशराजस्तु तद्गन्धमाजिघ्रन्प्रीतिमावहत् ।
दाशराजः ।
त्वामाहुर्मत्स्यगन्धेति कथं बाले सुगन्धता ।
अपास्य मत्स्यगन्धत्वं केन दत्ता सुगन्धता । [5]
सत्यवती ।
शक्तेः पुत्रो महाप्राज्ञः पराशर इति श्रुतः ।
नावं वाहयमानाया मम दृष्ट्वा सुगर्हितम् ।
अपास्य मत्स्यगन्धत्वं योजनाद्गन्धतां ददौ ।
ऋषेः प्रसादं दृष्ट्वा तु जनाः प्रीतिमुपागमन् ।
एवं लब्धो मया गन्धो न रोषं कर्तुमर्हसि । [10]
वैशंपायनः ।
दाशराजस्तु तद्वाक्यं प्रशशंस ननन्द च ।
एतत्पवित्रं पुण्यं च व्याससंभवमुत्तमम् ।
इतिहासमिमं श्रुत्वा प्रजावन्तो भवन्ति च ।

Here follows a colophon in all the above mentioned MSS. except G4, 5.

40

After 1. 58. 8$^{ab}$, K0. 4 ins.:

प्रनष्टमुद्धृतं राजन्यथा प्रोक्तं स्वयंभुवा ।
सर्वेषामेव वर्णानां प्रनष्टानां महीपते ।
ब्राह्मणा एव कुर्वन्ति नित्यमेव युगे युगे ।

41

After 1. 61. 83, K3, 4 Ñ2, 3 V1 B D (except D5) ins.:

वैश्यापुत्रो युयुत्सुश्च धार्तराष्ट्रः शताधिकः ।
जनमेजय उवाच ।
ज्येष्ठानुज्येष्ठतां चैव नामधेयानि वा विभो ।
धृतराष्ट्रस्य पुत्राणामानुपूर्व्येण कीर्तय ।
वैशंपायन उवाच ।
दुर्योधनो युयुत्सुश्च राजन्दुःशासनस्तथा ।
दुःसहो दुःशलश्चैव दुर्मुखश्च तथापरः । [5]
विविंशतिर्विकर्णश्च जलसंधः सुलोचनः ।
विन्दानुविन्दौ दुर्धर्षः सुबाहुर्दुष्प्रधर्षणः ।
दुर्मर्षणो दुर्मुखश्च दुष्कर्णः कर्ण एव च ।
चित्रोपचित्रौ चित्राक्षश्चारुचित्राङ्गदश्च ह ।
दुर्मदो दुष्प्रहर्षश्च विवित्सुर्विकटः समः । [10]
ऊर्णनाभः सुनाभश्च तथा नन्दोपनन्दकौ ।
सेनापतिः सुषेणश्च कुण्डोदरमहोदरौ ।
चित्रबाहुश्चित्रवर्मा सुवर्मा दुर्विमोचनः ।
अयोबाहुर्महाबाहुश्चित्रचापसुकुण्डलौ ।
भीमवेगो भीमबलो बलाकी बलवर्धनः । [15]
उग्रायुधो भीमशरः कनकायुर्दृढायुधः ।
दृढवर्मा दृढक्षत्रः सोमकीर्तिरनूदरः ।
जरासंधो दृढसंधः सत्यसंधः सहस्रवाक् ।
उग्रश्रवा उग्रसेनः सेनानीर्दुष्पराजयः ।
अपराजितः पण्डितको विशालाक्षो दुराधरः । [20]
दृढहस्तः सुहस्तश्च वातवेगसुवर्चसौ ।

आदित्यकेतुर्बह्वाशी नागदन्तोग्रयायिनौ ।
कवची निषङ्गी पाशी दण्डधारो धनुर्ग्रहः ।
उग्रो भीमरथो वीरो वीरबाहुरलोलुपः ।
अभयो रौद्रकर्मा च तथा दृढरथश्च यः । [ 25 ]
अनाधृष्यः कुण्डभेदी विरावी दीर्घलोचनः ।
दीर्घबाहुर्महाबाहुर्व्यूढोरुः कनकध्वजः ।
कुण्डाशी विरजाश्चैव दुःशला च शताधिका ।
वैश्यापुत्रो युयुत्सुश्च धार्तराष्ट्रः शताधिकः ।
एतदेकशतं राजन्कन्या चैका प्रकीर्तिता । [ 30 ]
नामधेयानुपूर्व्या च ज्येष्ठानुज्येष्ठतां विदुः ।
सर्वे त्वतिरथाः शूराः सर्वे युद्धविशारदाः ।
सर्वे वेदविदश्चैव राजशास्त्रे च पारगाः ।
सर्वे संसर्गविद्यासु विद्याभिजनशोभिनः ।
सर्वेषामनुरूपाश्च कृता दारा महीपते । [ 35 ]
दुःशलां चैव समये सिन्धुराजाय कौरवः ।
जयद्रथाय प्रददौ सौबलानुमते तदा ।

☞ This passage is an anticipation of adhy. 108 (*q. v.*).

## 42

After 1. 61. 86, K$_{3.4}$ N V$_1$ B D (except D$_3$) ins.:

यस्यावतरणे राजन्सुरान्सोमोऽब्रवीद्वचः ।
नाहं दद्यां प्रियं पुत्रं प्रेयांसमपि जीवितात् ।
समयः क्रियतामेष न शक्यमतिवर्तितुम् ।
सुरकार्यं हि नः कार्यमसुराणां क्षितौ वधः ।
तत्र यास्यत्ययं वर्चो न च स्थास्यति मे चिरम् । [ 5 ]
ऐन्द्रिर्नरस्तु भविता यस्य नारायणः सखा ।
सोऽर्जुनेत्यभिविख्यातः पाण्डोः पुत्रः प्रतापवान् ।
तस्यायं भविता पुत्रो बालो भुवि महारथः ।
तत्र षोडश वर्षाणि स्थास्यत्यमरसत्तमाः ।
अस्य षोडशवर्षस्य स संग्रामो भविष्यति । [ 10 ]
यत्रांशा वः करिष्यन्ति कर्म दानवसूदनम् ।
नरनारायणाभ्यां तु स संग्रामो विनाकृतः ।
चक्रव्यूहं समास्थाय योधयिष्यन्ति चासुराः ।
विमुखाञ्शात्रवान्सर्वान्कारयिष्यति मे सुतः ।
बालः प्रविश्य तं व्यूहमभेद्यं विचरिष्यति । [ 15 ]
महारथानां वीराणां कदनं च करिष्यति ।
सर्वेषां चैव शत्रूणां चतुर्थांशं नयिष्यति ।
दिनार्धेन महाबाहुः प्रेतराजपुरं प्रति ।
ततो महारथैर्वीरैः समेत्य बहुभी रणे ।
दिनक्षये महाबाहुर्मया भूयः समेष्यति । [ 20 ]
एकं वंशकरं वीरं पुत्रं वै जनयिष्यति ।
प्रनष्टं भारतं वंशं स भूयो धारयिष्यति ।
एतत्सोमवचः श्रुत्वा तथास्त्विति दिवौकसः ।
प्रत्यूचुः सहिताः सर्वे ताराधिपमपूजयन् ।
एवं ते कथितं राजंस्तव जन्म पितुः पितुः । [ 25 ]

## 43

After 1. 61. 88, K$_4$ N V$_1$ B D (except D$_3$) ins.:

प्रतिविन्ध्यः सुतसोमः श्रुतकीर्तिस्तथापरः ।
नाकुलिश्च शतानीकः श्रुतसेनश्च वीर्यवान् ।
शूरो नाम यदुश्रेष्ठो वसुदेवपिताभवत् ।

---

41

N$_3$ D$_{2.3}$ om. line 1; after line 1, B$_1$ reads (for the first time) line 30 (v. l. चैव शताधिका for चैका प्र°). K$_3$ om. lines 2–31. — (L. 2) V$_1$ तेषां; Dn D$_1$ एषां (for चैव). — (L. 9) K$_4$ B Da$_3$ D$_{1-3}$ चित्रोपचित्रश्. — (L. 11) Dn D$_{1.3.4}$ पद्मनाभः (for सुना°). — (L. 13) N$_3$ V$_1$ B$_4$m Dn D$_{1.4}$ दुर्विरोचनः. — (L. 15) Da बलमर्दनः; Dn D$_{1.4}$ भीमविक्रमः. — (L. 17) Ñ$_1$ B (except B$_6$) दृढधन्वा (for °वर्मा). Ñ$_2$ Dn D$_1$ अनूदयः; Ñ$_3$ V$_1$ अयोदरः. — (L. 19) Ñ$_{2.3}$ V$_1$ Dn D$_{1.4}$ क्षेमनू(Ñ$_{2.3}$ V$_1$ °धू)र्तिस्तथैव च (for the posterior half). — (L. 20) Ñ$_2$ दुरासदः; B$_4$ °युधः; Dn D$_1$ °धनः. — (L. 22) K$_4$ नागदत्तश्च याजिनौ; B$_6$ Da °प्रगामिनौ; Dn D$_{1.4}$ नागदत्तानुयायिनौ. — (L. 23) Dn D$_{1.4}$ दंडी (for पाशी). — (L. 27) Da Dn D$_{1.3.4}$ व्यूढोरः. N$_1$ Da कनकस्तथा; Dn D$_{1.4}$ कनकांगदः; D$_3$ कनकत्सरुः. — (L. 28) Ñ$_3$ V$_1$ B$_1$ Da Dn D$_{1.3.4}$ कुंडजश्चित्रकश्चैव. — L. 29 = L. 1. — (L. 34) K$_4$ समग्र°; V$_1$ संसक्त°; Dn D$_{1.4}$ संग्राम° (for संसर्ग°). K$_3$ V$_1$ दिव्याभिज्ञानज्ञो°; K$_4$ विद्याविज्ञान°; Ñ$_3$ °जनसंमताः. — (L. 36) K$_4$ Ñ$_2$ V$_1$ Dn D$_{1.4}$ °लां समये राजन्.

42

(L. 1) Dn D$_{1.3.4}$ इदं (for वचः). — (L. 2) K$_{3.4}$ Ñ$_{1.2}$ V$_1$ B$_6$m Da Dn D$_{1.3.4}$ मम प्राणैर्गरीयसं. — (L. 5) B मे (as in text); the rest वै. — (L. 9) K$_3$ B Dn$_2$ D$_2$ ततः (for तत्र). K$_{3.4}$ N$_{1.2}$ V$_1$ B$_6$m वत्स्यते (for स्थास्यति). — (L. 11) K$_3$ तत्राद्भुतं; K$_4$ D$_2$ यत्राश्चर्यं; Ñ V$_1$ B$_5$ यत्र शक्ताः (for यत्रांशा वः). Ñ$_2$ V$_1$ B$_{4.5}$ Dn D$_{1.3.4}$ वीरनिषूदनं (for दानव°). — (L. 13) K$_4$ ये सुराः; B$_6$ वै सु°; Dn D$_1$ वः सु°. — (L. 14) K$_{3.4}$ Ñ$_{1.2}$ B$_3$ Da D$_{1.2}$ वा(*or* धा)रयि°. — (L. 19) K$_{3.4}$ Ñ$_2$ V$_1$ Dn D$_{1.3.4}$ बहुशो रणे. — (L. 21) K$_4$ Ñ$_{1.2}$ V$_1$ Dn D$_{1.3.4}$ transp. वीरं and पुत्रं.

तस्य कन्या पृथा नाम रूपेणासदृशी भुवि ।
पितुः स्वस्रीयपुत्राय सोऽनपत्याय वीर्यवान् । [5]
अग्रमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वै तदा ।
अग्रजातेति तां कन्यां शूरोऽनुग्रहकाङ्क्षया ।
अददत्कुन्तिभोजाय स तां दुहितरं तदा ।
सा नियुक्ता पितुर्गेहे ब्राह्मणातिथिपूजने ।
उग्रं पर्यचरद्घोरं ब्राह्मणं संशितव्रतम् । [10]
निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः ।
तमुग्रं शंसितात्मानं सर्वयत्नैरतोषयत् ।
तुष्टोऽभिचारसंयुक्तमाचचक्षे यथाविधि ।
उवाच चैनां भगवान्प्रीतोऽस्मि सुभगे तव ।
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि । [15]
तस्य तस्य प्रसादात्त्वं देवि पुत्राञ्जनिष्यसि ।
एवमुक्ता च सा बाला तदा कौतूहलान्विता ।
कन्या सती देवमर्कमाजुहाव यशस्विनी ।
प्रकाशकर्मा तपनस्तस्यां गर्भं दधौ तदा ।
अजीजनत्सुतं चास्यां सर्वशस्त्रभृतां वरम् । [20]
सकुण्डलं सकवचं देवगर्भं श्रियान्वितम् ।
दिवाकरसमं दीप्त्या चारुसर्वाङ्गभूषणम् ।
निगूहयन्ती जातं वै बन्धुपक्षभयात्तदा ।
उत्ससर्ज जले कुन्ती तं कुमारं यशस्विनम् ।
वमुत्सृष्टं जले गर्भं राधाभर्ता महायशाः । [25]
राधायाः कल्पयामास पुत्रं सोऽधिरथस्तदा ।
चक्रतुर्नामधेयं च तस्य बालस्य तावुभौ ।
दम्पती वसुषेणेति दिक्षु सर्वासु विश्रुतम् ।
स वर्धमानो बलवान्सर्वास्त्रेषूत्तमोऽभवत् ।
आ पृष्ठतापाच्च तदा जजाप जपतां वरः । [30]
यस्मिन्काले जपन्नास्ते धीमान्सत्यपराक्रमः ।
नादेयं ब्राह्मणेष्वासीत्तस्मिन्काले महात्मनः ।
तमिन्द्रो ब्राह्मणो भूत्वा पुत्रार्थे भूतभावनः ।
ययाचे कुण्डले वीरं कवचं च सहाङ्गजम् ।
उत्कृत्य कर्णो ह्यददत्कुण्डले कवचं च तत् । [35]
शक्तिं शक्रोऽददत्तस्मै विस्मितश्चेदमब्रवीत् ।
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।
यस्मिन्क्षेप्स्यसि दुर्धर्ष स एको न भविष्यति ।
पुरा नाम तु तस्यासीद्वसुषेणेति विश्रुतम् ।
ततो वैकर्तनः कर्णः कर्मणा तेन सोऽभवत् । [40]

☞ This passage (from line 3 onwards) is an anticipation of adhy. 104 (*q. v.*).

### 44

After 1. 67. 14$^{ab}$, D$_3$ ins.:

त्वयैवं का समा नारी न गन्धर्वी तथाप्सराः ।
न मिश्रकेशी रम्भा वा न घृताची न मेनका ।
चार्वङ्गी वसुकेशी च यथा त्वं मत्तकाशिनि ।
कम्बुग्रीवा च सुश्रोणी मृगाक्षी सुस्तनीति च ।
निगूढगुल्फा रक्तौष्ठी सुरक्तनखपद्धतिः । [5]
ईषच्च गद्गदां वाचं रम्भोरु त्वं शुचिस्मिते ।
यौ तौ जातौ सुसंश्लिष्टौ मध्ये हारविलक्षितौ ।
अनर्हं धारयन्नित्यमलं वा चीरवल्कलम् ।
इदं शैलकुशाकीर्णं पल्लवैरुपसेवितम् ।
सिंहशार्दूलसंयुक्तं मृगपक्षिसमाकुलम् । [10]
वनं कण्टकितं घोरं निर्मनुष्यमभूतवत् ।
अर्हसे हर्म्यप्रासादान्सौवर्णान्मणिकुट्टिमान् ।
स्वास्तीर्णतल्पमुदितान्कार्तस्वरविभूषितान् ।
इदं नार्हसि कल्याणि कृपणत्वं वरानने ।
मुमूर्षुं मदनाश्लिष्टं त्राहि मां शुभचारिणम् । [15]
न स्मृतिं वाभिजानामि न दिशं गतचापलः ।
अर्धनालीकनाराचशक्तितोमरमुद्गराः ।
पतन्ति स्म शरीरं मे पादमूलशिरांसि च ।
पुनः प्ररोहते देवि वनं परशुना हतम् ।
कामाग्निना सुसंदीप्तं तपत्येव ममाङ्गकम् । [20]
हृदि प्रौढे सुतीक्ष्णाग्रे मन्ये भैषज्यमीदृशम् ।
प्रेम्णा संभाषणं स्पर्शं स्मृतिर्दृष्टिः कथामपि ।
विनान्यौषधकामिन्यः प्रजापतिरथाब्रवीत् ।
एवमेतन्महाभागे सुप्रिये स्मितभाषिणि ।

### 45

S ins. after 1. 67. 23:

शङ्कितेव च विप्रर्षिमुपचक्राम सा शनैः ।
ततोऽस्य भारं जग्राह आसनं चाप्यकल्पयत् ।

---

43

(L. 1) K$_4$ Ñ$_{1.2}$ V$_1$ B$_{3.5}$ श्रुतकर्मा; D$_{1,2,4}$ श्रुतसोमः (for श्रुतसोमः). — (L. 16) K$_4$ Ñ$_3$ B D$_{2,5}$ प्रसादात्तस्य तस्यैव; D$_3$ प्रसादात्त्वं देवपुत्रान्. K$_4$ Ñ$_3$ B D$_{3,4,5}$ पुत्रं त्वं (D$_3$ पुत्रान्हि) जनयिष्यसि. — (L. 22) Ñ$_{1.2}$ V$_1$ Dn D$_{1.4}$ °भूषितं (for °भूषणम्). — (L. 23) V$_1$ B$_{3m}$ Dn D$_{1.4}$ निगूहमाना. — (L. 30) V$_1$ Dn D$_{1.4}$ वेदांगानि च सर्वाणि; Da D$_3$ आ पृष्ठसंप्रतापाच्च. — (L. 34) Ñ$_3$ V$_1$ Da तदंगजं (for सहा°). — (L. 35) Ñ$_{1.2}$ V$_1$ Dn D$_{1.4}$ कवचं कुंडले तथा (for the posterior half). — (L. 36) Ñ V$_1$ Da Dn D$_{1,2,4}$ ददौ (for ऽददत्). — (L. 39) Ñ$_2$ V$_1$ Dn D$_{1.4}$ °षेण इति क्षितौ.

45

With lines 2–3, 11–12, and 18–19, cf. 1. 67. 30–31.

प्राक्षालयञ्च सा पादौ काश्यपस्य महात्मनः ।
न चैनं लज्जयाशक्नोद्दक्षिभ्यामभिवीक्षितुम् ।
शकुन्तला च सव्रीडा तस्मिं नाभ्यभाषत । [5]
तस्मात्स्वधर्मात्स्खलिता भीता सा भरतर्षभ ।
अभवद्धोपदर्शित्वाद्ब्रह्मचारिण्ययन्त्रिता ।
स तदा व्रीडितां दृष्ट्वा ऋषिस्तां प्रत्यभाषत ।

कण्वः ।

सव्रीडैव च दीर्घायुः पुरेव भविता न च ।
वृत्तं कथय रम्भोरु मा त्रासं च प्रकल्पय । [10]

वैशंपायनः ।

ततः प्रक्षाल्य पादौ सा विश्रान्तं पुनरब्रवीत् ।
निधाय कामं तस्यर्षेः कन्दानि च फलानि च ।
ततः संवाह्य पादौ सा विश्रान्तं वेदिमध्यमा ।
शकुन्तला पौरवाणां दुःषन्तं जगुषी पतिम् ।
ततः कृच्छ्रादतिशुभा सव्रीडा श्रीमती तदा । [15]
सगद्गदमुवाचेदं काश्यपं सा शुचिस्मिता ।

शकुन्तला ।

राजा ताताजगामेह दुःषन्त इलिलात्मजः ।
मया पतिर्वृतो योऽसौ दैवयोगादिहागतः ।
तस्य तात प्रसीद त्वं भर्ता मे सुमहायशाः ।
अतः सर्वं तु यद्वृत्तं दिव्यज्ञानेन पश्यसि । [20]
अभयं क्षत्रियकुले प्रसादं कर्तुमर्हसि ।

☞ The above passage is ins. in *all* S MSS. after 1. 67. 23. The reservation in the footnotes to 1. 67. 23–24 that T2 G4–6 ins. it after 24 is unnecessary and should be *deleted*.

## 46

After 1. 68. 9, D4 (suppl. fol.; *sec. m.*) S ins.:

शकुन्तलां समाहूय कण्वो वचनमब्रवीत् ।

कण्वः ।

शृणु भद्रे मम सुते मम वाक्यं शुचिस्मिते ।
पतिव्रतानां नारीणां विशिष्टमिति चोच्यते ।
पतिशुश्रूषणं पूर्वं मनोवाक्कायचेष्टितैः ।
अनुज्ञाता मया पूर्वं पूजयैतद्व्रतं तव । [5]
एतेनैव च वृत्तेन पुण्याँल्लोकानवाप्य च ।
तस्मान्ते मानुषे लोके विशिष्टां लप्स्यसे श्रियम् ।
तस्माद्भद्रेऽद्य यातव्यं समीपं पौरवस्य ह ।
स्वयं नायाति मत्वा ते गतं कालं शुचिस्मिते ।
गत्वाराधय राजानं दुःषन्तं हितकाम्यया । [10]
दौःषन्तिं यौवराज्यस्थं दृष्ट्वा प्रीतिमवाप्स्यसि ।
देवतानां गुरूणां च क्षत्रियाणां च भामिनि ।
भर्तृणां च विशेषेण हितं संगमनं सताम् ।
तस्मात्पुत्रि कुमारेण गन्तव्यं मत्प्रियेप्सया ।
प्रतिवाक्यं न दद्यास्त्वं शापिता मम पादयोः । [15]

वैशंपायनः ।

एवमुक्त्वा सुतां तत्र पौत्रं कण्वोऽभ्यभाषत ।
परिष्वज्य च बाहुभ्यां मूर्ध्न्युपाघ्राय पौरवम् ।
सोमवंशोद्भवो राजा दुःषन्त इति विश्रुतः ।
तस्याग्रमहिषी चैषा तव माता शुचिव्रता ।
गन्तुकामा भर्तृपार्श्वं त्वया सह सुमध्यमा । [20]
गत्वाभिवाद्य राजानं यौवराज्यमवाप्स्यसि ।
स पिता तव राजेन्द्रस्तस्य त्वं वशगो भव ।
पितृपैतामहं राज्यमातिष्ठस्व स्वभावतः ।
तस्मिन्काले स्वराज्यस्थो मामनुस्मर पौरव ।

वैशंपायनः ।

अभिवाद्य मुनेः पादौ पौरवो वाक्यमब्रवीत् । [25]
त्वं पिता मम विप्रर्षे त्वं माता त्वं गतिश्च मे ।
न चान्यं पितरं मन्ये त्वामृते तु महातपः ।
तव शुश्रूषणं पुण्यमिह लोके परत्र च ।
शकुन्तला भर्तृकामा स्वयं यातु यथेष्टतः ।
अहं शुश्रूषणपरः पादमूले वसामि वः । [30]
क्रीडां व्यालमृगैः सार्धं करिष्ये न पुरा यथा ।
स्वच्छासनपरो नित्यं स्वाध्यायं च करोम्यहम् ।

वैशंपायनः ।

एवमुक्त्वा तु संक्षिप्य पादौ कण्वस्य तिष्ठति ।
तस्य तद्वचनं श्रुत्वा प्ररुरोद शकुन्तला ।
स्नेहात्पितुश्च पुत्रस्य हर्षशोकसमन्विता । [35]
निशाम्य रुदतीमार्तां दौःषन्तिर्वाक्यमब्रवीत् ।
श्रुत्वा भगवतो वाक्यं किं रोदिषि शकुन्तले ।
गन्तव्यं काल्य उत्थाय भर्तृप्रीतिस्तवास्ति चेत् ।

शकुन्तला ।

एकस्तु कुरुते पापं फलं भुङ्क्ते महाजनः ।
मोक्तारस्तत्र मुच्यन्ते कर्ता दोषेण लिप्यते । [40]
मया निवारितो नित्यं न करोषि वचो मम ।
निःसृतान्कुञ्जरान्नित्यं बाहुभ्यां संप्रमथ्य वै ।
वनं च लोडयन्नित्यं सिंहव्याघ्रगणैर्युतम् ।
एवंविधानि चान्यानि कृत्वा वै पुरुनन्दन ।

---

46

(L. 18) T1 G1 M नाम (for इति). T1 G1 ते पिता (for विश्रुतः). — (L. 23) T1 G1.2 M अनुतिष्ठ (for आतिष्ठस्व). — (L. 30) Noteworthy is the expression पादमूले! Cf. line 35 of passage No. 68. — (L. 36) M तां तु (for आर्ता). — T2 M3 om. line 40 (which appears to be redundant!). — (L. 51) M तथ्यं (for पथ्यं).

हर्षितो भगवांस्तात तस्मादावां विवासितौ । [ 45 ]
अहं न गच्छे दुःषन्तं नास्मि पुत्रहितैषिणी ।
पादमूले वसिष्यामि महर्षेर्भावितात्मनः ।
वैशंपायनः ।
एवमुक्त्वा तु रुदती पपात मुनिपादयोः ।
एवं विलपतीं कण्वश्चानुनीय च हेतुभिः ।
पुनः प्रोवाच भगवानानृशंस्याद्धितं वचः । [ 50 ]
कण्वः ।
शकुन्तले श्रृणुष्वेदं हितं पथ्यं च भामिनि ।
पतिव्रताभावगुणान्हित्वा साध्यं न किंचन ।
पतिव्रतानां देवा वै तुष्टाः सर्ववरप्रदाः ।
प्रसादं च करिष्यन्ति आपदर्थे च भामिनि ।
पतिप्रसादात्पुण्यगतिं प्राप्नुवन्ति न चाशुभम् । [ 55 ]
तस्माद्गत्वा तु राजानमाराधय शुचिस्मिते ।
वैशंपायनः ।
शकुन्तलां तथोक्त्वा वै शाकुन्तलमथाब्रवीत् ।
दौहित्रो मम पौत्रस्त्वमिलिलस्य महात्मनः ।
श्रृणुष्व वचनं सत्यं प्रब्रवीमि तवानघ ।
मनसा भर्तृकामा वै वाग्भिरुक्त्वा पृथग्विधम् । [ 60 ]
गन्तुं नेच्छति कल्याणी तस्मात्तात वहस्व वै ।
शक्तस्त्वं प्रतिगन्तुं च मुनिभिः सह पौरव ।

47

After 1. 68. 11, $D_4$ (suppl. fol.; *sec. m.*) S (except $G_3$) ins.:

वैशंपायनः ।
धर्माभिपूजितं पुत्रं काश्यपेन निशाम्य तु ।
काश्यपात्प्राप्य चानुज्ञां मुमुदे च शकुन्तला ।
कण्वस्य वचनं श्रुत्वा प्रतिगच्छेति चासकृत् ।
तथेत्युक्त्वा तु कण्वं च मातरं पौरवोऽब्रवीत् ।
किं चिरायसि मातस्त्वं गमिष्यामो नृपालयम् । [ 5 ]
एवमुक्त्वा तु तां देवीं दुःषन्तस्य महात्मनः ।
अभिवाद्य मुनेः पादौ गन्तुमैच्छत्स पौरवः ।
शकुन्तला च पितरमभिवाद्य कृताञ्जलिः ।
प्रदक्षिणीकृत्य तदा पितरं वाक्यमब्रवीत् ।
अज्ञानान्मे पिता चेति दुरुक्तं वापि चानृतम् । [ 10 ]
अकार्यं वाप्यनिष्टं वा क्षन्तुमर्हति तद्भवान् ।
एवमुक्तो नतशिरा मुनिर्नोवाच किंचन ।
मनुष्यभावात्कण्वोऽपि मुनिरश्रूण्यवर्तयत् ।
अब्भक्षान्वायुभक्षांश्च शीर्णपर्णाशनान्मुनीन् ।
फलमूलाशिनो दान्तान्कृशान्धमनिसंततान् । [ 15 ]
व्रतिनो जटिलान्मुण्डान्वल्कलाजिनसंवृतान् ।
समाहूय मुनिः कण्वः कारुण्यादिदमब्रवीत् ।
मया तु लालिता नित्यं मम पुत्री यशस्विनी ।
वने जाता विवृद्धा च न च जानाति किंचन ।
आश्रमेण पथा सर्वैर्नीयतां क्षत्रियालयम् । [ 20 ]
द्वितीययोजने विप्राः प्रतिष्ठानं प्रतिष्ठितम् ।
प्रतिष्ठाने पुरे राजा शाकुन्तलपितामहः ।
अध्युवास चिरं कालमुर्वश्या सहितः पुरा ।
अनूपजाङ्गलयुतं धनधान्यसमाकुलम् ।
प्रतिष्ठितं पुरवरं गङ्गायामुनसंगमे । [ 25 ]
तत्र संगममासाद्य स्नात्वा हुतहुताशनाः ।
शाकमूलफलाहारा निवर्तध्वं महातपाः ।
अन्यथा तु भवेद्विप्रा अध्वनो गमने श्रमः ।

48

After 1. 68. 13, $D_4$ (suppl. fol.; *sec. m.*) S ins.:

शकुन्तलां समादाय मुनयो धर्मवत्सलाः ।
ते वनानि नदीः शैलान्गिरिप्रस्रवणानि च ।
कन्दराणि नितम्बांश्च राष्ट्राणि नगराणि च ।

---

47

(L. 5 and 11) $T_1$ $G_1$ M भद्रे (for मातः), and काश्यपः (for तद्भवान्). — (L. 20) $T_1$ $G_1$ $M_8$ अश्रमेण.

48

$G_3$ om. lines 1–14. — (L. 5) M समागताः. — (L. 8) $T_1$ $M_8$ °ध्वीचक्रयंत्रैश्च; $M_{6-8}$ °ध्वीयंत्रचक्रैश्च. — (L. 15) $T_1$ $M_8$ (*inf. lin.*) सर्वतः पुष्करिण्यश्च; $M_8$ सर्वतः पद्मिनीभिश्च; $M_{6-8}$ भृतां पुष्करिणी°. M (except $M_5$) उद्यानैरुपशोभितां. — (L. 18) $T_1$ क्रतुयज्ञैश्च; $M_8$ क्रतुयत्तैश्च; $M_{6-8}$ ब्राह्मणैश्चैव. — (L. 19) $M_{8, 6-8}$ अकार्यवर्जितैश्चैव ($M_8$ °वर्जकैर्नित्यं). — (L. 20) M (except $M_5$) पूर्णा (for सर्वैः). — (L. 21) M इन्द्रस्येवामरावती (for the posterior half). — (L. 25) M °कारशोभिताः. — (L. 26) M (except $M_5$) वैश्यैः (for the first चापि). — (L. 28) $T_1$ $G_{1, 2}$ सदाभ्येत्य; M तथाभ्येत्य. — (L. 29) $T_1$ महायशाः; $M_8$ महर्षिभिः; $M_8$ (*inf. lin.*)$_{, 6-8}$ मनीषिभिः. — (L. 30) M महर्षयः (for त्वलक्षयन्). — After line 30, M (except $M_5$) ins.:

शकुन्तलामिदं प्रीता हर्षयन्तोऽब्रुवन्वचः ।

— (L. 32) M (except $M_5$) अद्य (for एते). — (L. 36) M (except $M_5$) प्रेक्षकाः प्रशशंसिरे (for the posterior half). — (L. 46) M (except $M_5$) ये स्वनेत्रैः प्रप°. — (L. 53) M (except $M_5$) क्षांतान् (for दीनान्). — (L. 60) M (except $M_5$) नगरं न प्रवेष्टव्यं भवद्भिरिति शासनं. — Colophon. *Adhy. no.*: $T_1$ 86; $T_2$ 36; $G_{1-3, 6}$ M 37. — $D_4$ $T_1$ $G_{2, 3, 6}$ M (except $M_5$) om. line 68. — (L. 68) $T_1$ $G_{1, 2}$ $M_8$ लक्ष्यते (for दृश्यते).

आश्रमाणि च पुण्यानि गत्वा चैव गतश्रमाः ।
शनैर्मध्याह्नवेलायां प्रतिष्ठानं समाययुः । [ 5 ]
तां पुरीं पुरुहूतेन ऐलस्यार्थे विनिर्मिताम् ।
परिघाट्टालकैर्मुख्यैरुपतल्पशतैरपि ।
शतघ्नीशतयन्त्रैश्च गुप्तामन्यैर्दुरासदाम् ।
हर्म्यप्रासादसंबाधां नानापण्यविभूषिताम् ।
मण्टपैः ससभै रम्यैः प्रपाभिश्च समावृताम् । [ 10 ]
राजमार्गेण महता सुविभक्तेन शोभिताम् ।
कैलासशिखराकारैर्गोपुरैः समलंकृताम् ।
द्वारतोरणनिर्यूहैर्मङ्गलैरुपशोभिताम् ।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ।
सर्वपुष्करिणीभिश्च उद्यानैश्च समावृताम् । [ 15 ]
वर्णाश्रमैः स्वधर्मस्थैर्नित्योत्सवसमाहितैः ।
धनधान्यसमृद्धैश्च संतुष्टै रत्नपूजितैः ।
क्रतुयुक्तैश्च विद्वद्भिरग्निहोत्रपरैः सदा ।
वर्जिताकार्यकरणैर्दानशीलैर्दयापरैः ।
अधर्मभीरुभिः सर्वैः स्वर्गलोकजिगीषुभिः । [ 20 ]
एवंविधजनोपेतमिन्द्रलोकमिवापरम् ।
तस्मिन्नगरमध्ये तु राजवेश्म प्रतिष्ठितम् ।
इन्द्रसद्मप्रतीकाशं संपूर्णं वित्तसंचयैः ।
तस्य मध्ये सभा दिव्या नानारत्नविचित्रिता ।
तस्यां सभायां राजर्षिः सर्वालंकारभूषितः । [ 25 ]
ब्राह्मणैः क्षत्रियैश्चापि मन्त्रिभिश्चापि संवृतः ।
संस्तूयमानो राजेन्द्रः सूतमागधवन्दिभिः ।
कार्यार्थिभिः समभ्येत्य कृत्वा कार्यं गतेषु सः ।
सुखासीनोऽभवद्राजा तस्मिन्काले महर्षयः ।
शकुन्तानां स्वनं श्रुत्वा निमित्तज्ञास्त्वलक्षयन् । [ 30 ]

ऋषयः ।

शकुन्तले निमित्तानि शोभनानि भवन्ति नः ।
कार्यसिद्धिं वदन्त्येते ध्रुवं राज्ञी भविष्यसि ।
अस्मिंस्तु दिवसे पुत्रो युवराजो भविष्यति ।

वैशंपायनः ।

वर्धमानपुरद्वारं तूर्यघोषनिनादितम् ।
शकुन्तलां पुरस्कृत्य विविशुस्ते महर्षयः । [ 35 ]
प्रविशन्तं नृपसुतं प्रशशंसुश्च प्रेक्षकाः ।
वर्धमानपुरद्वारं प्रविशन्नेव पौरवः ।
इन्द्रलोकस्थमात्मानं मेने हर्षसमन्वितः ।
ततो वै नागराः सर्वे समाहूय परस्परम् ।
द्रष्टुकामा नृपसुतं समपद्यन्त भारत । [ 40 ]

नागराः ।

देवतेव जनस्याग्रे भ्राजते श्रीरिवागता ।
जयन्तेनेव पौलोमी इन्द्रलोकादिहागता ।

वैशंपायनः ।

इति ब्रुवन्तस्ते सर्वे महर्षीनिदमब्रुवन् ।
अभिवादयन्तः सहिता महर्षीन्देववर्चसः ।
अद्य नः सफलं जन्म कृतार्थाश्च ततो वयम् । [ 45 ]
एवं ये स्म प्रपश्यामो महर्षीन्सूर्यवर्चसः ।
इत्युक्त्वा सहिताः केचिदन्वगच्छन्त पौरवम् ।
हैमवत्याः सुतमिव कुमारं पुष्करेक्षणम् ।
ये केचिदब्रुवन्मूढाः शाकुन्तलदिदृक्षवः ।
कृष्णाजिनेन संछन्नान्द्रष्टुं नेच्छन्ति तापसान् । [ 50 ]
पिशाचा इव दृश्यन्ते नागराणां विरूपिणः ।
विना संध्यां पिशाचास्ते प्रविशन्ति पुरोत्तमम् ।
क्षुत्पिपासार्दितान्दीनान्वल्कलाजिनवाससः ।
त्वगस्थिभूतान्निर्मांसान्धमनीसंततानपि ।
पिङ्गलाक्षान्पिङ्गजटान्दीर्घदन्तान्निरूदरान् । [ 55 ]
विशीर्षकानूर्ध्वहस्तान्दृष्ट्वा हासन्ति नागराः ।
एवमुक्तवतां तेषां गिरं श्रुत्वा महर्षयः ।
अन्योन्यं ते समाहूय इदं वचनमब्रुवन् ।
उक्तं भगवता वाक्यं न कृतं सत्यवादिना ।
पुरप्रवेशनं नात्र कर्तव्यमिति शासनम् । [ 60 ]
किं कारणं प्रवेक्ष्यामो नगरं दुर्जनैर्वृतम् ।
त्यक्तसंगस्य च मुनेर्नगरे किं प्रयोजनम् ।
तस्माद्गमिष्याम वयं गङ्गायामुनसंगमम् ।
एवमुक्त्वा मुनिगणाः प्रतिजग्मुर्यथागतम् ।

Colophon.

वैशंपायनः ।

गतान्मुनिगणान्दृष्ट्वा पुत्रं संगृह्य पाणिना । [ 65 ]
मातापितृभ्यां विरहाद्यथा शोचन्ति दारकाः ।
तथा शोकपरीताङ्गी धृतिमालम्ब्य दुःखिता ।
गतेषु तेषु विप्रेषु राजमार्गेण भामिनी ।
पुत्रेणैव सहायेन सा जगाम शनैः शनैः ।
अदृष्टपूर्वान्पश्यन्वै राजमार्गेण पौरवः । [ 70 ]
हर्म्यप्रासादचैत्यांश्च सभा दिव्या विचित्रिताः ।
कौतूहलसमाविष्टो दृष्ट्वा विस्मयमागतः ।
सर्वे ब्रुवन्ति तां दृष्ट्वा पद्महीनामिव श्रियम् ।
गतेन हंसीसदृशीं कोकिलेन स्वरे समाम् ।
मुखेन चन्द्रसदृशीं श्रिया पद्मालयासमाम् । [ 75 ]
स्मितेन कुन्दसदृशीं पद्मगर्भसमत्वचम् ।
पद्मपत्रविशालाक्षीं तप्तजाम्बूनदप्रभाम् ।
करान्तमितमध्यां तां सुकेशीं संहतस्तनीम् ।
जघनं सुविशालं वै ऊरू करिकरोपमौ ।
रक्ततुङ्गनखौ पादौ धरण्यां सुप्रतिष्ठितौ । [ 80 ]
एवंरूपसमायुक्ता स्वर्गलोकादिहागता ।
इति स्म सर्वेऽमन्यन्त दुःषन्तनगरे जनाः ।
पुनः पुनरवोचंस्ते शाकुन्तलगुणानपि ।
सिंहेक्षणः सिंहदंष्ट्रः सिंहस्कन्धो महाभुजः ।
सिंहोरस्कः सिंहबलः सिंहविक्रान्तगाम्ययम् । [ 85 ]

पृथ्वंसः पृथुवक्षाश्च छत्राकारशिरा महान् ।
पाणिपादतले रक्तो रक्तास्यो दुन्दुभिस्वनः ।
राजलक्षणयुक्तश्च राजश्रीश्चास्य दृश्यते ।
आकारेण च रूपेण शरीरेणापि तेजसा ।
दुःषन्तेन समो ह्येष कस्य पुत्रो भविष्यति । [ 90 ]
एवं ब्रुवन्तस्ते सर्वे प्रशशंसुः सहस्रशः ।
युक्तिवादानवोचन्त सर्वाः प्राणभृतः स्त्रियः ।
बान्धवा इव सस्नेहा अनुजग्मुः शकुन्तलाम् ।
पौराणां तद्वचः श्रुत्वा तूर्णींभूता शकुन्तला ।
वेश्मद्वारं समासाद्य विह्वलन्ती नृपात्मजा । [ 95 ]
चिन्तयामास सहसा कार्यगौरवकारणात् ।
लज्जया च परीताङ्गी राजन्राजसमक्षतः ।
अघृणा किं नु वक्ष्यामि दुःषन्तं मम कारणात् ।
एवमुक्त्वा तु कृपणा चिन्तयन्ती शकुन्तला ।

49

After 1. 68. 51, $Da_1$ ins.:

ब्रह्मा सुरासुरगुरुः सोऽपि शक्तिं पुराकरोत् ।
प्रकृतिं स्वां प्रविश्याशु ब्रह्माण्डमभवत्ततः ।
भर्तव्या रक्षणीया च भार्या हि पतिना सदा ।
धर्मार्थकामसंसिद्धौ भार्या भर्तुः सहायिनी ।
यदा भर्ता च भार्या च परस्परवशानुगौ । [ 5 ]
तदा धर्मार्थकामानां त्रयाणामपि संगमः ।
कथं भार्यामृते धर्मः कथं वा पुरुषः प्रभो ।
प्राप्नोति काममर्थं वाप्यस्यां त्रितयमाहितम् ।
तथैव भर्तारमृते भार्या धर्मादिसाधने ।
न समर्था त्रिवर्गोऽयं दंपत्योः समुपाश्रितः । [ 10 ]
देवतातिथिभृत्यानामतिथीनां च पूजनम् ।
न पुम्भिः शक्यते कर्तुमृते भार्यां कथंचन ।
प्राप्तोऽपि चार्थो मनुजैरानीतोऽपि निजं गृहम् ।
नाशमेति विना भार्यां कुभार्यासंग्रहेण वा ।
कामस्तु नैव तस्यास्ति प्रत्यक्षेणोपदृश्यते । [ 15 ]

50

After 1. 68. 57$^{ab}$, $Da_1$ ins.:

अपुत्रस्य जगच्छून्यमपुत्रस्य गृहेण किम् ।
पुत्रेण लोकाञ्जयति श्रुतिरेषा सनातनी ।
नास्ति पुत्रसमः स्नेहो नास्ति पुत्रसमं सुखम् ।
नास्ति पुत्रसमा प्रीतिः नास्ति पुत्रसमा गतिः ।
अनृतं वक्ति लोकोऽयं चन्दनं किल शीतलम् । [ 5 ]
पुत्रगात्रपरिष्वङ्गश्चन्दनादपि शीतलः ।

51

After 1. 68. 69, S ins.:

पक्षिणः पुण्यवन्तस्ते सहिता धर्मतस्तदा ।
पक्षैस्तैरभिगुप्ता च तस्मादस्मि शकुन्तला ।
ततोऽहमृषिणा दृष्टा काश्यपेन महात्मना ।
जलार्थमग्निहोत्रस्य गतं दृष्ट्वा तु पक्षिणः ।
न्यासभूतामिव मुनेः प्रददुर्मां दयावतः । [ 5 ]
कण्वस्त्वालोक्य मां प्रीतो हसन्तीति हविर्भुजः ।
स मारणिमिवादाय स्वमाश्रममुपागमत् ।
सा वै संभाविता राजन्ननुक्रोशान्महर्षिणा ।
तेनैव स्वसुतेवाहं राजन्वै वरवर्णिनी ।
विश्वामित्रसुता चाहं वर्धिता मुनिना नृप । [ 10 ]
यौवने वर्तमानां च दृष्टवानसि मां नृप ।
आश्रमे पर्णशालायां कुमारीं विजने वने ।
धात्रा प्रचोदितां शून्ये पित्रा विरहितां मिथः ।
वाग्भिस्त्वं सूनृताभिर्मामपत्यार्थमचूचुदः ।
अकार्षीस्त्वाश्रमे वासं धर्मकामार्थनिश्चितम् । [ 15 ]
गान्धर्वेण विवाहेन विधिना पाणिमग्रहीः ।
साहं कुलं च शीलं च सत्यवादित्वमात्मनः ।
स्वधर्मं च पुरस्कृत्य त्वामद्य शरणं गता ।
तस्मान्नार्हसि संश्रुत्य तथेति वितथं वचः ।
स्वधर्मं पृष्ठतः कृत्वा परित्यक्तुमुपस्थिताम् । [ 20 ]
त्वन्नाथां लोकनाथस्त्वं नार्हसि त्वमनागसम् ।

52

After 1. 88. 12, $D_4$ (suppl. fol., *sec. m.*) S ins.:

वैशंपायनः ।

अश्वमेधे महायज्ञे स्वयंभुविहिते पुरा ।
हयस्य यानि चाङ्गानि संनिकृत्य यथाक्रमम् ।
होताध्वर्युरथोद्गाता ब्रह्मणा सह भारत ।
अग्नौ प्रास्यन्ति विधिवत्समस्ताः षोडशर्त्विजः ।
धूमगन्धं च पापिष्ठा ये जिघ्रन्ति नरा भुवि । [ 5 ]

51

(L. 1) $G_4$ धर्मवत्सलाः; M (except $M_8$) धर्मतत्पराः. — (L. 2) $T_1$ $G_{1.4}$ M (except $M_8$) स्तैर् (for तैर्). — $T_2$ $G_{3-6}$ $M_{6-8}$ om. line 6. — (L. 9) M (except $M_8$) दयया (for राजन्वै). $T_1$ $G_{1.3}$ M (except $M_8$) परमर्षिणा (for वर°). — (L. 12) $T_1$ $G_{4-6}$ $M_8$ तदा (for वने). — (L. 15) M (except $M_8$) अवोचः (for अकार्षीः). S (except $G_{3.5.6}$ $M_8$) वाचः (for वासं). $T_1$ $G_3$ M (except $M_8$) °मिश्रिताः; $T_2$ $G_4$ °निश्रिताः; $G_1$ °संमिताः. — (L. 21) $T_1$ $G_{1-4}$ अनापदि; $M_8$ अपोहितुं (for अनागसम्).

निहन्यादपि तं वीरं जातमन्युः सुयोधनः ।
तेन मे व्याकुलं चित्तं हृदयं दह्यतीव च ।
विदुर उवाच ।
मैवं वदस्व कल्याणि शेषसंरक्षणं कुरु ।
प्रत्यादिष्टो हि दुष्टात्मा शेषेऽपि प्रहरेत्तव । [ 60 ]
दीर्घायुपस्तव सुता यथोवाच महामुनिः ।
आगमिष्यति ते पुत्रः प्रीतिं चोत्पादयिष्यति ।
वैशंपायन उवाच ।
एवमुक्त्वा ययौ विद्वान्विदुरः स्वं निवेशनम् ।
कुन्ती चिन्तापरा भूत्वा सहासीना सुतैर्गृहे ।
ततोऽष्टमे तु दिवसे प्रत्यबुध्यत पाण्डवः । [ 65 ]
तस्मिंस्तदा रसे जीर्णे सोऽप्रमेयबलो बली ।
तं दृष्ट्वा प्रतिबुद्धं तु पाण्डवं ते भुजंगमाः ।
सान्त्वयामासुरव्यग्रा वचनं चेदमब्रुवन् ।
यस्ते पीतो महाबाहो रसोऽयं वीर्यसंभृतः ।
तस्मान्नागायुतबलो रणेऽधृष्यो भविष्यसि । [ 70 ]
गच्छाद्य च त्वं स्वगृहं स्नातो दिव्यैरिमैर्जलैः ।
भ्रातरस्ते नु तप्यन्ति त्वां विना कुरुपुंगव ।
ततः स्नातो महाबाहुः शुचिः शुक्लाम्बरस्रजः ।
ततो नागस्य भवने कृतकौतुकमङ्गलः ।
ओषधीभिर्विषघ्नीभिः सुरभीभिर्विशेषतः । [ 75 ]
भुक्तवान्परमान्नं च नागैर्दत्तं महाबलः ।
पूजितो भुजगैर्वीर आशीर्भिश्चाभिनन्दितः ।
दिव्याभरणसंछन्नो नागानामन्त्र्य पाण्डवः ।
उदतिष्ठत्प्रहृष्टात्मा नागलोकादरिंदमः ।
उत्क्षिप्तः स तु नागेन जलाज्जलरुहेक्षणः । [ 80 ]
तस्मिन्नेव वनोद्देशे स्थापितः कुरुनन्दनः ।
ते चान्तर्दधिरे नागाः पाण्डवस्यैव पश्यतः ।
तत उत्थाय कौन्तेयो भीमसेनो महाबलः ।
आजगाम महाबाहुर्मातुरन्तिकमञ्जसा ।
ततोऽभिवाद्य जननीं ज्येष्ठं भ्रातरमेव च । [ 85 ]
कनीयसः समाघ्राय शिरःस्वरिविमर्दनः ।
तैश्चापि संपरिष्वक्तः सह मात्रा नरर्षभैः ।
अन्योन्यगतसौहार्दाद्दिष्ट्या दिष्ट्येति चाब्रुवन् ।
ततस्तत्सर्वमाचष्ट दुर्योधनविचेष्टितम् ।
भ्रातॄणां भीमसेनश्च महाबलपराक्रमः । [ 90 ]
नागलोके च यद्वृत्तं गुणदोषमशेषतः ।
तच्च सर्वमशेषेण कथयामास पाण्डवः ।
ततो युधिष्ठिरो राजा भीममाह वचोऽर्थवत् ।
तूष्णीं भव न ते जल्प्यमिदं कार्यं कथंचन ।
एवमुक्त्वा महाबाहुर्धर्मराजो युधिष्ठिरः । [ 95 ]
भ्रातृभिः सहितः सर्वैरप्रमत्तोऽभवत्तदा ।

73

After adhy. 119, T G ins.:

वैशंपायनः ।
ततस्ते मन्त्रयामासुर्दुर्योधनपुरोगमाः ।
प्राणहा विक्रमी चापि शौर्ये च महति स्थितः ।
स्पर्धते चापि सततमस्मानेको वृकोदरः ।
तं तु सुप्तं पुरोद्याने जलस्थूले क्षिपामहे ।
ततो जलविहारार्थं कारयामास भारत । [ 5 ]
चेलकम्बलवेश्मानि चित्राणि च शुभानि च ।
तत्र संस्कारयामासुर्नानागाराण्यनेकशः ।
उदकक्रीडनार्थानि कारयामास भारत ।
प्रमाणकोट्यामुद्देशे स्थले कृत्वा परिच्छदम् ।
भक्ष्यं भोज्यं च पेयं च चोष्यं लेह्यं तथैव च । [ 10 ]
उपार्जितं नरैस्तत्र तथा सूदकृतं च तत् ।
न्यवेदयन्त पुरुषा धार्तराष्ट्रस्य तत्तथा ।
ततो दुर्योधनस्त्वाह पाण्डवांस्तु सुदुर्मतिः ।
गङ्गां वै मानयामोऽद्य उद्यानवनशोभिताम् ।
सहिता भ्रातरः सर्वे जलक्रीडामवाप्नुमः । [ 15 ]
एवमस्त्विति तं चापि प्रत्युवाच युधिष्ठिरः ।
ते रथैर्नगराकारैर्देशजैश्च हयोत्तमैः ।
निर्ययुर्नगराद्वीराः कुरवः पाण्डवैः सह ।
उद्यानवनमासाद्य संप्रसृज्य च वाहनम् ।
प्राविशंस्तु महावीर्याः सिंहा इव गिरेर्गुहाम् । [ 20 ]
उद्यानं साध पश्यन्ति भ्रातरः सर्व एव ते ।
उपस्थानगृहैः शुद्धैर्वलभीभिश्च शोभितम् ।
गवाक्षकैस्तथा जालैर्जलसंसारकैरपि ।
सूपस्थितं सुधाकारैश्चित्रकारैश्च शिबिरभिः ।
दीर्घिकाभिश्च पुण्याभिस्तथा कारण्डकैरपि । [ 25 ]
जलं तु शुशुभे छन्नं फुल्लैर्जलरुहैस्तथा ।
उपकीर्णा वसुमती तथा पुष्पैर्यथर्तुकैः ।
उपविष्टास्तदा सर्वे पाण्डवाः कुरवस्तथा ।

---

(cf. the ins. in D5 given above). — (L. 61) D5 दीर्घायुषः सुतास्तुभ्यं दत्ता देवैरभिष्टुतैः. — (L. 67) N3 B5 Dn D1.5 प्रतिबुध्यंतं. — (L. 71) Ñ1.2 B3.6 Da D4.5 °च स्वगृहं स्नातो दिव्यैरेभिः शुभैर्जलैः. — After line 94, K4 Ñ3 B1.5 D (except D5) ins.:

इतः प्रभृति कौन्तेया रक्षतान्योन्यमादृताः ।

73

The first few lines of this passage are found in D5 also. — (L. 2) G1.4.6 प्राणवान्. For lines 5–6, cf. 1. 119. 29; for 7–8, cf. 1310*; for 9, cf. 30ab. Lines 10–40 are an almost verbatim repetition of lines 1–31 of passage No. 71 above. — (L. 14) T1 G1-3

उपपन्नान्बहून्कामांस्तेऽथ भुक्त्वा ततस्ततः ।
अथोद्यानवने तस्मिंस्तथा क्रीडागताश्च ते । [ 30 ]
परस्परस्य वक्त्रेषु ददुर्भक्ष्यांस्ततस्ततः ।
ततो दुर्योधनः पापस्तद्भक्ष्ये कालकूटकम् ।
विषं प्रक्षेपयामास भीमसेनजिघांसया ।
स्वयमुत्थाय चैवाथ हृदयेन क्षुरोपमः ।
सत्कृत्य भ्रातृवत्तत्र वाचा चामृतकल्पया । [ 35 ]
प्राक्षिपद्वै स्वयं भक्ष्यं वक्त्रे भीमस्य पापकृत् ।
प्रभक्षितं च भीमेन ह्यस्य दोषमजानता ।
ततो दुर्योधनस्तत्र हृदयेन हसन्निव ।
कृतकृत्यमिवात्मानं मेने स पुरुषाधमः ।
ततस्ते सहिताः सर्वे जलक्रीडामकुर्वत । [ 40 ]
दिवसान्ते परिश्रान्ता विहृत्य कुरुनन्दनाः ।
विहारायतनेष्वेव वीरा वासमरोचयन् ।
भीमस्तु बलवान्भुक्त्वा व्यायामाभ्यधिकं जले ।
वाहयित्वा कुमारांस्ताञ्जले क्रीडां महाबलः ।
प्रमाणकोट्यां वासार्थी सुष्वापारुह्य तत्स्थलम् । [ 45 ]
स हि तत्स्थलमासाद्य श्रान्तश्चाप्सु विशेषतः ।
श्रमेण च परीताङ्गः सुष्वाप मृतकल्पवत् ।
ततो बद्ध्वा लतापाशैर्भीमं दुर्योधनः स्वयम् ।
शूलान्यप्सु निखान्याशु स्थलाज्जलमपातयत् ।
सशेषत्वाच्च संप्राप्तो जले शूलानि पाण्डवः । [ 50 ]
पपात यत्र तत्रास्य शूलं नासीद्यदृच्छया ।
स निःसंज्ञो जलस्यान्तमवाप्यैव पाण्डवोऽविशत् ।
आक्रम्य नागभवने तथा नागकुमारकान् ।
ततः समेत्य बहुभिस्तदा नागैर्महाविषैः ।
दश्यते पाण्डवस्तत्र विषदिग्धो महाविषैः । [ 55 ]
ततोऽस्य दश्यमानस्य तद्विषं कालकूटकम् ।
हतं सर्पविषेणाशु स्थावरं जङ्गमेन तु ।
ततः प्रबुद्धः कौन्तेयः स तत्संछिद्य बन्धनम् ।
पोथयामास तान्सर्वान्कांश्चित्प्राणैर्व्ययोजयत् ।

ते हन्यमानाः पार्थेन सर्पा वासुकिमभ्ययुः । [ 60 ]
ऊचुश्च सर्पराजानं वासुकिं वासवोपमम् ।
अयं नरो वै नागेन्द्र ह्यप्सु बद्ध्वा प्रवेशितः ।
यथा च नो मतिर्वीर विषपीतो भविष्यति ।
विनिविष्टोऽन्तरं प्राप्तः स च दष्टो ह्यनेकशः ।
ससंज्ञश्चापि संवृत्तश्छित्त्वा बन्धनमाशु नः । [ 65 ]
पोथयानो महाबाहुस्तं वै त्वं ज्ञातुमर्हसि ।
ततो वासुकिरभ्येत्य नागैरनुगतस्तदा ।
पश्यति स्म महानागो भीमं भीमपराक्रमम् ।
आर्यकेण च दृष्टः सन्पृथायाश्चार्यकेण तु ।
ततो दृष्टश्च तेनापि परिष्वक्तश्च पाण्डवः । [ 70 ]
सुप्रीतश्चाभवत्तस्य वासुकिः सुमहायशाः ।
अब्रवीत्तं च नागेन्द्रः किमस्य क्रियतामिति ।
प्रियं धनौघं रत्नानि यावदस्य प्रदीयताम् ।
एवमुक्तस्तदा नागो वासुकिं प्रत्यभाषत ।
यदि नागेन्द्र प्रीतोऽसि किमस्य धनसंचयैः । [ 75 ]
रसं पिबेत्कुमारोऽयं त्वयि प्रीते महाबलः ।
बलं नागसहस्रस्य कुण्डे चास्मिन्प्रतिष्ठितम् ।
यावत्पिबति बालोऽयं तावदस्मै प्रदीयताम् ।
एवमस्त्विति तं नागं वासुकिः प्रत्यभाषत ।
ततो भीमस्तदा नागैः कृतस्वस्त्ययनः शुचिः । [ 80 ]
प्राङ्मुखश्चोपविष्टः सन्रसं पिबति पाण्डवः ।
एकोच्छ्वासात्तदा कुण्डं पिबति स्म महाबलः ।
एवमष्टौ तु कुण्डानि सोऽपिबत्पाण्डुनन्दनः ।
ततस्तु शयने दिव्ये नागदत्ते महाभुजः ।
शेते स च तदा भीमो दिवसान्यष्ट चैव तु । [ 85 ]
दुर्योधनोऽपि पापात्मा भीममाशीविषह्रदे ।
प्रक्षिप्य कृतकृत्यं स आत्मानं मन्यते तदा ।
प्रभातायां रजन्यां तु वनात्प्रविविशुः पुरम् ।
वदन्तो भीमसेनस्तु यातो ह्यग्रत एव सः ।
युधिष्ठिरस्तु धर्मात्मा चिन्तयन्पापमात्मनि । [ 90 ]

---

गंगामिमां न(T1 च; G1 प्र-)यामोच. — After line 16, G1 ins.:

जानन्नप्यनुमेने तद्भेदबुद्धिभिया तदा ।

— After line 31, G1 ins.:

नानाविधानि भक्ष्याणि भोज्यापूपानि मोदकान् ।
खेलन्तः प्रहसन्तश्च विवृतेषु कुमारकाः ।

— For line 34, G1 reads:

स* * क्षेपयामास स्वयमुत्थाय मित्रवत् ।
बहिर्मधुरया वाचा हृदयेन क्षुरोपमः ।

— For lines 41–49, cf. 1. 119. 31–34. — After line 48, G1 ins.:

स्नानयित्वाप्सु शूलानि प्रदेशाभ्यन्तराणि च ।

— (L. 49) G1 लतापाशैर्दृढं बद्ध्वा. — For lines 52–57, cf. 1312*; for lines 58–59, cf. 1. 119. 38[ab]; for 60–85, cf. lines 1–26 of passage No. 72 above. — (L. 64) T1 G1 विषाविष्टोंतरं प्रा°; G6 निश्चेष्टोसानन्तुप्रा°. G1.3 दष्टोप्यने°; G5.6 दष्टोन्वबुध्यत. — For lines 69–71, G1 subst.:

अथ वासुकिना भीमो दृष्टः स्पृष्टः सुहृत्तमः ।
परिष्वक्तश्च सस्नेहं भीमः प्रीतोऽभवत्तदा ।
वासुकिश्चापि सुप्रीतो भीममाहामृतं वचः ।

— (L. 88) T1 G4.5 प्रविवेश पुरं ततः. — For lines 89–93, cf. lines 30, 33–36 of passage No. 72 above. — After line 89, G1 ins.:

इति स पृच्छतां नृणां कुन्त्याश्च विदुरस्य च ।

स्वेनानुमानेन परं तदा तं सानुपश्यति ।
उपगम्य ततः पार्था मातरं मातृवत्सलाः ।
अभिवाद्याब्रुवंस्ते वै अम्ब भीम इहागतः ।
नेति साह तदा कुन्ती ततस्ते व्यथिताभवन् ।
द्रुतं गत्वा पुरोद्यानं विचिन्वन्ति स्म पाण्डवाः । [ 95 ]
भीम भीमेति ते वाचं नित्यमुच्चैरुदीरयन् ।
विचिन्वन्तोऽथ ते सर्वे न स्म पश्यन्ति भ्रातरम् ।
आगताः स्वगृहं भूय इदमूचुः पृथां तदा ।
न दृश्यते महाबाहुरम्ब भीमो वने चितः ।
विचितानि च सर्वाणि उद्यानानि नदीस्तथा । [ 100 ]
ततो विदुरमानाय्य कुन्ती सा स्वनिवेशनम् ।
उवाच क्षत्तर्बलवान्भीमसेनो न दृश्यते ।
उद्यानान्निर्गताः सर्वे भ्रातरो भ्रातृभिः सह ।
तत्र ह्येको महाबाहुर्भीमो नाभ्येति मामिह ।
न च प्रीणयते चक्षुः सदा दुर्योधनस्य तु । [ 105 ]
ततः प्रसुप्तं मन्येऽहं पापेन निहतं सुतम् ।

विदुरः ।

मा मैवं वद कल्याणि शेषसंरक्षणं कुरु ।
प्रत्यादिष्टो हि पापात्मा शेषेषु प्रहरेत ह ।
दीर्घायुषः सुतास्तुभ्यं तथा ह्यृषिरभाषत ।
आगमिष्यति ते पुत्रः प्रीतिं ते वर्धयिष्यति । [ 110 ]

वैशंपायनः ।

एवमुक्ता तदा कुन्ती निःश्वसन्ती मुहुर्मुहुः ।
शय्यापरा महाभागा पुत्रैः परिवृता तदा ।
ततोऽष्टमेऽथ दिवसे प्रत्यबुध्यत पाण्डवः ।
तस्मिंस्तदा रसे जीर्णे ह्यप्रमेयबलो बली ।
ओषधीभिर्विषघ्नीभिः सुरभीभिर्विभूषितः । [ 115 ]
भुक्त्वा तु परमान्नं च नागैर्दत्तं महाभुजः ।
उत्क्षिप्य च तदा नागैर्जलाज्जलरुहेक्षणः ।
तस्मिन्नेव वनोद्देशे स्थापितः पाण्डुनन्दनः ।
अन्तर्दधुश्च ते नागाः पाण्डवस्यैव पश्यतः ।
तत उत्थाय भीमस्तु आजगाम स्वकं गृहम् । [ 120 ]
अभिवाद्य परिष्वक्तः समाघ्रातश्च मूर्धनि ।
प्रणम्य धर्मपुत्राय सस्वजे फल्गुनं ततः ।
अभिवादितश्च तैर्वीरैः सस्वजे च यमावपि ।
तच्च सर्वं यथावृत्तमाख्याति स्म वृकोदरः ।
यदा त्ववगमंस्ते वै पाण्डवास्तस्य कर्म तत् । [ 125 ]
न त्वेव बहुलं चक्रुः प्रयता मन्त्ररक्षणे ।
धर्मात्मा विदुरस्तेषां प्रददौ मतिमान्मतिम् ।
दुर्योधनोऽपि तं दृष्ट्वा पाण्डवं पुनरागतम् ।
निःश्वसंश्चिन्तयंश्चैव अहन्यहनि तप्यते ।
एवं दुर्योधनः पापः शकुनिश्चापि सौबलः । [ 130 ]
अनेकैरभ्युपायैस्ताञ्जिघांसन्ति स्म पाण्डवान् ।
पाण्डवाश्चापि तत्सर्वं प्रत्यजानन्नरिंदमाः ।
उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः ।
अधिजग्मुश्च कुरवो धनुर्वेदं कृपात्तु ते ।

Colophon.

☞ This additional adhy. is nothing more than a recast of our adhy. 119, incorporating the additional matter contained in passages No. 71–72 above, which latter are Northern interpolations. It is worth nothing that this (addl.) adhy. ends (lines 130–133) with a *repetition* of the last two stanzas of adhy. 119, a confirmation (if any were needed) of the fact that this adhy. is an interpolation in T G MSS. The last line (134) of the passage, which is otherwise found only in Dn $D_1$ (cf. 1323*), was added only to link up somehow with the next adhy., which, in the constituted text, seems to begin rather abruptly. — Cf. also footnote under 1. 119. 29.

## 74

After 1. 121. 21, $B_1$ ins.:

प्रयच्छ भगवन्मह्यं वरमेतन्मया वृतम् ।
कृतार्थं च भविष्यामि वरं लब्ध्वा द्विजोत्तम ।

— (L. 91) $T_1$ $G_4$ नायांतं स स पश्यति; $G_7$ तेषामेवासमंजसं.
— (L. 100) $G_1$ उद्यानानि विचित्राणि नदीनि च सरांसि च.
— After line 100, $G_1$ ins.:

विचिन्वाना न पश्यामो भीममम्ब कुतो गतः ।

— For lines 101–105, cf. lines 51–52 of passage No. 72 above. — (L. 105) $G_1$ न च मे प्रीयते चक्षुर्न मनो मे प्रसीदति. — After line 105, $G_1$ ins.:

दुर्योधनो न हि स्वच्छस्तस्माच्छङ्कित मे मनः ।

— For lines 107–114, cf. lines 59–66 of passage No. 72 above. — After line 112, $G_1$ ins.:

विचिन्वन्तो वने भीमं पाण्डवाः प्रत्यहं दिवा ।
दुःखाकारं गोपयन्तः दुःखिताः [शेरते] निशि ।

— For lines 115–124, cf. lines 74–75, 80–89 of passage No. 72 above. — (L. 123) $G_1$ तैः सर्वैरर्जुनं परिषस्वजे. — (L. 124) $G_1$ यमावपि परिष्वज्य यथावृत्तं न्यवेदयत्.
— After line 124, $G_1$ (which om. line 125) ins.:

तन्नागलोकवृत्तान्तं प्रत्यागमनमेव च ।
प्रजानंस्ते यदा कर्म दुर्योधनकृतं नृप ।

— (L. 126) $T_1$ प्रयत्नं तस्य रक्षणे; $T_2$ $G_6$ प्रयतंतास्य रक्षणे; $G_1$ प्रचक्रुस्ते स्वर°; $G_{2.3}$ प्रयतुस्तस्य र°; $G_5$ प्रयतंतश्च र°. — (L. 130) $T_1$ $G_{1.2}$ कर्णः (for पापः).

राम उवाच ।
प्रतिगृह्णीष्व विप्रेन्द्र द्रोण मत्तो यदीच्छसि ।
वरं तव ददाम्यद्य यदुक्तं ते द्विजोत्तम ।
गृहाणास्त्राणि दिव्यानि धनुर्वेदं च मामकम् । [ 5 ]
सपुत्रस्य ददाम्येतत्तव द्रोण महद्वरम् ।
कृतार्थो गच्छ विप्रेन्द्र गच्छ चैव यथागतम् ।
कृतास्त्रश्चैव शूरश्च सर्वशास्त्रविशारदः ।
अश्वत्थामेति विख्यातो भविष्यति महारथः ।

75

After 1. 122. 31$^{ab}$, all MSS. except Ś1 Ko–3 ins.:

तच्च वाक्यमहं नित्यं मनसाधारयं तदा ।
सोऽहं पितृनियोगेन पुत्रलोभाद्यशस्विनीम् ।
नातिकेशीं महाप्रज्ञामुपयेमे महाव्रताम् ।
अग्निहोत्रे च सत्ये च दमे च सततं रताम् ।
अलभद्गौतमी पुत्रमश्वत्थामानमौरसम् । [ 5 ]
भीमविक्रमकर्माणमादित्यसमतेजसम् ।
पुत्रेण तेन प्रीतोऽहं भरद्वाजो यथा मया ।
गोक्षीरं पिबतो दृष्ट्वा धनिनस्तत्र पुत्रकान् ।
अश्वत्थामारुदद्बालस्तन्मे संदेहयद्दिशः ।
न स्नातकोऽवसीदेत वर्तमानः स्वकर्मसु । [ 10 ]
इति संचिन्त्य मनसा तं देशं बहुशो भ्रमन् ।
विशुद्धमिच्छन्गाङ्गेय धर्मोपेतं प्रतिग्रहम् ।
अन्तादन्तं परिक्रम्य नाध्यगच्छं पयस्विनीम् ।
अथ पिष्टोदकेनैनं लोभयन्ति कुमारकाः ।
पीत्वा पिष्टरसं बालः क्षीरं पीतं मयापि च । [ 15 ]
ननर्तोत्थाय कौरव्य हृष्टो बाल्याद्विमोहितः ।
तं दृष्ट्वा नृत्यमानं तु बालैः परिवृतं सुतम् ।
हास्यतामुपसंप्राप्तं कश्मलं तत्र मेऽभवत् ।
द्रोणं धिगस्त्वधनिनं यो धनं नाधिगच्छति ।
पिष्टोदकं सुतो यस्य पीत्वा क्षीरस्य तृष्णया । [ 20 ]
नृत्यति स्म मुदाविष्टः क्षीरं पीतं मयाप्युत ।
इति संभाषतां वाचं श्रुत्वा मे बुद्धिरच्यवत् ।
आत्मानं चात्मना गर्हन्मनसेदं व्यचिन्तयम् ।
अपि चाहं पुरा विप्रैर्वर्जितो गर्हितो भृशम् ।
परोपसेवां पापिष्ठां न च कुर्यां धनेप्सया । [ 25 ]
इति मत्वा प्रियं पुत्रं भीष्मादाय ततो ह्यहम् ।
पूर्वस्नेहानुरागित्वात्सदारः सौमकिं गतः ।

76

K4 N B D T2 G1.4.5 ins. after 1. 122. 47: G2, after 41$^{ab}$:

अभ्ययात्स ततो द्रोणं धनुर्वेदचिकीर्षया ।
शिक्षाभुजबलोद्योगैस्तेषु सर्वेषु पाण्डवः ।
अस्त्रविद्यानुरागाच्च विशिष्टोऽभवदर्जुनः ।
तुल्येष्वस्त्रप्रयोगेषु लाघवे सौष्ठवेषु च ।
सर्वेषामेव शिष्याणां बभूवाभ्यधिकोऽर्जुनः । [ 5 ]
ऐन्द्रिमप्रतिमं द्रोण उपदेशेष्वमन्यत ।

---

75

(L. 1) K4 अहं तु वाक्यं नित्यं च सरन्नेवाभवं तदा; S उक्त(T2 G4.5 तत्तु)वाक्यमहं ज्ञात्वा (T2 G4.5 हित्वा) प्रहृष्टेनांतरात्मना. — (L. 2)=(var.) 1. 121. 11$^{cd}$. S पितृनियुक्तत्वात्. — (L. 3) D6 T G शारद्वतीं; M नातिवेतीं. T1 G1.6 M महाप्राज्ञ. K4 S समाहितः (G1 विधानतः) (for महाव्रताम्). — Lines 4–5=(var.) 1. 121. 12. — (L. 4) K4 N1.2 B6 Dn D1 सत्रे; S धर्मे (for सत्ये). — (L. 5) S आत्मजं (M5 अच्युतं) (for औरसम्). — (L. 8) K4 धनिकान्वीक्ष्य पुत्र°; S धनिनां सुकुमारकान्. — (L. 9) S °रुदत्तात (T2 G4.5 °दन्दृष्ट्वा; G1 °दद्राजन्; G3 M5 °दंस्तात) दिशो दश विमोहयन्. — After line 9, S (except T2 G4.5) read lines 14–15. — (L. 10) S स्वकर्मणि. — (L. 11) S आगच्छामीति जानंस्तानहं देशान् बहूनपि (T2 G2.4.5 भ्रमन्नपि). — S (which om. line 12) ins. after line 11: K4, after line 12:

अविलोपेन धर्मस्य सततं धर्मसंहितम् ।

— (L. 13) S अयाचित्वा परिक्रामन्नाध्यगच्छं धनं क्वचित्. — (L. 15) S नृत्यति प्रहसन्स स (T2 G4.5 स स नृत्यति पीत्वा तु) पीतक्षीरोहमित्यपि. — S om. lines 16–17. — (L. 18) S तं दृष्ट्वा कश्मलं घोरं तत्र मामन्व(T2 G4.5 M5–8 °मुप)पद्यत. — After line 19, S (which om. lines 20–23) ins.:

क्षीररसज्ञः क्षीरमिति पीत्वा पिष्टं प्रनृत्यति ।
अश्वत्थामा तु धिङ् मां तु यः पयो नाधिगच्छति ।

— (L. 24) S (except T2 G1.4) न (for च). M इरेद् (for पुरा). Ñ B1.5 Dn D1.3 वसे (for भृशम्). S वर्जितां गर्हितां भृशं. — (L. 25) K4 S पापिष्ठामाचरेयं धनाशया. — (L. 26) S (except G1.2) प्रियं पूर्वं वक्तारं सनृतां गिरं. — (L. 27) K4 पूर्वसख्यनुसंबद्धः; S पूर्वसंगतसंसिद्धः (°द्धं or °द्धिं). S सोमकं.

76

(L. 1) Om. in T1 G1.5. G2.4 अभिजग्मुस्तदा द्रोणं. — After line 1, D5 ins. a colophon (*adhy. no.* 33). — (L. 2) T1 G1.2.4.5 बुध्या भुजबलोद्योगे. — (L. 4) T1 G1.2.4.5 लाघवात्सौष्ठवेन च. — (L. 5) Ñ1.3 शिक्षार्थमेव; T1 G1.2.4.5 समेतानां तु (for सर्वे°). — (L. 6) T2 G1.2.4.5

एवं सर्वकुमाराणामिष्वस्त्रं प्रत्यपादयत् ।
कमण्डलुं च सर्वेषां प्रायच्छच्चिरकारणात् ।
पुत्राय च ददौ कुम्भमविलम्बनकारणात् ।
यावत्ते नोपगच्छन्ति तावदस्मै परां क्रियाम् ।   [ 10 ]
द्रोण आचष्ट पुत्राय तत्कर्म जिष्णुरौहत ।
ततः स वारुणास्त्रेण पूरयित्वा कमण्डलुम् ।
सममाचार्यपुत्रेण गुरुमभ्येति फाल्गुनः ।
आचार्यपुत्रात्तस्मात्तु विशेषोपचये पृथक् ।
न व्यहीयत मेधावी पार्थोऽस्त्रविदुषां वरः ।   [ 15 ]

77

$T_3$ $G_6$ ins. after 1. 123. $6^{ab}$: $G_{3,4}$, after 6: $G_1$, after 7:

अस्त्रवाप्नान्त्रियेपास्त्रं यथा त्वं नाद्य कश्चन ।
धनुर्ग्रहेऽपि मे शिष्यो भविष्यसि विशेषवान् ।
एतद्धृदि तदा जिष्णोर्ववृधे द्रोणशासनम् ।
परमं चाकरोद्यत्नं धनुर्वेदे परंतपः ।
अर्जुनो नरशार्दूलः सर्वशस्त्रभृतां वरः ।   [ 5 ]
सर्वक्रियाभ्यनुज्ञानात्तथा शिष्यान्समानयत् ।
दुर्योधनं चित्रसेनं दुःशासनविविंशती ।
अर्जुनं च समानीय अश्वत्थामानमेव च ।
शिशुकं मृण्मयं कृत्वा द्रोणो गङ्गाजले ततः ।
शिष्याणां पश्यतां चैव क्षिपति स्म महाभुजः ।   [ 10 ]
चक्षुषी वाससा चैव बद्ध्वा प्रादाच्छरासनम् ।
शिशुकं विध्यतेमं वै जलस्थं बद्धचक्षुषः ।
तत्क्षणेनैव बीभत्सुरावापैर्दशभिर्वशी ।
पञ्चकैरनुविव्याध मग्नं शिशुकमम्भसि ।
तस्य दृष्ट्वा क्रियाः सर्वा द्रोणोऽमन्यत पाण्डवम् ।   [ 15 ]
विशिष्टं सर्वशिष्येभ्यः प्रीतिमांश्चाभवत्तदा ।
अथाब्रवीन्महात्मानं भारद्वाजो महारथम् ।
अस्त्रं विशिष्टमन्येषु यन्न विद्येत पाण्डव ।
ससंहारप्रयोगं च त्वमधीष्व व्रतं चर ।
अस्त्रं ब्रह्मशिरो नाम दहेद्यत्पृथिवीमपि ।   [ 20 ]
यावन्मन्त्रप्रयोगोऽपि विनियोगे भविष्यति ।
तावानेव तु संहारे कर्तव्य इति चान्ततः ।
न मानुषे प्रयोक्तव्यं ब्रह्मणोऽस्त्रं कथंचन ।
बाधते मानुषाञ्शत्रून्यदा वामानुषः क्वचित् ।
तस्मादेतत्प्रयोक्तव्यं ब्राह्ममस्त्रं सनातनम् ।   [ 25 ]
तथेत्येव च बीभत्सुरुवाच च कृताञ्जलिः ।
चकार च तथा सर्वं यथोक्तं मनुजर्षभ ।
अवाप्तास्त्रं तु बीभत्सुमनुज्ञाय महामतिः ।
उवाच परमप्रीतो मत्समोऽसीति पाण्डवम् ।

78

$Da_1$ $D_5$ S ins. after 1. 128. $4^{ab}$: $K_4$ Dn $D_4$, after 4: $D_3$ (suppl. fol. *sec. m.*), after 1. 127. $11^{ab}$:

दुर्योधनश्च कर्णश्च युयुत्सुश्च महाबलः ।
दुःशासनो विकर्णश्च जलसंधः सुलोचनः ।
एते चान्ये च बहवः कुमारा बहुविक्रमाः ।
अहं पूर्वमहं पूर्वमित्येवं क्षत्रियर्षभाः ।
ततो रथपदात्योघाः कुञ्जराः सादिभिः सह ।   [ 5 ]
प्रविश्य नगरं सर्वे राजमार्गमुपाययुः ।
तस्मिन्काले तु पाञ्चालः श्रुत्वा दृष्ट्वा महद्बलम् ।
भ्रातृभिः सहितो राजा त्वरया निर्ययौ गृहात् ।
ततस्तु कृतसंनाहा यज्ञसेनसहोदराः ।
शरवर्षाणि मुञ्चन्तः प्रणेदुः सर्वतोदिशम् ।   [ 10 ]
ततो रथेन शुभ्रेण समासाद्य तु कौरवान् ।
यज्ञसेनः शरान्घोरान्ववर्ष युधि दुर्जयः ।

---

येद्रं तु विषमं द्रोण उपदेशेभ्यमापत ($G_1$ °णो धनुर्वेदचिकीर्षया). — (L. 7) $T_2$ $G_{1,2,4,5}$ एकः सर्वं॰ विव्याध शरमुत्तमम्. — (L. 8) $T_2$ $G_{1,2,4,5}$ प्रायच्छदुदकानये. — (L. 10) $T_2$ $G_{1,2,4,5}$ यावन्नाभ्यधि($G_{2,4}$ यावत्तेनाभि)गच्छंति तावदस्य परा गतिः. — (L. 11) $D_2$ कर्म तज्जिष्णुना श्रुतं; $D_6$ जिष्णुस्तत्कर्म चाप्तवान्; $T_2$ $G_{1,2,4,5}$ तज्जज्ञे शंकयान्वितं. — (L. 12) $T_2$ $G_{1,2,4,5}$ पर्जन्येनैव सोस्त्रेण. — (L. 13) $T_2$ $G_{1,2,4,5}$ गुरुमायात्स फल्गुनः. — (L. 15) $K_4$ नावसीदति; $D_{4,5}$ न प्रहीयत; $T_2$ $G_{1,2,4,5}$ न चाहीयत. Dn पार्थोऽप्यस्त्रविदां वरः; $T_2$ $G_{1,2,4,5}$ पार्थः शस्त्रभृतां वरः.

77

$G_2$ om. lines 1, 17–29. — After line 23, $G_6$ reads 1. 123. 76. — After the above passage, $G_1$ *repeats* 1. 123. $7^{ab}$ with v. l. ततश्चित्रान्धनुर्मार्गान् (for $7^a$); the repetition is followed by 1386*.

78

☞ $Da_2$ was erroneously included in, and should be deleted from, the list of MSS. containing this passage, as given in the footnotes on p. 571.

(L. 5) $Da_1$ Dn $D_{2,4}$ वररथारूढाः; $D_6$ $T_1$ $G_{1-3,6}$ रथवरारूढाः. $Da_1$ Dn $D_{2,4,5}$ $T_1$ $G_{1,2,6}$ कुमाराः (for कुञ्जराः). — (L. 8) Some MSS. राजन् (for राजा). — (L. 9) $Da_1$ Dn $D_{2,4}$ °संनाहो, and यज्ञसेनो महीधरः. — (L. 10) $Da_1$ Dn $D_{2,4}$ °दुः सर्वे एव ते. — (L. 14) $Da_1$

पूर्वमेव तु संमन्त्र्य पार्थो द्रोणमथाब्रवीत् ।
दर्पोत्सेकः कुमाराणामवार्यो द्विजसत्तम ।
एषां पराक्रमस्यान्ते वयं कुर्याम साहसम् । [ 15 ]
कुमारैरशक्यः पाञ्चालो ग्रहीतुं रणमूर्धनि ।
एवमुक्त्वा तु कौन्तेयो भ्रातृभिः सहितोऽनघः ।
अर्धक्रोशे तु नगरादतिष्ठद्बहिरेव सः ।
द्रुपदः कौरवान्दृष्ट्वा प्राधावत समन्ततः ।
शरजालेन महता मोहयन्कौरवीं चमूम् । [ 20 ]
तमुद्यन्तं रथेनैकमाशुकारिणमाहवे ।
अनेकमिव संत्रासान्मेनिरे सर्वकौरवाः ।
द्रुपदस्य शरा घोरा विचेरुः सर्वतोदिशम् ।
ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्च सहस्रशः ।
प्रावाद्यन्त महाराज पाञ्चालानां निवेशने । [ 25 ]
सिंहनादश्च संजज्ञे पाञ्चालानां महात्मनाम् ।
धनुर्ज्यातलशब्दश्च संस्पृशन्गगनं महत् ।
दुःशासनो विकर्णश्च सुबाहुर्दीर्घलोचनः ।
दुर्योधनश्च संक्रुद्धः शरवर्षैरवाकिरन् ।
सोऽतिविद्धो महेष्वासः पार्षतो युधि दुर्जयः । [ 30 ]
व्यधमत्तान्यनीकानि तत्क्षणादेव भारत ।
दुर्योधनं विकर्णं च कर्णं चापि महाबलम् ।
नानानृपसुतान्वीरान्सैन्यानि विविधानि च ।
अलातचक्रवत्सर्वांश्चरन्बाणैरतर्पयत् ।
ततस्तु नागराः सर्वे मुसलैर्यष्टिपाणयः । [ 35 ]
अभ्यवर्षन्त कौरव्यान्वर्षमाणा घना इव ।
सबालवृद्धाः काम्पिल्याः कौरवानभ्ययुस्तदा ।
श्रुत्वा तु तुमुलं युद्धं नागराणां च भारत ।
द्रवन्ति स्म नदन्ति स्म क्रोशन्तः पाण्डवान्प्रति ।
पाण्डवास्तु स्वनं श्रुत्वा आर्तानां रोमहर्षणम् । [ 40 ]
अभिवाद्य ततो द्रोणं रथानारुह्य पाण्डवाः ।
युधिष्ठिरं निवार्याशु मा युद्धमिति पाण्डव ।
माद्रेयौ चक्ररक्षौ तु फल्गुनस्तु तदाकरोत् ।
सेनाग्रगो भीमसेनो गदापाणिर्नदन्स्थितः ।
तदा शङ्खध्वनिं कृत्वा भ्रातृभिः सहितोऽनघः । [ 45 ]
आयाजवेन कौन्तेयो रथघोषेण नादयन् ।
पाञ्चालानां ततः सेनामुद्धूतार्णवनिःस्वनाम् ।
भीमसेनो महाबाहुर्दण्डपाणिरिवान्तकः ।
प्रविवेश महासेनां सागरं मकरो यथा ।
स्वयमभ्यद्रवद्भीमो नागानीकं गदाधरः । [ 50 ]
सुयुद्धकुशलः पार्थो बाहुवीर्येण चातुलः ।
अहनत्कुञ्जरानीकं गदया कालरूपधृक् ।
ते गजा गिरिसंकाशाः क्षरन्तो रुधिरं बहु ।
भीमसेनस्य गदया भिन्नमस्तकपिण्डकाः ।
पतन्ति द्विरदा भूमौ वज्रघातादिवाचलाः । [ 55 ]
गजानश्वान्रथांश्चैव पातयामास पाण्डवः ।
पदातीन्नागरांश्चैव नावधीदर्जुनाग्रजः ।
गोपाल इव दण्डेन यथा पशुगणान्वने ।

---

Dn $D_{2.4}$ दर्पोद्रेकात्. $K_4$ $T_1$ आचार्य द्विज°; $Da_1$ Dn $D_{2.4}$ $M_8$ आचार्य °त्तमं; $G_1$ अनिवार्यो द्विजोत्तम. — (L. 16) Hypermetric! $Da_1$ Dn $D_{2.4.5}$ $T_1$ $G_{1-3.6}$ एतैरशक्यः पां°; $T_2$ $G_{4.5}$ एतैरशक्यो यज्ञसेनो. — (L. 19) $Da_1$ Dn $D_{4.5}$ $G_1$ $M_8$ प्राधा°; $T_2$ $G_{2.4.5}$ संप्रधावत्. — (L. 22) $Da_1$ Dn $D_{2.4.5}$ तत्र (for सर्व-). — (L. 26) $T_2$ $G_{2.4.5}$ शुश्रुवुः सिंहनादांश्च पांडवाः सुमहाबलाः. — (L. 27) $Da_1$ Dn $D_{2.4}$ संस्पृश्य गगनं महान्. — (L. 28–29) $Da_1$ Dn $D_{2.4}$ transp. दुर्योधनः and दुःशासनः. Some MSS. संक्रुद्धाः. — (L. 34) MSS. अवाकिरत्, अपातयत्, अताडयत्, अवारयत् (for अतर्पयत्). $K_4$ चचार च ववर्ष च; $T_2$ $G_{2.4.5}$ शरवर्षै($G_{2.4}$ °पातै)रवाकिरत्. — After line 34, $T_2$ G (except $G_3$) ins.:

दुःशासनं द्वादशभिर्विकर्णं विंशकैः शरैः ।
शकुनिं विशिखैस्तीक्ष्णैर्दशभिर्मर्मभेदिभिः ।
कर्णदुर्योधनौ चोभौ शरैः सर्वाङ्गसंधिषु ।
अष्टाविंशतिभिः सर्वैः पृथक्पृथगरिंदमः ।
सुबाहुं पञ्चभिर्विद्ध्वा तथान्यान्विविधैः शरैः ।
विव्याध सहसा भूयो ननाद बलवत्तरम् ।
विनद्य कोपात्पाञ्चालः सर्वशस्त्रभृतां वरः ।
धनूंषि रथयन्त्रं च हयांश्छिन्नध्वजानपि ।
चकर्त सर्वपाञ्चालाः प्रणेदुः सिंहसंघवत् ।

— (L. 35) $Da_1$ Dn $D_{2.4.5}$ $T_1$ $G_{1.3.6}$ मुसलैर्यष्टिभिस्तदा. — (L. 36) $K_4$ $M_{6-8}$ अभ्यद्रवंत. $M_{3.5}$ अभ्यद्रवन्त संक्रुद्धा वर्षमाणा इवाम्बुदाः. — (L. 37) $K_4$ $D_5$ पांचाल्याः; $Da_1$ Dn $D_{2.4}$ ते पौराः (for काम्पिल्याः). — (L. 38) $Da_1$ Dn $D_{2.4}$ कौरवानेव; $D_5$ $T_1$ $G_{2.3.6}$ कौरवाणां च (for नागराणां च). — (L. 39) $K_4$m न तिष्ठंति; $T_1$ $G_1$ रुदंति स्म (for नदन्ति स्म). — After line 39, $D_4$ (marg. *sec. m.*) $T_2$ G (except $G_3$) ins.:

पाञ्चालशरभिन्नाङ्गो भयमासाद्य वै तदा ।
कर्णो रथादवप्लुत्य पलायनपरोऽभवत् ।

$G_{2.4.5}$ cont.:

न पाण्डुपुत्राश्च द्रोणमेक एव वनं ययौ ।

— (L. 41) $Da_1$ Dn $D_{2.4}$ रथानारुरुहुस्तदा. — (L. 42) $Da_1$ Dn $D_{2.4.5}$ मा युद्ध्यस्वेति पांडवं; $T_1$ मा युध्येति च पांडवं. — (L. 44) $Da_1$ Dn $D_{2.4.5}$ $G_{1.3.6}$ सदाभूद्गदया सह; $T_1$ तदा तस्मिन्रणोत्सवे; $T_2$ $G_{2.4.5}$ गदाचापधरोरिहा ($T_2$ °रो रणे); $M_8$ तदा दण्डसहायवान्. — (L. 45) $Da_1$ Dn $D_{2.4}$ शङ्खस्वनं; $D_5$ $T_1$ $G_{1.3}$ शंखस्वनं. $K_4$ $Da_1$ Dn $D_{2.4}$ $T_1$ $G_3$ $M_{6-8}$ श्रुत्वा (for कृत्वा). — (L. 46) Da Dn $D_{2.4}$ रथेनानादयन्दिशः.

कालयन्नथनागाश्वान्संचचार वृकोदरः ।
भारद्वाजप्रियं कर्तुमुद्यतः फल्गुनस्तदा । [60]
पार्षतं शरजालेन क्षिप्रं प्रच्छाद्य पाण्डवः ।
हयौघांश्च गजौघांश्च रथौघांश्च समन्ततः ।
पातयन्समरे राजन्युगान्ताग्निरिव ज्वलन् ।
ततस्ते हन्यमाना वै पाञ्चालाः सृञ्जयास्तथा ।
शरैर्नानाविधैस्तूर्णं पार्थं प्रच्छाद्य सर्वशः । [65]
सिंहनादरवान्कृत्वा समयुध्यन्त पाण्डवम् ।
तद्युद्धमभवद्घोरं सुमहाद्भुतदर्शनम् ।
सिंहनादस्वनं श्रुत्वा नामृष्यत धनंजयः ।
ततः किरीटी सहसा पाञ्चालं समभिद्रवत् ।
छादयन्निषुजालेन महता मोहयन्निव । [70]
शीघ्रमभ्यस्यतो बाणान्संदधानस्य चानिशम् ।
नान्तरं ददृशे किंचित्कौन्तेयस्य यशस्विनः ।
न दिशो नान्तरिक्षं च तदा नैव च मेदिनी ।
नादृश्यत महाराज तत्र किंचन संयुगे ।
बाणान्धकारे बलिना कृते गाण्डीवधन्विना । [75]
पाञ्चालानां कुरूणां च साधु साध्विति निःस्वनः ।
ततस्तूर्यनिनादश्च शङ्खानां च महास्वनः ।
सिंहनादश्च संजज्ञे साधुशब्देन मिश्रितः ।
ततः पाञ्चालराजस्तु तथा सत्यजिता सह ।
त्वरमाणोऽभिदुद्राव महेन्द्रं शम्बरो यथा । [80]
महता शरवर्षेण पार्थः पाञ्चालमावृणोत् ।
ततो हलहलाशब्द आसीत्पाञ्चालके बले ।
जिघृक्षति महासिंहे गजानामिव यूथपम् ।
दृष्ट्वा पार्थं तदायान्तं सत्यजित्सत्यविक्रमः ।
पाञ्चालं वै परिप्रेप्सुर्धनंजयमभिद्रवत् । [85]
ततस्त्वर्जुनपाञ्चालौ युद्धाय समुपागतौ ।
व्यक्षोभयेतां तौ सेने इन्द्रवैरोचनाविव ।
ततः सत्यजितं पार्थो दशभिर्मर्मभेदिभिः ।
विव्याध बलवद्राजंस्तदद्भुतमिवाभवत् ।
ततः शरशतैः पार्थं पाञ्चालः शीघ्रमर्दयत् । [90]
पार्थस्तु शरवर्षेण छाद्यमानो महारथः ।
वेगं चक्रे महावेगो धनुर्ज्यामवमृज्य च ।
ततः सत्यजितश्चापं छित्त्वा राजानमभ्ययात् ।
अथान्यद्धनुरादाय सत्यजिद्वेगवत्तरम् ।
साश्वं ससूतं सरथं पार्थं विव्याध सत्वरः । [95]
स तं न ममृषे पार्थः पाञ्चालेनार्दितो मृधे ।
ततस्तस्य विनाशार्थं सत्वरं व्यसृजच्छरान् ।
हयान्ध्वजं धनुर्मुष्टिमुभौ तौ पार्ष्णिसारथी ।
स तथा भिद्यमानेषु कार्मुकेषु पुनः पुनः ।
हयेषु विनिकृत्तेषु विमुखोऽभवदाहवे । [100]
स सत्यजितमालोक्य तथा विमुखमाहवे ।
वेगेन महता राजन्नभ्यधावत पार्षतम् ।
तदा चक्रे महद्युद्धमर्जुनो जयतां वरः ।
तस्य पार्थो ध्वजं छत्रं धनुश्चोर्व्यामपातयत् ।
पञ्चभिस्तस्य विव्याध हयान्सूतं च सायकैः । [105]
तत उत्सृज्य तच्चापमाददानं शरावरम् ।
खड्गमुद्धृत्य कौन्तेयः सिंहनादमथाकरोत् ।
पाञ्चालस्य रथस्येषामाप्लुत्य सहसानदत् ।
पाञ्चालरथमास्थाय अवित्रस्तो धनंजयः ।
विक्षोभ्याम्भोनिधिं तार्क्ष्यस्तं नागमिव सोऽग्रहीत् । [110]
ततस्तु सर्वे पाञ्चाला विद्रवन्ति दिशो दश ।
दर्शयन्सर्वसैन्यानां बाह्वोर्बलमथात्मनः ।
सिंहनादस्वनं कृत्वा निर्जगाम धनंजयः ।
आयान्तमर्जुनं दृष्ट्वा कुमाराः सहितास्तदा ।
ममृदुस्तस्य नगरं द्रुपदस्य महात्मनः । [115]

— (L. 51) Some MSS. स (for सु-). — (L. 57) $Da_1$ Dn $D_{2.4.5}$ पदातींश्च रथांश्चैव. $K_4$ $Da_1$ Dn $D_{2.4.5}$ $G_2$ न्य($D_{2.4}$ $G_2$ अ)वधीत् (for नावधीत्). — (L. 59) $Da_1$ Dn $D_{2.4.5}$ $T_3$ $G_{1.2.4.5}$ चालयन्. $Da_1$ Dn $D_{2.4.5}$ रथनागांश्च, and संचचाल. — (L. 61) $Da_1$ Dn $D_{2.4}$ क्षिप्रमागात्स पांडवः. — (L. 65) $K_4$ $Da_1$ Dn $D_{2.4.5}$ संछाद्य. — (L. 66) $Da_1$ Dn $D_{2.4.5}$ सिंहनादं मुखैः ($D_5$ महत्) कृत्वा. — (L. 68) $Da_1$ Dn $D_{2.4}$ नामृष्यत्पाकशासनिः. — (L. 69) $K_4$ पांडवः; $Da_1$ Dn $D_{2.4.5}$ पांचालान् (for पाञ्चालं). $Da_1$ Dn $D_{2.4}$ समरेद्रवत्. Dn $D_2$ om. lines 73–77. — After line 73, $K_4$ $D_4$ $G_{4.6}$ M ins.:

अदृश्यत महाराज बाणभूतमिवाभवत् ।

— (L. 74) $Da_1$ $D_5$ T $G_{1-3.6}$ om. न. — (L. 79) $K_4$m सह सत्यजितेन च. — (L. 83) $K_4$ $Da_1$ Dn $D_2$ $G_3$ $M_8$ महासिंहो. — (L. 85) $Da_1$ Dn $D_{2.4}$ °जयमदुद्रुवुः. — (L. 87) $Da_1$ Dn $D_{2.4.5}$ सैन्यं; $T_1$ $G_2$ सैन्ये; $T_2$ $G_{1.4.6}$ सेनां. — (L. 89) $Da_1$ Dn $D_{2.4}$ गाढं (for राजन्). — (L. 90) Dn आर्दयत्. — (L. 96) $Da_1$ Dn $D_{2.4}$ युधि; $M_{3.5}$ रणे (for मृधे). — After line 98, $G_2$ ins.:

मर्दयामास संक्रुद्धः पार्थः प्रौढपराक्रमः ।

— (L. 100) $Da_1$ Dn $D_{2.4.5}$ विनियुक्तेषु; $T_2$ $G_{4.6}$ पतितेष्वेवं; $M_{3.5}$ विनिपक्तेषु. — (L. 102) $Da_1$ Dn $D_{2.4.5}$ $G_3$ अभ्यवर्षत. Dn पांडवं (for पार्षतम्). — (L. 104) $Da_1$ Dn $D_{2.4}$ धनुश्छित्वा ध्वजं (for ध्वजं छत्रं धनुः). — (L. 106) $G_{1.6}$ M आददानः. — (L. 107) $Da_1$ Dn $D_{2.4}$ उद्धृत्य; $D_5$ T $G_{2.4.5}$ उद्यम्य (for उद्धृत्य). — (L. 108) Dn $D_4$ $T_1$ सहसापतत्; $T_2$ $G_{4.6}$ °सा बली. — (L. 110) $Da_1$ Dn $D_2$ पार्थः (for तार्क्ष्यः). — (L. 111) M (except $M_5$) व्यद्रवंत. — (L. 112)

अर्जुनः ।

संबन्धी कुरुवीराणां द्रुपदो राजसत्तमः ।
मा वधीस्तद्बलं भीम गुरुदानं प्रदीयताम् ।

वैशंपायनः ।

भीमसेनस्तदा राजन्नर्जुनेन निवारितः ।
अतृप्तो युद्धधर्मेषु न्यवर्तत महारथः ।

79

After adhy. 128, $K_4$ $D_{4.5}$ (all suppl. fol. *sec. m.*) S ins.:

वैशंपायनः ।

द्रोणेन वैरं द्रुपदो न सुष्वाप स्मरंस्तदा ।
क्षात्रेण च बलेनास्य नाशंशसे पराजयम् ।
हीनं विदित्वा चात्मानं ब्राह्मणेन बलेन च ।
द्रुपदस्त्वमर्षान्नृपतिः कर्मसिद्धौ द्विजोत्तमम् ।
अन्विच्छन्परिचक्राम ब्राह्मणावसथान्बहून् । [5]
नास्ति श्रेष्ठं ममापत्यं धिग्बन्धूनिति चाब्रवीत् ।
निश्वासपरमो ह्यासीद्द्रोणाप्रियचिकीर्षया ।
न सन्ति मम मित्राणि लोकेऽस्मिन्नास्ति वीर्यवान् ।
पुत्रजन्म परीप्सन्वै पृथिवीमन्वियादिमाम् ।
प्रभावशिक्षाविनयाद्द्रोणस्यास्त्रबलेन च । [10]
कर्तुं प्रयतमानोऽपि न शशाक पराजयम् ।
अभितः सोऽथ कल्माषीं गङ्गाकूले परिभ्रमन् ।
ब्राह्मणावसथं पुण्यमाससाद महीपतिः ।
तत्र नास्नातकः कश्चिन्न चासीदव्रतो द्विजः ।
तथैव तौ महाभागौ सोऽपश्यच्छंसितव्रतौ । [15]
याजोपयाजौ ब्रह्मर्षी शाम्यन्तौ पृषतात्मजः ।
संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ ।
अरण्ये युक्तरूपौ तौ ब्राह्मणावृषिसत्तमौ ।
स उपामन्त्रयामास सर्वकामैरतन्द्रितः ।
बुद्ध्वा तयोर्बलं बुद्धिं कनीयांसमुपह्वरे । [20]
प्रपेदे छन्दयन्कामैरुपयाजं धृतव्रतम् ।
गुरुशुश्रूषणे युक्तः प्रियकृत्सर्वकामदः ।
पाद्येनासनदानेन तथार्घ्येण फलैश्च तम् ।
अर्चयित्वा यथान्यायमुपयाजोऽब्रवीत्ततः ।
केन कार्यविशेषेण त्वमस्मानभिकाङ्क्षसे । [25]
कुतश्चायं समुद्योगस्तद्ब्रवीतु भवानिति ।
स बुद्ध्वा प्रीतिसंयुक्तमृषीणामुत्तमं तदा ।
उवाच छन्दयन्कामैर्द्रुपदः स तपस्विनम् ।
येन मे कर्मणा ब्रह्मन्पुत्रः स्याद्द्रोणमृत्यवे ।
अर्जुनस्य तथा भार्या भवेद्या वरवर्णिनी । [30]
उपयाज चरस्वैतत्प्रदास्याम्यर्बुदं गवाम् ।
एवमुक्तस्तु तेनर्षिः प्रत्युवाच पुनश्च तम् ।
नाहं फलार्थी द्रुपद योऽर्थी स्यात्तत्र गम्यताम् ।
प्रत्याख्यातस्तु तेनैवं स वै सज्जनसंनिधौ ।
आराधयिष्यन्द्रुपदः स तं पर्यचरत्ततः । [35]
ततः संवत्सरस्यान्ते द्रुपदं द्विजसत्तमः ।
उपयाजोऽब्रवीद्वाक्यं काले मधुरया गिरा ।
ज्येष्ठो भ्राता ममागृह्णाद्विचरन्वननिर्झरे ।
अपरिज्ञातशौचायां भूमौ निपतितं फलम् ।
तदपश्यमहं भ्रातुरसांप्रतमनुव्रजन् । [40]
विमर्शं च फलादाने नायं कुर्यात्कथंचन ।
यो नापश्यत्फलं दृष्ट्वा दोषांस्तस्यानुबन्धिकान् ।
विविनक्ति न शौचार्थं सोऽन्यत्रापि कथं भवेत् ।
संहिताध्ययनस्यान्ते पञ्च यज्ञान्निरूप्य च ।
भैक्षमुञ्छेन सहितं भुञ्जानस्तत्तदा ततः । [45]
कीर्तयत्येव राजर्षे भोजनस्य रसं पुनः ।
संहिताध्ययनं कुर्वन्वने गुरुकुले वसन् ।
भैक्षमुच्छिष्टमन्येषां भुङ्क्ते स सततं तदा ।
कीर्तयन्गुणमन्नानामथ प्रीतो मुहुर्मुहुः ।
एवं फलार्थिनं तस्मान्मन्येऽहं तर्कचक्षुषा । [50]

---

$Da_1$ Dn $D_{3.4}$ स बाह्वोर्बलमात्मनः ($Da_1$ $D_{3.4}$ °स्थितः). — L. 115 = (var.) 1. 128. $4^{cd}$. — (L. 116) M गुरोर्नो द्रुपदो राजा संबंधी सुमहामतिः ($M_{8.5}$ °बलः). — After line 116, $T_1$ ins.:

गृहीतोऽयं मया युद्धे साहसेनैव वीर्यवान् ।

— (L. 119) $G_{1.5}$ धर्मयुद्धेषु; M युद्धकरणे. $Da_1$ Dn $D_{3.4.5}$ महाबलः. — After line 119, $D_4$ (marg. *sec. m.*) $T_2$ $G_{1.3.4.5}$ ins.:

नागच्छत्तस्य नगरीं काम्पिल्यां कुरुनन्दनः ।

79

The sub-group $T_2$ $G_{4.5}$ offer many variants for this passage; but being intrinsically unimportant they have been mostly ignored in these notes. — (L. 4) Hypermetric! $K_4$ द्रुपदोत्यमर्षितो राजन्; $D_4$ द्रुपदोमर्षितो राजन्; $D_5$ द्रुपदस्त्यज्य राज्यं तु; $G_{1.6}$ °स्त्वमर्षणाद्राजा; $G_{2.3}$ अमर्षाद्द्रुपदो राजा; $M_{3.5}$ ततस्त्वमर्षाद्द्रुपदः; $M_{6-8}$ °स्त्वमर्षाद्राजेंद्र. — After line 10, $D_5$ ins.:

क्षात्रेण च बलेनापि चिन्तयन्नान्वपश्यत ।

— After line 23, $G_2$ ins.:

तोषयामास तं विप्रं सर्वकामैरतन्द्रितः ।

— $K_4$ $T_2$ $G_{4.5}$ M om. line 30. — For line 31, $D_5$ subst.:

उपयाज कृते तस्मिन्गवां दतास्मि तेऽर्बुदम् ।
यच्च तेऽन्यद्द्विजश्रेष्ठ मनसः सुप्रियं भवेत् ।
सर्वं च ते प्रदाताहं न हि मेऽत्रास्ति संशयः ।

— (L. 50) $K_4$ $M_6$ तमहं; $D_4$ $M_{3.5}$ तं वै; $G_1$ मन्ये (for

तं वै गच्छेह नृपते स त्वां संयाजयिष्यति ।
जुगुप्समानो नृपतिः फलानां कलुषां गतिम् ।
उपयाजवचः श्रुत्वा द्रुपदः सर्वधर्मवित् ।
भृशं संपूज्य पूजार्हमृषिं याजमुवाच ह ।
गोयुतानि ददाम्यष्टौ याज याजय मां विभो । [55]
द्रोणवैरान्तरे तप्तं विषण्णं शरणागतम् ।
ब्रह्मबन्धुप्रणिहितं न क्षत्रं क्षत्रियो जयेत् ।
तस्माद्द्रोणभयार्तं मां भवांस्त्रातुमिहार्हति ।
भारद्वाजाग्निना दग्धं संह्लादयितुमर्हसि ।
स हि ब्रह्मविदां श्रेष्ठः क्षत्रास्त्रे चाप्यनुत्तमः । [60]
ततो द्रोणस्तु मा जैषीत्सखिविग्रहकारणात् ।
क्षत्रियो नास्ति तुल्योऽस्य पृथिव्यां कश्चिदग्रणीः ।
भारताचार्यमुख्यस्य भारद्वाजस्य धीमतः ।
द्रोणस्य शरजालानि रिपुदेहहराणि च ।
षडरत्नि धनुश्चास्य खड्गमप्रतिमं महत् । [65]
स हि ब्राह्मणवेगेन क्षत्रवेगमसंशयम् ।
प्रतिहत्य चरत्येव भारद्वाजो महामनाः ।
कार्तवीर्यसमो ह्येष खट्वाङ्गप्रतिमोऽपि वा ।
सहितं क्षत्रवेगेन ब्राह्मं वेगं हि सांप्रतम् ।
उपपन्नं हि मन्येऽहं भारद्वाजं यशस्विनम् । [70]
क्षत्रच्छेदपरायत्तं जामदग्न्यमिवोद्यतम् ।
नैषधस्तं पराकुर्युर्न च प्रासा न चासयः ।
ब्राह्मं तस्य हरेत्तेजो मन्त्राहुतिहुतं यथा ।
तस्य ह्यस्त्रबलं घोरमप्रसह्यं परैर्भुवि ।
शत्रून्समेत्य जयति क्षत्रधर्मपुरस्कृतम् । [75]
ब्रह्मक्षत्रे च सहिते ब्रह्मतेजो विशिष्यते ।
सोऽहं क्षत्रबलाद्धीनो ब्रह्मतेजः प्रपेदिवान् ।
द्रोणाद्विशिष्टमासाद्य भवन्तं ब्रह्मवित्तमम् ।
द्रोणान्तकमहं पुत्रं लभेयं युधि दुर्जयम् ।
द्रोणमृत्युर्यथा मेऽद्य पुत्रो जायेत वीर्यवान् । [80]
तत्कर्म कुरु मे याज निर्वपाम्यर्बुदं गवाम् ।
तथेत्युक्त्वा तु तं याजो याज्यार्थं वाक्यमब्रवीत् ।
मा भैस्त्वं संप्रदातास्मि कर्मणा भवतः सुतम् ।
क्षिप्रमुत्तिष्ठ चाव्यग्रः संभारांश्चोपकल्पय ।
एवमुक्त्वा प्रतिज्ञाय कर्म चास्याददे मुनिः । [85]
याजो द्रोणविनाशाय याजयामास तं नृपम् ।
गुर्वर्थं याजयन्कर्म याजस्यापि समीपगः ।
ततस्तस्य नरेन्द्रस्य उपयाजो महातपाः ।
आचख्यौ कर्म वैतानं तदा पुत्रफलाय वै ।
स च पुत्रो महावीर्यो महातेजा महाबलः । [90]
इष्यते यद्विधो राजन्भविता स तथाविधः ।
भारद्वाजस्य हन्तारं सोऽभिसंधाय भूमिपः ।
आजह्रे तं तथा यज्ञं द्रुपदः कर्मसिद्धये ।
ब्राह्मणो द्विपदां श्रेष्ठो जुहाव च यथाविधि ।
कौकिली नाम तां तस्य चक्रे वै पुत्रगृद्धिनः । [95]
सौत्रामणीं तु तं पत्नीं ततः कालेऽभ्ययात्तदा ।
याजस्तु हवनस्यान्ते देवीमाह्वापयत्तदा ।
प्रेहि वै राज्ञि पृषति मिथुनं त्वामुपस्थितम् ।
कुमारश्च कुमारी च पितृवंशविवृद्धये ।

पृषती ।

नालिप्तं वै मम मुखं पुण्यान्गन्धान्बिभर्मि च । [100]
न पत्नी तेऽस्मि सूत्यर्थं तिष्ठ याज मम प्रिये ।

याजः ।

याजेन श्रपितं हव्यमुपयाजेन मन्त्रितम् ।
कथं कामं न संदध्यात्पृषति प्रेहि तिष्ठ वा ।

वैशंपायनः ।

एवमुक्ते तु याजेन हुते हविषि संस्कृते ।
उत्तस्थौ पावकात्तस्मात्कुमारो देवसंमितः । [105]
ज्वालारूपो घोरवर्णः किरीटी वर्म धारयन् ।
वीरः सखड्गः सशरो धनुष्मान्विनदन्मुहुः ।
सोऽध्यारोहद्रथवरं तेन च प्रययौ तदा ।
जातमात्रे कुमारे च वाक्किलान्तर्हिताब्रवीत् ।
एष शिष्यश्च मृत्युश्च भारद्वाजस्य जायते । [110]
ततः प्रणेदुः पाञ्चालाः प्रहृष्टाः साधु साध्विति ।
भयापहो राजपुत्रः पाञ्चालानां यशस्करः ।
राज्ञः शोकापहो जात एष द्रोणवधाय हि ।
इत्यवोचन्महद्भूतमदृश्यं खेचरं तदा ।
द्वितीयायां च होत्रायां हुते हविषि मन्त्रिते । [115]
कुमारी चैव पाञ्चाली वेदिमध्यात्समुत्थिता ।
प्रत्याख्याते पृषत्या च याजके भरतर्षभ ।
पुनः कुमारी पाञ्चाली सुभगा वेदिमध्यमा ।
अन्तर्वेद्यां समुद्भूता कन्या सा सुमनोहरा ।
श्यामा पद्मपलाशाक्षी नीलकुञ्चितमूर्धजा । [120]
मानुषं विग्रहं कृत्वा साक्षादमरवर्णिनी ।

---

एवं). K4 D4 T2 G3 M मन्ये; G1 तं वै (for तस्मात्). K4 D4 T2 G1.3 M भ्रातरं (for मन्येऽहं). — (L. 56) T2 G °वैराभितप्तं मां त्वं हि त्रातुमिहार्हसि. — K4 D4 M om. lines 57–58. — T2 G3 ins. after line 62:

न जयेत्क्षत्रियस्तं वै पृथिव्यां कश्चिदग्रणीः ।

— K4 D4 M om. lines 68–70, 72–73; D5 om. lines 69–70. — (L. 75) K4 T2 G1.2.6 M6 क्षत्रं ब्रह्मपुर°. — K4 D4 M om. line 80. — (L. 81) K4 D4.5 M प्रददाम्यर्बुदं. — (L. 84) K4 D4 M °श्चोपपादय. — After line 85, D5 G (except G3) ins.:

ब्राह्मणो द्विपदां श्रेष्ठो यथाविधि यथाक्रमम् ।

— K4 D4 G2 M om. lines 86–87. — (L. 107) K4 D4

नीलोत्पलसमो गन्धो यस्याः क्रोशात्प्रवायति ।
या बिभर्ति परं रूपं यस्या नास्त्युपमा भुवि ।
देवदानवयक्षाणामीप्सिता देववर्णिनी ।
तां चापि जातां सुश्रोणीं वागुवाचाशरीरिणी । [ 125 ]
सर्वयोषिद्वरा कृष्णा क्षयं क्षत्रं निनीषति ।
सुरकार्यमियं काले करिष्यति सुमध्यमा ।
अस्या हेतोः क्षत्रियाणां महदुत्पत्स्यते भयम् ।
तच्छ्रुत्वा सर्वपाञ्चालाः प्रणेदुः सिंहसंघवत् ।
न चैनान्हर्षसंपूर्णानियं सेहे वसुंधरा । [ 130 ]
तथा तु मिथुनं जज्ञे द्रुपदस्य महात्मनः ।
कुमारश्च कुमारी च मनोज्ञौ भरतर्षभ ।
श्रिया परमया युक्तौ क्षात्रेण वपुषा तदा ।
तौ दृष्ट्वा पृषती राजन्प्रपेदे सा सुतार्थिनी ।
न वै मदन्यां जननीं जानीयातामिमाविति । [ 135 ]
तथेत्युवाच तां याजो राज्ञः प्रियचिकीर्षया ।
तयोस्तु नामनी चक्रुर्द्विजाः संपूर्णमानसाः ।
धृष्टत्वादप्रधृष्यत्वाद्धर्माद् द्युम्नभवादपि ।
धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भवत्विति ।
कृष्णेत्येवाब्रुवन्कृष्णां कृष्णाभूत्सा हि वर्णतः । [ 140 ]
तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे ।
वैदिकाध्ययने पारं धृष्टद्युम्नो गतस्तदा ।
धृष्टद्युम्नं तु पाञ्चाल्यमानीय द्रुपदात्मजम् ।
उपाकरोदस्त्रहेतोर्भारद्वाजः प्रतापवान् ।
अमोक्षणीयं दैवं हि भावित्वान्महामतिः । [ 145 ]
तथा तत्कृतवान्द्रोण आत्मकीर्त्यर्थरक्षणात् ।
सर्वास्त्राणि तु स क्षिप्रमाप्तवान्दृष्टमात्रया ।

Colophon.

जनमेजयः ।

द्रुपदस्यापि ब्रह्मर्षे श्रोतुमिच्छामि संभवम् ।
कथं चापि समुत्पन्नः कथमस्त्राण्यवाप्तवान् ।
एतदिच्छामि भगवंस्त्वत्तः श्रोतुं द्विजोत्तम । [ 150 ]
कौतुहलं जन्मसु मे कथ्यमानेष्वतीव हि ।

वैशंपायनः ।

राजा बभूव पाञ्चालः पुत्रार्थी पुत्रकारणात् ।
वनं गत्वा महाराजस्तपस्तेपे सुदारुणम् ।
आराधयन्प्रयत्नेन तस्यापत्यस्य कारणात् ।
तस्य संतप्यमानस्य वने मृगगणायुते । [ 155 ]
कालस्तु सुमहान्राजन्प्रत्ययात्सुतकारणात् ।
स तु राजा महावीर्यस्तपस्तीव्रं समाददे ।
किंचित्कालं वायुभक्षो निराहारस्तथैव च ।
तस्यैवं तु महाबाहो वर्तमानस्य भारत ।
कालस्तत्र महान्राजन्प्रत्ययान्नृपसत्तम । [ 160 ]
ततः प्राप्ते महाराज वसन्ते कामदीपने ।
फुल्लाशोकवने काले प्राणिनां सुमनोहरे ।
नद्यास्तीरमथो गत्वा गङ्गायाः पद्मलोचनः ।
नियमस्थः स राजासीत्तदा भरतसत्तम ।
ततो नातिचिरात्कालाद्वनं तन्मनुजेश्वर । [ 165 ]
संप्राप्ता सहसा राजन्मेनकेति परिश्रुता ।
नद्यास्तीरे चरन्ती वै क्रीडन्ती च पुनः पुनः ।
पुष्पद्रुमान्प्रभञ्जाना राज्ञो दर्शनमागमत् ।
न ददर्श तु सा राजंस्तथा स्थानगतं नृपम् ।
दृष्ट्वा चाप्सरसं तां तु शुक्रं राज्ञोऽपतद्भुवि । [ 170 ]
तच्च राजा तु राजेन्द्र लज्जया नृपतिः स्वयम् ।
पद्भ्यामाक्रमतायुष्मंस्ततस्तु द्रुपदोऽभवत् ।
ततस्तु तस्य तपसा राजर्षेर्भावितात्मनः ।
पुत्रः समभवत्वाद्रौत्पादान्तस्यान्तरेण तु ।
ते तस्य ऋषयः सर्वे समागम्य तपोधनाः । [ 175 ]
नाम चक्रुर्हि विद्वांसो द्रुपदोऽस्त्विति भूमिप ।
स तस्यैवाश्रमे राजन्भरद्वाजस्य भारत ।
ववृधे च सुखं तत्र कामैः सर्वैर्नृपोत्तम ।
पाञ्चालोऽपि हि राजेन्द्र स्वराज्यं गतवान्प्रभुः ।
भरद्वाजस्य शिक्षार्थं सुतं दत्त्वा महात्मनः । [ 180 ]
स कुमारस्ततो राजन्द्रोणेन सहितो वने ।
वेदांश्चाधिजगे साङ्गान्धनुर्वेदं च भारत ।
परया स मुदा युक्तो विचचार वने सुखम् ।
तस्यैवं वर्तमानस्य वने वनचरैः सह ।
कालान्नातिचिराद्राजन्पिता स्वर्गमुपेयिवान् । [ 185 ]
स समागम्य पाञ्चालैः पाञ्चालेष्वभिषेचितः ।
प्राप्तश्च राज्यं राजेन्द्र सुहृदां प्रीतिवर्धनः ।
राज्यं ररक्ष धर्मेण यथा चेन्द्रस्त्रिविष्टपे ।

---

M धनुर्विस्फारयन्मुहुः. — $K_4$ $D_4$ M om. lines 109–110, 131–133. — (L. 138) $K_4$ $D_5$ $T_2$ $G_{2.4.5}$ $M_6$ द्युत्संभवादपि; $G_1$ द्युम्नस्य संभवात्. — (L. 140) $D_4$ $G_{1.3.6}$ $M_{6-8}$ °वामवत्कृष्णा. — $K_4$ $D_4$ M om. line 142. — (L. 145) $K_4$ $D_4$ भवितेति; $D_5$ स तु मत्वा; $G_{1.3.6}$ एवं मत्वा; $M_{6-8}$ एवमुक्त्वा. $K_4$ $D_4$ M om. line 147. — Colophon. *Adhy. no.*: $T_2$ $G_{3-5}$ M 82; $G_{1.6}$ 83; $G_2$ 84. — (L. 174) $K_4$ $D_4$ $T_2$ $G_{2.4.5}$ M चास्य; $D_5$ राजन् (for त्वाद्रौत्). $K_4$ $D_4$ M पादौ तस्यांत°; $T_2$ $G_{2.4.5}$ पादयोरंतरे तु सः. — (L. 175) $K_4$ $D_{4.5}$ तेनास्य ऋ°; $T_2$ $G_{3.4.5}$ तस्य चाप्यृप°; M तेन चास्यर्°. — (L. 188) $K_4$ $D_4$ $T_2$ $G_{2.4.5}$ M प्रजारक्षणधर्मेण. — After line 188, $D_5$ ins.:

कथितं जन्म राजेन्द्र द्रुपदस्य सुतस्य च ।

— Colophon om. in $G_{2.4}$. *Adhy. no.*: $D_4$ 140; $T_2$ $G_{3.5}$ M 83; $G_{1.6}$ 84.

एतन्मया ते राजेन्द्र यथावत्परिकीर्तितम् ।
द्रुपदस्य जन्म राजर्षे धृष्टद्युम्नस्य चैव हि । [ 190 ]

Colophon.

वैशंपायनः ।
धृतराष्ट्रस्तु राजेन्द्र यदा पौरवनन्दनः ।
युधिष्ठिरमजानाद्धि समर्थं राज्यधारणे ।
यौवराज्येऽभिषेकार्थममन्त्रयत मन्त्रिभिः ।
ते तु बुद्धान्वतप्यन्त धृतराष्ट्रात्मजास्तदा ।

☞ The first adhy. of this passage is an *anticipation* (with v. l.) of adhy. 155. In S the present passage constitutes the longer version, its repetition (in S) after adhy. 154 being only a summary. See also the remarks at the end of the footnotes to adhy. 128 (p. 574). The passage is followed by passage No. 80 below.

## 80

N $V_1$ B Da Dn $D_{1.2}$ ins. after adhy. 128: $K_4$ $D_{4.5}$ S after passage No. 79 above:

वैशंपायन उवाच ।
ततः संवत्सरस्यान्ते यौवराज्याय पार्थिव ।
स्थापितो धृतराष्ट्रेण पाण्डुपुत्रो युधिष्ठिरः ।
धृतिस्थैर्यसहिष्णुत्वादानृशंस्यात्तथार्जवात् ।
भृत्यानामनुकम्पाच्च तथैव स्थिरसौहृदात् ।
ततोऽदीर्घेण कालेन कुन्तीपुत्रो युधिष्ठिरः । [ 5 ]
पितुरन्तर्दधे कीर्तिं शीलवृत्तसमाधिभिः ।
असियुद्धे गदायुद्धे रथयुद्धे च पाण्डवः ।
संकर्षणादशिक्षद्वै शश्वच्छिक्षां वृकोदरः ।
समाप्तशिक्षो भीमस्तु द्युमत्सेनसमो बले ।
पराक्रमेण संपन्नो भ्रातॄणामचरद्वशे । [ 10 ]
प्रगाढदृढमुष्टित्वे लाघवे वेधने तथा ।
क्षुरनाराचभल्लानां विपाठानां च तत्त्ववित् ।
ऋजुवक्रविशालानां प्रयोक्ता फाल्गुनोऽभवत् ।
लाघवे सौष्ठवे चैव नान्यः कश्चन विद्यते ।
बीभत्सुसदृशो लोके इति द्रोणो व्यवस्थितः । [ 15 ]
ततोऽब्रवीद्गुडाकेशं द्रोणः कौरवसंसदि ।
अगस्त्यस्य धनुर्वेदे शिष्यो मम गुरुः पुरा ।
अग्निवेश्य इति ख्यातस्तस्य शिष्योऽस्मि भारत ।
तीर्थात्तीर्थं गमयितुमहमेतत्समुद्यतः ।
तपसा यन्मया प्राप्तममोघमशनिप्रभम् । [ 20 ]
अस्त्रं ब्रह्मशिरो नाम यद्दहेत्पृथिवीमपि ।
ददता गुरुणा चोक्तं न मनुष्येष्विदं त्वया ।
भारद्वाज विमोक्तव्यमल्पवीर्येष्वपि प्रभो ।

80

(L. 1) $D_5$ (orig.) S (except $T_1$) पांडुपुत्रो महायशाः (for the posterior half). — (L. 2) S यौवराज्ये (for पाण्डु°). — $T_2$ om. lines 3–5; G M om. lines 3–4. — (L. 4) Dn $D_{4.5}$ °मनुकंपार्थं. — (L. 5) $G_1$ $M_{6-8}$ अथ दीर्घेण; $G_{3,4-6}$ अदीर्घेण च; $M_{3.5}$ अथादी°. — (L. 6) $T_2$ G $M_8$ पित्र्यां; $M_{8,6-8}$ पैत्रीं (for पितुः). — (L. 7) $G_3$ रथोद्योगे; $G_{2.6}$ रथे याने (for गदायुद्धे). $\tilde{N}_1$ अस्त्रयुद्धे; $D_5$ $G_{1-3.6}$ बाहुयुद्धे (for रथयुद्धे). $T_2$ $G_{4.5}$ M भीमसेनोसियुद्धं च गदायुद्धं च पांडवः. — (L. 8) $D_5$ $G_{1-3.6}$ संकर्षणाच्छिक्षितवान्; $T_2$ $G_{4.5}$ M अगृह्णाद्बलदेवात्तु. Some MSS. transp. शश्वत् and शिक्षां. $T_2$ $G_{4.5}$ M बाहुयुद्धं च वीर्यवान्. — After line 8, $G_{1-3.6}$ ins.:

ते तं बुद्धान्वतप्यन्त धृतराष्ट्रात्मजास्तदा ।

— (L. 9) $D_5$ S (except $T_1$) समाप्तविद्यः सोप्यासीत्. $G_3$ M (except $M_5$) °समो बली. — After line 9, T $G_{3.4.6}$ repeat line 1 (with S reading). — (L. 10) $D_5$ S गदाबलाभ्यां सं°. — (L. 11) $D_5$ $T_2$ G लाघवे चातिवेधने. — After line 11, $D_4$ (marg. *sec. m.*)$._5$ S (except $T_1$ $G_{1.3}$) ins.:

लक्ष्यवेध्ये च मोक्षे च तोमरग्रहणेऽपि च ।

$D_{4.5}$ $T_2$ $G_{3,4-6}$ M cont.: T $G_{1.3}$ ins. after line 11:

असिशक्तिगदायुद्धे बभूवाप्रतिमोऽर्जुनः ।

— (L. 12) $D_5$ $T_2$ G M सुतेजसां; $\tilde{N}$ ($\tilde{N}_3$ om.) $V_1$ Dn $D_1$ $T_1$ च भारत (for च तत्त्ववित्). — (L. 13) $D_5$ $T_2$ G M पांडवो (for फाल्गुनो). — After line 13, $D_4$ (marg. *sec. m.*) S (except $G_{1.3.6}$) read lines 33–34. — (L. 14) $T_2$ G लाघवात्सौष्ठवाच्च. — (L. 15) S (except $T_1$) बीभत्सोः स°. $D_5$ S (except $T_1$) द्रोणोभ्यभाषत. — After line 15, $G_{1.3.6}$ read lines 33–34, 31–32; while $T_2$ $G_{4.5}$ read lines 31, 32; $G_2$, on the other hand, read the lines 8, 12, 13 of the passage given under line 30, followed by lines 31–32. — (L. 16) S (except $T_1$) अथाब्रवीत्तदा द्रोणः फल्गुनं जनसंसदि. — (L. 17) $\tilde{N}_1$ $D_{4.5}$ S (except $T_1$) सदा (for पुरा). — (L. 19) $D_{4.5}$ $M_2$ °र्थं गतः पार्थं; $T_2$ $G_{1.2.4.5}$ तीर्थादधिगतः पार्थं; $G_{3.6}$ °र्थं गतं पार्थं; $M_{5-8}$ °र्थागतः पार्थं. S (except $T_1$) मया संक्रामितं त्वयि (M °तस्त्वयि). — (L. 20) S (except $T_1$) इदं (for यत्). — (L. 21) $\tilde{N}$ M इमां (for अपि). — (L. 22) S (except $T_1$) ददता चास्मि संदिष्टो. — (L. 23) $G_{1.3.6}$ M प्रयोक्तव्यं. $T_2$ $G_{2.4.5}$ प्रयोक्तव्यं त्वया वीर. $D_5$ $G_{1.3.6}$ M अस्त्रं संयुग(M संग्राम)मूर्धनि; $T_2$ $G_{2.4.5}$ प्रदेयं च तथैव हि. — After line

यत्त्वयाप्तमिदं वीर दिव्यं नान्योऽर्हति त्विदम् ।
समयस्तु त्वया रक्ष्यो मुनिसृष्टो विशां पते । [25]
आचार्यदक्षिणां देहि ज्ञातिग्रामस्य पश्यतः ।
ददानीति प्रतिज्ञाते फाल्गुनेनाब्रवीद्गुरुः ।
युद्धेऽहं प्रतियोद्धव्यो युध्यमानस्त्वयानघ ।
तथेति च प्रतिज्ञाय द्रोणाय कुरुपुंगवः ।
उपसंगृह्य चरणौ स प्रायादुत्तरां दिशम् । [30]
स्वभावादगमच्छब्दो महीं सागरमेखलाम् ।
अर्जुनस्य समो लोके नास्ति कश्चिद्धनुर्धरः ।
गदायुद्धेऽसियुद्धे च रथयुद्धे च पाण्डवः ।
पारगश्च धनुर्युद्धे बभूवाथ धनंजयः ।
नीतिमान्सकलां नीतिं विबुधाधिपतेस्तदा । [35]
अवाप्य सहदेवोऽपि भ्रातॄणां ववृते वशे ।
द्रोणेनैव विनीतश्च भ्रातॄणां नकुलः प्रियः ।

23, $K_4$ $D_5$ S ins.:

यद्यप्यन्तर्हितं भूतं किंचिद्युध्येत हि त्वया ।
भारद्वाज तदा तेन हन्यास्त्वस्त्रेण संयुगे ।

[(L. 1) T G °युद्धे त्वया सह. — (L. 2) T G शस्त्रेण (for अस्त्रेण).] $G_1$ cont.:

तत्त्वया हि प्रयोक्तव्यमेतद्वै गुरुशासनम् ।
महातेजस्तदेतेन हन्याः शस्त्रेण संयुगे ।

— (L. 24) $K_4$ $B_1$ $D_n$ $T_1$ त्वया प्राप्तमिदं वीर; $T_2$ G M अवाप्तं तत्त्वया वी°. $K_4$ दिव्यं नानार्थसाधकम्; $T_2$ G M नान्यो दिव्यं (or दिव्यं नान्यस्त्) त्वदर्हति. — (L. 25) $T_2$ $G_{4.5}$ M बलवान्समयो रक्ष्यः; $G_{1-3.6}$ समश्च रक्ष्यो बलवान्. $Ñ_3$ मुनिनोक्तो; $D_a$ मन्त्रिसृष्टो; $T_2$ $G_{4.5}$ इति दृष्टो; $G_{1-3.6}$ ईदृशो हि; M इति शिष्यं. — (L. 26) M ज्ञातिसंग्राममूर्धनि. — (L. 27) Om. in M. Many MSS. ददामीति. $D_5$ T G फल्गुनेन. — (L. 28) $T_2$ G °मानोप्यहं रणे; M °मानो हि संयुगे. — $T_2$ $G_{4.5}$ ins. after line 28: $T_1$ (om. line 1), after line 29: $G_1$ (lines 30–42 only), after line 30:

तं तथेति प्रतिज्ञाते द्रोणाय कुरुपुंगवे ।
द्रोणो जगाद वचनं समालिङ्ग्य तु फल्गुनम् ।
यन्मयोक्तं पुरा पार्थ तव लोके नरः क्वचित् ।
सदृशं कारये नैव सर्वप्रहरणे युधि ।
तत्कृतं च मया सम्यक्तव तुल्यो न वर्तते । [5]
देवा युधि न शक्तास्त्वां योद्धुं दैत्या न दानवाः ।
नाहं त्वत्तो विशिष्टोऽसि किं पुनर्मानवा रणे ।
एकस्तवाधिको लोके यो हि वृष्णिकुलोद्भवः ।
कृष्णः कमलपत्राक्षः कंसकालीयसूदनः ।
स जेता सर्वलोकानां सर्वप्रहरणायुधः । [10]
नैतावता ते पार्थाहं भवाम्यनृतवागिह ।
तदधीनं जगत्सर्वं तत्प्रलीनं तदुद्भवम् ।
तत्पदं न विजानन्ति ब्रह्मेशानादयोऽपि वा ।
तस्मादभिप्रभवो ब्रह्मा सर्वभूतानि निर्ममे ।
स एव कर्ता भोक्ता च संहर्ता च जगन्मयः । [15]
स एव भूतं भव्यं च भवच्च पुरुषः परः ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ।
प्रादुर्भवति योगात्मा पालनार्थं स लीलया ।
तत्तुल्यो हि न जायेत न जातो न जनिष्यते ।
स हि मातुलजोऽभूत्ते चराचरगुरुः पिता । [20]
को हि तं जेतुमीहेत जानन्नात्महितं नरः ।
श्यालश्च ते सखा चासौ तस्य त्वं प्राणवल्लभः ।
स्नेहमभ्यधिकं तस्य तव सख्यमवस्थितम् ।
न तेन भवतो युद्धं भविता नर्मतोऽपि वा ।
अपि चार्थे तव पुरा शक्रेण किल चोदितः । [25]
गोकुले वर्धमानस्तु नन्दगोपस्य कारणात् ।
ममांशः पाण्डवो लोके पृथिव्यां पुरुषोत्तमः ।
कौन्तेयावरजः श्रीमानर्जुनो नाम वीर्यवान् ।
भुवो भारापहरणे साहाय्यं ते करिष्यति ।
तदर्थमभयं देहि पाहि चासत्कृते प्रभो । [30]
इत्युक्तः पुण्डरीकाक्षस्तदा शक्रेण फल्गुन ।
तमुवाच ततः श्रीमाञ्शङ्खचक्रगदाधरः ।
जानामि पाण्डवे वंशे जातं पार्थं पितृष्वसुः ।
पुत्रं परमधर्मिष्ठं सर्वशस्त्रभृतां वरम् ।
पालयामि त्वदंशं तं जीवलोकमहाभुजम् । [35]
आवयोः सख्यसदृशं न च लोके भविष्यति ।
यस्तद्भक्तः स मद्भक्तो यस्तं द्वेष्टि स मामपि ।
यन्मे वित्तं तु तत्तस्य तं विनाहं न जीवये ।
इति पार्थं पुरा शक्रमाह सर्वेश्वरो हरिः ।
तस्मात्तवापि सदृशस्तं विनाभ्यधिकः पुमान् । [40]
न चेह भविता लोके तमेव शरणं व्रज ।
शरण्यः सर्वभूतानां देवदेवो जनार्दनः ।

— (L. 29) S तत्तथेति प्रति°. — (L. 30) S युधिष्ठिरवशोभवत् (for the posterior half). — After line 30, $D_5$ ins.:

सर्वामधीतवान्नीतिं पातालाधिपतेस्तथा ।
जितवान्सकलान्नित्याल्लँलोकान्बुद्धिमतां वरः ।

— After line 15, $T_2$ $G_{3.5}$ M read lines 31–32; $G_{1.2.6}$, lines 33–34, 31–32. — (L. 31) $T_2$ G (except $G_{3.6}$) अभवत् (for अगमत्). — (L. 33) $D_5$ $T_2$ $G_{3.4.5}$ M गजपृष्ठेश्वपृष्ठे च; $T_1$ $G_{1.2.6}$ गजयुद्धेश्वयुद्धे च. $T_2$ G (except $G_{3.5}$) भारत (for पाण्डवः). — After line 33, T G (except $G_{3.5}$) ins.:

दिव्यमानुषसंभूतानवाप सुमहायशाः ।
सर्वास्तथाखिलानस्त्राञ्छस्त्राणि च तथा गुरोः ।

— (L. 34) M पारगो भुजयुद्धे च. — (L. 35) S (except

चित्रयोधी समाज्ञातो बभूवातिरथोदितः ।
त्रिवर्षकृतयज्ञस्तु गन्धर्वाणामुपप्लवे ।
अर्जुनप्रमुखैः पार्थैः सौवीरः समरे हतः । [40]
न शशाक वशे कर्तुं यं पाण्डुरपि वीर्यवान् ।
सोऽर्जुनेन वशं नीतो राजासीद्यवनाधिपः ।
अतीव बलसंपन्नः सदा मानी कुरून्प्रति ।
विपुलो नाम सौवीरः शस्तः पार्थेन धीमता ।
दत्तमित्रमिति ख्यातं संग्रामकृतनिश्चयम् । [45]
सुमित्रं नाम सौवीरमर्जुनोऽदमयच्छरैः ।
भीमसेनसहायश्च रथिनो मरुधन्वसु ।
अर्जुनः समरे प्राच्यान्सर्वानेकरथोऽजयत् ।
तथैवैकरथो गत्वा दक्षिणामजयद्दिशम् ।
धनौघं प्रापयामास कुरुराष्ट्रं धनंजयः । [50]
एवं सर्वे महात्मानः पाण्डवा मनुजोत्तमाः ।
परराष्ट्राणि निर्जित्य स्वराष्ट्रं ववृधुः पुरा ।
ततो बलमभिख्यातं विज्ञाय दृढधन्विनाम् ।
दूषितः सहसा भावो धृतराष्ट्रस्य पाण्डुषु ।
स चिन्तापरमो राजा न निद्रामलभन्निशि । [55]

Colophon.

☞ In some MSS. this passage is followed by passage No. 81 below.

## 81

K4 Ñ V1 B D M5-8 (the latter four MSS. om. lines 49-103) ins. after passage No. 80 above: T G2.4.5, after passage No. 83: G1.3.6, after adhy. 130: M8 (om. lines 49-103), after 1. 129. 1:

वैशंपायन उवाच ।

श्रुत्वा पाण्डुसुतान्वीरान्बलोद्रिक्तान्महौजसः ।
धृतराष्ट्रो महीपालश्चिन्तामगमदातुरः ।
तत आहूय मन्त्रज्ञं राजशास्त्रार्थवित्तमम् ।
कणिकं मन्त्रिणां श्रेष्ठं धृतराष्ट्रोऽब्रवीद्वचः ।

धृतराष्ट्र उवाच ।

उत्सिक्ताः पाण्डवा नित्यं तेभ्योऽसूये द्विजोत्तम । [5]
तत्र मे निश्चिततमं संधिविग्रहकारणम् ।
कणिक मतमाचक्ष्व करिष्येऽहं वचस्तव ।

---

T1) उद्धवात्सकलां नीतिं भोजाद्बुद्धिमतां वरः. — After line 35, S ins.:

अस्त्रे शस्त्रे च शास्त्रे च रथनागाश्वकर्मणि ।

— (L. 36) S (except T1) अचरत् (for ववृते). — (L. 38) V1 Dn T1 समाख्यातो. D2 °रथोधिकः; T3 G1.3 °रथो भुवि. G1 बभूवास्त्रविदां वरः; M °वास्त्रविशारदः. — (L. 39) S °कृतयत्नैस्तु गांधाराणा°. — (L. 40) N8 वीरैः; M सर्वैः (for पार्थैः). D5 S सौवीराः and हताः. — (L. 42) K4 D5 S स राजा (for राजासीद्). — (L. 43) S बलसंमत्तस्त्वस्ति (T2 G4.5 °भि) मानी. — (L. 44) K4 D5 S कुंतलो; Ñ V1 विपुलो; B6 Da वितुलो (for वित्तलो). D5 S दांतः (for शस्तः). — (L. 45) Dn दत्तामित्रः; D5 S दं(or दां)तवक्रः (or क्रं). D5 S पुरं (D5 G1 M पुरा) पार्थस्य कर्मणा (T1 सर्व सस्मृद्धिमत्; G4 संप्राप्य तेजसा; G5 M °स्य तेजसा). — After line 45, D5 (which om. line 46) ins.:

जितः स समरे प्राच्यान्सर्वानेकरथोऽजयत् ।

— (L. 46) S (except T1 G3.6 M5) अमित्रं. G (except G4.5) अमर्दयत्. T2 G1.3.4-6 M मृधे; G3 रणे (for शरैः). — (L. 47) K4 Ñ V1 B1.6 Dn D1 रथानां; D5 T1 G3 गत्वा वै; T2 G1.3.4-6 हत्वा च (G1 यो; G2.6 वै); M सरथो (for रथिनो). K4 Ñ V1 B6 Dn D1 अयुतं च सः; D5 T1 मरुधन्वनः. — After line 47, S (except T1 G3) ins.:

प्रतीच्यान्समरे राजञ्जिगाय भरतर्षभ ।

— (L. 48) Om. in M. T2 G transp. प्राच्यान् and सर्वान्. — (L. 49) T2 G जित्वा (for गत्वा). M तथा वै कौरवो जित्वा. D5 S दाक्षिणात्यान्नराधिपान्. — (L. 50) M धनौघान्. — After line 50, S (which om. lines 51-52) ins.:

अतः पञ्चदशे वर्षे सर्वमेतच्चकार सः ।
तं दृष्ट्वा धार्तराष्ट्राणां ततो भयमजायत ।
स सर्वान्धृतराष्ट्रस्य पुत्रान्विप्रचकार ह ।
भीमसेनो महाबाहुर्बलाद्बलवतां वरः ।
अदुष्टभावं तं दोषैर्जगृहुर्दुष्टबुद्धयः ।
धार्तराष्ट्रास्तथा सर्वे भयाद्भीमस्य कर्मणः ।
तान्दृष्ट्वा कर्मभिः पार्थान्सर्वानहितलक्षणान् ।
बलाद्गुणांस्तेभ्यो बिभियुर्दोषबुद्धयः ।

— (L. 53) Some MSS. अतिख्यातं. — S om. line 55. — Colophon om. in K4 Ñ V1 D2. *Adhy. no.:* B1 136; B5 132; Dn2.n3 138; D4 141; T1 134; T2 G3-5 M 84; G1.2.6 85.

## 81

T2 G5 M om. lines 1-7; T1 G1-4.6 om. lines 1-3. — S spells the name of the fictitious minister throughout as कणिङ्क. — (L. 4) D2 मंत्रं पप्रच्छ कणिकममात्यं मंत्रवित्तमम्; G (G5 om.) ततः कणिकनामानाम्य धृतराष्ट्रोऽब्रवीदिदम्. — (L. 5) T1 तेभ्योसूयाम्यहं द्विज; G (G5 om.) तेभ्योसूयामि वै सदा. — (L. 6) G (G5 om.) तत्र मे सहपुत्रस्य यद्भवेत्क्षेमकारकम्. — (L. 7) N3 B1.5 त्वं समाचक्ष्व; Dn D5 त्वं ममाच°; D4 एतन्मम°; G (G5 om.) तत्त्वना° (for मतमाच°).

वैशंपायन उवाच ।
स प्रसन्नमनास्तेन परिपृष्टो द्विजोत्तमः ।
उवाच वचनं तीक्ष्णं राजशास्त्रनिदर्शनम् ।
कणिक उवाच ।
शृणु राजन्निदं तत्र प्रोच्यमानं मयानघ । [10]
न मेऽभ्यसूया कर्तव्या श्रुत्वैतत्कुरुसत्तम ।
नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः ।
अच्छिद्रश्छिद्रदर्शी स्यात्परेषां विवरानुगः ।
नित्यमुद्यतदण्डाद्धि भृशमुद्विजते जनः ।
तस्मात्सर्वाणि कार्याणि दण्डेनैव विधारयेत् । [15]
नास्य च्छिद्रं परः पश्येच्छिद्रेण परमन्वियात् ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ।
नासम्यक्कृतकारी स्यादुपक्रम्य कदाचन ।
कण्टको ह्यपि दुश्छिन्न आस्रावं जनयेच्चिरम् ।
वधमेव प्रशंसन्ति शत्रूणामपकारिणाम् । [20]
सुविदीर्णं सुविक्रान्तं सुयुद्धं सुपलायितम् ।
आपद्यापदि काले च कुर्वीत न विचारयेत् ।
नावज्ञेयो रिपुस्तात दुर्बलोऽपि कथंचन ।
अल्पोऽप्यग्निर्वनं कृत्स्नं दहत्याश्रयसंश्रयात् ।
अन्धः स्यादन्धवेलायां बाधिर्यमपि चाश्रयेत् । [25]
कुर्यात्तृणमयं चापं शयीत मृगशायिकाम् ।
सान्त्वादिभिरुपायैस्तु हन्याच्छत्रुं वशे स्थितम् ।
दया तस्मिन्न कर्तव्या शरणागत इत्युत ।
निरुद्विग्नो हि भवति न हताज्जायते भयम् ।
हन्यादमित्रं दानेन तथा पूर्वापकारिणम् । [30]
हन्यात्त्रीन्पञ्च सप्तेति परपक्षस्य सर्वशः ।
मूलमेवादितश्छिन्द्यात्परपक्षस्य नित्यशः ।
ततः सहायांस्तत्पक्षान्सर्वांश्च तदनन्तरम् ।
छिन्नमूले ह्यधिष्ठाने सर्वे तज्जीविनो हताः ।
कथं नु शाखास्तिष्ठेरंश्छिन्नमूले वनस्पतौ । [35]

---

D2 मनसाचक्ष्व कणिक. Dn करिष्ये वचनं तव; G (G5 om.) करिष्यामः कथं वयं. — After line 7, D5 S (except T1 G6) ins.:

वैशंपायनः ।
दुर्योधनोऽथ शकुनिः कर्णदुःशासनावपि ।
कणिङ्कमुपसंगम्य मन्त्रिणं सौबलस्य च ।
पप्रच्छुर्भरतश्रेष्ठ पाण्डवान्प्रति नैकधा ।
प्रवृद्धाः पाण्डवा ह्येते नित्यं तेभ्यस्त्रसाम्यहम् ।
अत्र मे सहपक्षस्य यद्भवेत्क्षेमकारकम् ।
कणिङ्क तत्त्वमाचक्ष्व करिष्यामः कथं वयम् ।

— (L. 8) S उपसन्नाय (T G5 उपपन्नाय; G1-4.6 संप्रपन्नाय) तस्मै स परिसृष्टार्थं(T1 G6 परिपृष्टार्थं-; G1.2 °पृष्टोर्थ-; G3 °पृष्टोसि)-चिंतया. — (L. 9) Da राजधर्मार्थदर्शनं; Dn राजशास्त्रार्थदर्शनं; D1 नीतिशास्त्र°; S (except T2 G4.5) °निदर्शनात्. — S (except T1) om. lines 10–11. — (L. 12) T2 G1.2.4.5 उद्यत°; G3.6 M च कृत° (for विवृत°). — T G1.2.4.5 ins. after line 12:

नित्यं च ब्राह्मणाः पूज्या नृपेण हितमिच्छता ।
स्रष्टो नृपो हि विप्रस्य पालने दुष्टनिग्रहे ।
उभाभ्यां वर्धते धर्मो धर्मवृध्या जितावुभौ ।
लोकश्चायं परश्चैव तस्माद्धर्मं समाचरेत् ।

— G6 om. lines 14–18. — (L. 15) S (G6 om.) भूतानि (for कार्याणि). K4 B1.2 D2 प्रसाधयेत्; S (G6 om.) अभिपालयेत् (for विधारयेत्). — After line 15, T G1.2.4.5 ins.:

कृतापराधं पुरुषं दृष्ट्वा यः क्षमते नृपः ।
तेनावमानमाप्नोति पापं चेह परत्र च ।
यो विभूतिमवाप्योच्चै राज्ञो विकुरुतेऽधमः ।
तमानयित्वा हत्वा च दद्याद्दीनाय तद्धनम् ।
नो चेद्धुरि नियुक्ता ये स्वास्यन्ति वशमात्मनः ।
राजा नियुञ्ज्यात्पुरुषानाप्तान्धर्मार्थकोविदान् ।
ये नियुक्तास्तथा केचिद्राष्ट्रं वा यदि वा पुरम् ।
ग्रामं जनपदं वापि बाधेयुर्यदि वा न वा ।
परीक्षणार्थं विसृजेदानतांश्छन्नरूपिणः ।
परीक्ष्य पापकं जह्याद्धनमादाय सर्वशः ।

— G3 M6-8 om. line 16. — Before line 19, G3.6 (om. line 1) ins.:

न श्रुत्वानक्षराजेन्द्र कर्तव्या हि कदाचन ।
न शत्रुपक्षादुत्पन्नो विमोक्तव्यः कथंचन ।

— (L. 19) S °को हि दुरुच्छिन्नः. — M3.5 om. lines 21–27; M6-8 om. lines 21–28. Ñ3 T2 G3-6 read lines 21–28 after line 35; G1.2 read lines 21–27 after line 35. — (L. 21) K4 B1.5 °चीर्णं; Ñ3 Da T1 °स्तीर्णं (for °दीर्णं). T2 G सुविक्रांतं सुविस्तीर्णं. T G (except G1.2) सुपलायनं. — (L. 22) T2 G आपदामथ (G3.4 °गम-) कालेषु कुर्यान्नात्र विचारणा. — After line 22, T G ins.:

कथं नु परियास्यामो न च ज्ञायामहे वयम् ।
दातृत्वेन गृहीताश्च न प्रयच्छेम कर्हिचित् ।

(cf. ins. in B5 after line 35). T2 G om. lines 23–24. — (L. 25) S (except T1) संश्रयेत्. — T2 G om. lines 27–28. — (L. 29) S हत्वा च रिपुमोजसा (for the posterior half). — (L. 30) S दंडेन (for दानेन). S (except T1) हन्यात् (for तथा). — (L. 33) S ततोस्यानंतरं पक्षाञ्छिन्द्यात्सर्वानशेषतः. — (L. 35) T2 G M3 तिष्ठेयुः; M6-8 जीवेयुः. — After line 35, Ñ3 T2 G3-6 read lines 21–28; G1.2, lines 21–27. — After line 35, B5 ins.:

कथंकारं शपामोऽन्यान्नावशायामहे कथम् ।
दातृत्वेन गृहीताश्च न प्रयच्छेम कस्यचित् ।

cf. ins. in T G after line 22. — M om. lines 36–42.

एकाग्रः स्यादविवृतो नित्यं विवरदर्शकः ।
राजन्राज्यं सपत्नेषु नित्योद्विग्नः समाचरेत् ।
अग्न्याधानेन यज्ञेन काषायेण जटाजिनैः ।
लोकान्विश्वासयित्वा च ततो लुम्पेद्यथा वृकः ।
अङ्कुशं शौचमित्याहुरर्थानामुपधारणे । [ 40 ]
आनाम्य फलिनीं शाखां पक्वं पक्वं प्रशातयेत् ।
फलार्थोऽयं समारम्भो लोके पुंसां विपश्चिताम् ।
वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः ।
ततः पर्यागते काले भिन्द्याद्घटमिवाश्मनि ।
अमित्रो न विमोक्तव्यः कृपणं बह्वपि ब्रुवन् । [ 45 ]
कृपा तस्मिन्न कर्तव्या हन्यादेवापकारिणम् ।
हन्यादमित्रं सान्त्वेन तथा दानेन वा पुनः ।
तथैव भेददण्डाभ्यां सर्वोपायैः प्रशातयेत् ।
धृतराष्ट्र उवाच ।
कथं सान्त्वेन दानेन भेदैर्दण्डेन वा पुनः ।
अमित्रः शक्यते हन्तुं तन्मे ब्रूहि यथातथम् । [ 50 ]
कणिक उवाच ।
शृणु राजन्यथा वृत्तं वने निवसतः पुरा ।
जम्बुकस्य महाराज नीतिशास्त्रार्थदर्शिनः ।
अथ कश्चित्कृतप्रज्ञः शृगालः स्वार्थपण्डितः ।
सखिभिर्न्यवसत्सार्धं व्याघ्राखुवृकबभ्रुभिः ।
तेऽपश्यन्विपिने तस्मिन्बलिनं मृगयूथपम् । [ 55 ]
अशक्ता ग्रहणे तस्य ततो मन्त्रममन्त्रयन् ।
जम्बुक उवाच ।
असकृद्यतितो ह्येष हन्तुं व्याघ्र वने त्वया ।
युवा वै जवसंपन्नो बुद्धिशाली न शक्यते ।
मूषिकोऽस्य शयानस्य चरणौ भक्षयत्वयम् ।
अथैनं भक्षितैः पादैर्व्याघ्रो गृह्णातु वै ततः । [ 60 ]
ततो वै भक्षयिष्यामः सर्वे मुदितमानसाः ।
कणिक उवाच ।
जम्बुकस्य तु तद्वाक्यं तथा चक्रुः समाहिताः ।
मूषिकाभक्षितैः पादैर्मृगं व्याघ्रोऽवधीत्तदा ।
दृष्ट्वा विचेष्टमानं तु भूमौ मृगकलेवरम् ।
स्नात्वागच्छत भद्रं वो रक्षामीत्याह जम्बुकः । [ 65 ]
शृगालवचनात्तेऽपि गताः सर्वे नदीं ततः ।
स चिन्तापरमो भूत्वा तस्थौ तत्रैव जम्बुकः ।
अथाजगाम पूर्वं तु स्नात्वा व्याघ्रो महाबलः ।
ददर्श जम्बुकं चैव चिन्ताकुलितमानसम् ।
व्याघ्र उवाच ।
किं शोचसि महाप्राज्ञ त्वं नो बुद्धिमतां वरः । [ 70 ]
अशित्वा पिशितान्यद्य विहरिष्यामहे वयम् ।
जम्बुक उवाच ।
शृणु मे त्वं महाबाहो यद्वाक्यं मूषिकोऽब्रवीत् ।
धिग्बलं मृगराजस्य मयाद्यायं मृगो हतः ।
मद्बाहुबलमाश्रित्य तृप्तिमद्य गमिष्यति ।
गर्जमानस्य तस्यैवमतो भक्ष्यं न रोचये । [ 75 ]
व्याघ्र उवाच ।
ब्रवीति यदि स ह्येवं काले ह्यस्मिन्प्रबोधितः ।
स्वबाहुबलमाश्रित्य हनिष्येऽहं वनेचरान् ।
खादिष्ये तत्र मांसानि इत्युक्त्वा प्रस्थितो वनम् ।

---

— (L. 36) $T_2$ G एकत्र चापि वसतो (G एकत्रापि वसंस्तात), and °दर्शनं (for °दर्शकः). — $Ñ_1$ om. lines 37–46. — (L. 37) $Ñ_3$ राजन्क्षत्रसपत्नेषु; $B_5$ राजा राज्यं स°; Dn राजन्नित्यं स°; $T_2$ G राजन्न ($G_{1.3.4}$ राजानः; $G_6$ राजन्ना) क्षत्रसंपन्नो. $K_4$ सदा भवेत्; $T_2$ G ततो भवेत् (for समा°). — (L. 39) $T_2$ G लोकं प्रस्थाप($G_3$ °क्षाल; $G_{2.6}$ °स्नाप)यित्वा च. — (L. 40) S उपपादने (for °धारणे). — (L. 41) $Ñ_{2.3}$ $V_1$ $B_1$ Dn फलितां. $Ñ_3$ $B_5$ $Dn_3$ $D_5$ फलं पक्वं; T G पक्त्वा पक्वं. — $T_2$ G om. line 42. — (L. 44) $Ñ_2$ Dn $T_1$ प्रत्यागते. $T_2$ G M ततः काल($T_2$ $G_{1.4.5}$ सार)मुपादाय. — (L. 45) $K_4$ $T_2$ $G_{3.5.6}$ अमित्रस्तु न मोक्तव्यः; $G_{1.2.4}$ अमित्रो न च मुच्येत; M °त्रो नास्य मुच्येत. — (L. 46) Some MSS. transp. तस्मिन् and न. $K_4$ दुःखं तस्य न कर्तव्यं; S दुःखमस्मिन्न कर्तव्यं. — (L. 48) S (except $T_1$) तथा भेदेन दंडेन. For प्रशातयेत्, MSS. °साध°, °पात°, °शांत°, °ताप°. — M om. lines 49–103! — (L. 49) $T_2$ G भेदैर्दंडैरथापि वा. — (L. 51) $T_2$ G वने वसति जंबुकः. — $T_2$ G om. lines 52–53. — (L. 54) $T_2$ G सखायस्तस्य व्याघ्रश्च वृको नकुलमूषिकौ. — (L. 55) G (except $G_1$) हि वने (for विपिने). — (L. 56) $T_2$ G अकुर्वंत (for अमन्त्रयन्). — (L. 59) $B_3$ $D_5$ S ($G_1$ om.) चरणान्. — (L. 60) $V_1$ B (except $B_6$) Da $D_5$ मृद्नातु (for गृह्णातु). $K_4$ $T_2$ $G_{2.5.6}$ ततो व्याघ्रः प्रधावतु; $G_{3.4}$ मृगं व्याघ्रो हनेत्तदा. — All MSS. except $Dn_3$ om. कणिक उ°. — (L. 63) $T_2$ G अहनत् (for अवधीत्). — $T_2$ G om. line 64. — (L. 64) Ñ Dn दृष्ट्वैवाचेष्ट°. — (L. 65) $T_2$ G रक्षामि मृगयूथपं. — After line 66, $V_1$ $B_{5.6}$ $D_{4.5}$ T G ins.:

संचिन्तयन्तो मनसा मांसतृप्तिं पुनः पुनः ।

— $V_1$ $B_6$ $D_4$ T G om. line 67. — (L. 68) $T_2$ G अथागच्छत्तु पूर्वं हि. — (L. 69) $V_1$ $B_6$ $D_{4.5}$ $T_2$ G जंबुकश्चाभवत्तत्र ($V_1$ $B_6$ $D_{4.5}$ आस्ते च जंबुकस्तत्र) तदा चिंतापरो (*or* °कुलो) नृप. — (L. 71) $T_2$ G पिशितस्याशितारोत्र वि° सुखम्. — (L. 72) T G महाप्राज्ञ. $T_2$ G यद्वचो ($G_{3.6}$ यां वाचं). — (L. 74) $T_2$ G तृप्तिर्यस्य भविष्यति. — (L. 75) $T_2$ G तस्यैवं गर्जितस्त्वद्य ($T_2$ $G_{1.5}$ गदतस्त्वद्य) ततो etc. — (L. 76) $T_2$ G ($G_2$ om.) यद्येवमब्रवीत्तस्मात्काले चास्म्यवबो°. — (L. 77)

एतस्मिन्नेव काले तु मूषिकोऽप्याजगाम ह ।
तमागतमभिप्रेक्ष्य शृगालोऽप्यब्रवीद्वचः । [ 80 ]

जम्बुक उवाच ।

शृणु मूषिक भद्रं ते नकुलो यदिहाब्रवीत् ।
मृगमांसं न खादेयं गरमेतन्न रोचते ।
मूषिकं भक्षयिष्यामि तद्भवाननुमन्यताम् ।
तच्छ्रुत्वा मूषिको वाक्यं संत्रस्तः प्राद्रवद्भयात् ।
ततः स्नात्वा स वै तत्र आजगाम वृको नृप । [ 85 ]
तमागतमिदं वाक्यमब्रवीज्जम्बुकस्तदा ।
मृगराजो हि संक्रुद्धो न ते साधु भविष्यति ।
सकलत्रस्त्विहायाति कुरुष्व यदनन्तरम् ।
एवं संचोदितस्तेन जम्बुकेन तदा वृकः ।
वृकावलुम्पनं कृत्वा प्रयातः पिशिताशनः । [ 90 ]
एतस्मिन्नेव काले तु नकुलोऽप्याजगाम ह ।
तमुवाच महाराज नकुलं जम्बुको वने ।
स्वबाहुबलमाश्रित्य निर्जितास्तेऽन्यतो गताः ।
मम दत्त्वा नियुद्धं त्वं भुङ्क्ष्व मांसं यथेप्सितम् ।

नकुल उवाच ।

मृगराजो वृकश्चैव बुद्धिमानपि मूषिकः । [ 95 ]
निर्जिता यत्त्वया वीरास्तस्माद्वीरतरो भवान् ।
न त्वयाभ्युत्सहे योद्धुमित्युक्त्वा सोऽप्युपागमत् ।

कणिक उवाच ।

एवं तेषु प्रयातेषु जम्बुको हृष्टमानसः ।
खादति स्म तदा मांसमेकः सन्मन्त्रनिश्चयात् ।
एवं समाचरन्नित्यं सुखमेधति भूमिपः । [ 100 ]
भयेन भेदयेद्भीरुं शूरमञ्जलिकर्मणा ।
लुब्धमर्थप्रदानेन समं न्यूनं तथौजसा ।
एवं ते कथितं राजञ्शृणु चाप्यपरं तथा ।
पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः ।
रिपुस्थानेषु वर्तन्तः कर्तव्या भूतिवर्धनाः । [ 105 ]
शपथेनाप्यरिं हन्यादर्थदानेन वा पुनः ।
विषेण मायया वापि नोपेक्षेत कथंचन ।
उभौ चेत्संशयोपेतौ श्रद्धावांस्तत्र वर्धते ।
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम् । [ 110 ]
क्रुद्धोऽप्यक्रुद्धरूपः स्यात्स्मितपूर्वाभिभाषिता ।
न चाप्यन्यमपध्वंसेत्कदाचित्कोपसंयुतः ।
प्रहरिष्यन्प्रियं ब्रूयात्प्रहरन्नपि भारत ।
प्रहृत्य च कृपायीत शोचेत च रुदेत च ।
आश्वासयेच्चापि परं सान्त्वधर्मार्थवृत्तिभिः । [ 115 ]
अथास्य प्रहरेत्काले यदा विचलिते पथि ।
अपि घोरापराधस्य धर्ममाश्रित्य तिष्ठतः ।

---

T2 G हनिष्यामि. — (L. 78) T2 G खादिष्यामि तु मांसा°. — After line 79, G3 ins.:

वध्यस्य मूषिकस्येति नकुलायाब्रवीद्वचः ।

— (L. 80) Om. in Ñ3 T2 G. Ñ2.3 Dn D5 °प्रेत्य. — (L. 82) B1.6 D2 T1 शवं (for गरं). V1 B3 Da रोचये. T2 G कथमसद्विधस्य तत् (for the posterior half). — (L. 84) Ñ2 Da Dn D1 °स्तः प्रगतो (Da °ययौ) बिलं. — (L. 85) T2 G ततः स्नातस्तदा तत्र त्वाज°. — T2 G (except G1.2) om. line 86. — (L. 87) T2 G °द्धो न नः साधु करिष्यति. — (L. 90) K4 वृकोप्यनशनं कृ°; Ñ1.2 V1 Dn D3.4.5 ततोवलुंपनं कृ°; Ñ3 वृकोदरमलं कृ°; T G भीतो(T1 वृको)वलिप्तं कृत्वाथ. — (L. 92) T2 G ततो राजन् (for महाराज). — (L. 93) T2 G1.3.4.5 °स्ते मया हताः; G3.6 °स्ते समागताः. — (L. 97) K4 न त्वया उत्स°; Ñ V1 B3 Da Dn D1 T1 न त्वयाप्युत्स°; D2 न तेहमुत्स°; G1.3.6 नाहमप्युत्स°; G2 न ह्यहं ह्युत्स°; G4 न त्वहं ह्युत्स°; G5 न त्वामभ्यु°. K4 D1.4.5 °क्त्वा सोप्युपाक्रमत्; B1.5 °क्त्वा सावपाग°; T2 G °क्त्वा गां विवेश ह. — (L. 98) B1.5 T2 G तेष्वपयातेषु. — (L. 99) T2 G (except G3.6) इत्येवं मंत्रनिश्चयात्. — G6 om. lines 100–102. — (L. 100) Om. in T G1–5. Ñ1.2 V1 Dn D1 पधेत. Dn भूपतिः. — (L. 102) T2 G (G6 om.) सख्येनैव समौजसं (for the posterior half). — (L. 103) T2 G1.2.4.5 मम; G3.6 नृप (for तथा). — (L. 104) S (except G3.6) यदि पुत्रो यदि पिता यदि भ्राता सखा यदि. — (L. 105) S (except T1) अर्थे (G1 M नात्र) पर्यवतिष्ठेरन्. K4 Ñ V1 B1m D3.4.5 T G1.4.5 हंतव्या. K4 Ñ V1 B1m Dn1 D2.4.5 T1 भूतिमिच्छता; B3.5.6 Da G1.6 भूमिवर्धनाः; T2 G3.4 M3.5 भूरिवर्धनाः. — (L. 106) S (except T1) °रिं हन्यान्न दोष इति भार्गवः. — S (except T1) om. line 107. — (L. 108) Om. in Ñ2 B3.6 Da D4.5. S (except T1) उभावपि शपेयातां श्रद्धधानस्तु वध्यते (M6–8 हीयते). — (L. 110) T2 G1.4–6 M6–8 दंडो; G3 M3.5 कार्यं (for न्याय्यं). T2 G1.4–6 शोभनः; M6–8 शासनः. — (L. 111) T1 G6 M शुद्धः; T2 शक्यं; G1 शक्तया; G2 सख्यः; G3–5 शक्यः (for स्मित-). — (L. 112) K4 Ñ3 V1 B6 न चाप्यन्यायविध्वस्तं; S न चैनं क्रोधसंदीप्तं. K4 Ñ3 V1 B6 D4.5 विद्याच्च कृपयान्वितः; S विद्यात्कश्चित्कथंचन. — (L. 114) Ñ3 कृपोपेतः; T1 M कृपा येन; T2 G1.2.4.5 प्रियं ब्रूयात्. S शोचन्निव रुदन्निव. — (L. 115) Ñ2 V1 B3.5 Da T1 सांत्वदानार्थ°; T2 G1.2.4.5 सामदानार्थ°; M साम्ना धर्मा°. — (L. 116) B3.6 Da आश्वास्य; T1 G3.6 अथ तं; T2 G1.2.4.5 तदा तं; M ततस्तं (for अथास्य). K4 Ñ3 V1 B3.5 D2 विचरते; Ñ1 Da D1 विचलते; S विचलितः. — (L. 117) T1 M अपकारापराद्धस्य. — (L. 118) K4 T2 G1.2.4.5 अपि; G3.6 M अभि- (for स हि). T2 G1.2.4.5

स हि प्रच्छाद्यते दोषः शैलो मेघैरिवासितैः ।
यः स्यादनुप्राप्तवधस्तस्यागारं प्रदीपयेत् ।
अधनान्दाम्भिकांश्चोरान्विषये स्वे न वासयेत् । [ 120 ]
प्रत्युत्थानासनाद्येन संप्रदानेन केनचित् ।
प्रतिविश्रब्धघाती स्यात्तीक्ष्णदंष्ट्रो निमग्नकः ।
अशङ्कितेभ्यः शङ्केत शङ्कितेभ्यश्च सर्वशः ।
अशङ्क्याद्भयमुत्पन्नमपि मूलं निकृन्तति ।
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् । [ 125 ]
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ।
चारः सुविहितः कार्य आत्मनश्च परस्य च ।
पाषण्डांस्तापसादींश्च परराष्ट्रेषु योजयेत् ।
उद्यानेषु विहारेषु देवतायतनेषु च ।
पानागारेषु रथ्यासु सर्वतीर्थेषु चाप्यथ । [ 130 ]
चत्वरेषु च यूतेषु पर्वतेषु वनेषु च ।
समवायेषु सर्वेषु सरित्सु च विचारयेत् ।
वाचा भृशं विनीतः स्याद्धृदयेन तथा क्षुरः ।
श्लक्ष्णपूर्वाभिभाषी स्यात्सृष्टो रौद्रेण कर्मणा ।
अञ्जलिं शपथं सान्त्वं शिरसा पादवन्दनम् । [ 135 ]
आशाकरणमित्येकं कर्तव्यं भूतिमिच्छता ।
सुपुष्पितः स्यादफलः फलवान्स्याद्दुरारुहः ।
आमः स्यात्पक्वसंकाशो न च जीर्येत कर्हिचित् ।
त्रिवर्गे त्रिविधा पीडा अनुबन्धास्तथैव च ।
अनुबन्धाः शुभा ज्ञेयाः पीडास्तु परिवर्जयेत् । [ 140 ]
धर्मं विचरतः पीडा सापि द्वाभ्यां नियच्छति ।
अर्थः स्यादर्थलुब्धस्य कामस्यातिप्रवर्तिनः ।
अगर्वितात्मा युक्तश्च सान्त्वयुक्तोऽनसूयिता ।
अवेक्षितार्थः शुद्धात्मा मन्त्रयीत द्विजैः सह ।
कर्मणा येन तेनेह मृदुना दारुणेन वा । [ 145 ]
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ।
न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ।
यस्य बुद्धिः परिभवेत्तमतीतेन सान्त्वयेत् ।
अनागतेन दुर्बुद्धिं प्रत्युत्पन्नेन पण्डितम् । [ 150 ]
योऽरिणा सह संधाय शयीत कृतकृत्यवत् ।
स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते ।
मन्त्रसंवरणे यत्नः सदा कार्योऽनसूयता ।

---

घनैरर्क (for शैलो मेघैर्). — M om. lines 119–20. — (L. 119) T2 G यस्य स्यात्तु वधः प्राप्तस्तस्यागारोपदीपनं. — (L. 120) Ñ3 B (except B6) Dn T2 नास्तिकान्; T2 G भिक्षुकान् (for दाम्भिकान्). T G विपकर्मस्तु योजयेत्. — (L. 121) S (except T1 G3.6) प्रत्युत्थानाभिवादाभ्यां. — (L. 122) S प्रतिप्रच्छन्नघाती. D5 S °दंष्ट्र इवोरगः. — (L. 123) B6 D1.5 S (except T1 G3.6) अशंकिताच्च. S (except T1 G3.6) नित्यं शंकेत शंकितात्. — (L. 124) T2 G (except G3.6) शंकिताद्भयमुत्पन्नं समूलमपि कृंतति. — (L. 126) S (except T1) आप्नोति (for उत्पन्नं). S (except T1) तस्मात् सर्वत्र नाश्वसेत् (G1–4 सर्वांत्र विश्वसेत्). — (L. 127) B1.3 T2 G1.2.4.5 चारस्तु (B1.3 °रः सु-) विदितः का°; G3.6 चारास्तु विदिताः कार्याः; M (except M5) चारैः सुविन्तं यत्कार्यं. — (L. 128) T2 G1.2.4.5 M पापंडादीनविज्ञातान्; G3.6 पापंडब्राह्मणादींश्च. — After line 128, T G (except G3.6) ins.:

स्वराष्ट्रे विदितांश्चारान्परीक्षार्थे मुहुर्मुहुः ।
स्वकीयान्वीरदोषेषु रक्षार्थं विसर्जेन्नृपः ।

— (L. 130) Ñ1 V1 B Da D2.4 वेश्यासु; T2 G1–5 देशेषु; M वा राजन्. S (except T1) चत्वरेषु सभासु च. — (L. 131) Ñ1.2 Dn D1 कूपेषु (for यूतेषु). T2 G1.2.4.5 M द्यूतेषु जनपातेषु (M °वादेषु); G3.6 ब्राह्मणायतने द्यूते. — (L. 132) S (except T1) तीर्थेषु (for सर्वेषु). — (L. 134) Ñ3 V1 B3.6 Dn D1.2.4.5 T1 सित-; T2 G1.2.4.5 M मृदु-; G3.6 शुद्धं (for श्लक्ष्ण-). B3 Da S रौद्राय कर्मणे. — Ñ1 om. lines 135–146. — (L. 135) K4 Ñ2.3 V1 B1 Dn D1.5 अंजलिः शपथः. — (L. 136) T2 G1.4.5 अत्र; G3.3.6 M एतत् (for एवं). — (L. 137) M पुष्पितः स्यादनारूढो. S दुरारोहः फलान्वितः. — (L. 138) S (except T1) कस्यचित्. — (L. 140) S °बंधांस्तु सेवेत. — (L. 141) S (except T1) धर्मोतिचरितः पीडां सह द्वा°. — (L. 142) Ñ2 B1 m.3 Dn3 G2 M3.5 अर्थं चाप्यर्थं°; Da Dn2 D2 T2 G3–6 M6–8 अर्थश्चाप्य(Da °ल)र्थं°. Ñ2 B1 m.3 Dn3 कामं चातिप्र°; S कामश्चातिप्रसंगिनः. — (L. 143) S (except T1 G3.6) सांत्वशीलेन चोज्वलः (M °लोन्वपेक्षिता). — (L. 144) S मंत्रयेत्तद्विधैः (T2 G3.6 °येत द्विजैः; M6–8 °येद्विविधैः) सह. — (L. 145) Ñ3 V1 Dn1.n3 तेनैव; Dn3 T G1.2.4.5 M केनैव (केनापि *or* केनेह). G3.6 मृदुना केनचिद्राजन्कर्मणा दा°. — (L. 146) S (except T1 G3.6) पश्चाद्धर्मं समाचरेत्. — (L. 147) T2 G (except G3.6) असंशयन्. K4 Ñ1.2 Dn D1.2 S अनारुह्य (G1.2.4.5 अथारुह्य). — (L. 148) T2 G1.2.4.5 वा न वा (for पश्यति). — (L. 149) T2 G1 यः सुबुद्धिं; G2.4 यं सुबुध्या; G3 M6–8 यः स्वबुद्धिं; G5 ऋजुबुद्धिं. G6 बुद्धिं परिभवेत्तस्मादतीतेन हि सां°. — (L. 151) G3.6 वैरिणा संधिमास्थाय. — (L. 152) S (except T1) पतनेन (G3 M °न्नेव) प्रबुध्यते. — T2 G1.2.4.5 ins. after line 153:

न रात्रौ मन्त्रयेद्विद्वान्न च कैश्चिदुपासितः ।
प्रासादाग्रे शिलाग्रे वा विशाले विजनेऽपि वा ।
समन्तात्तत्र पश्यद्भिः सहामात्यैरेव मन्त्रयेत् ।
नैव संवेशयेत्तत्र मन्त्रवेश्मनि शारिकान् ।
शुकान्वा शारिका वापि बालमूर्खजडानपि । [5]

आकारश्चात्मनो रक्ष्यश्चारेणाप्यनुपालितः ।
नाच्छित्वा परमर्माणि नाकृत्वा कर्म दारुणम् । [ 155 ]
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ।
कर्शितं व्याधितं क्लिन्नमपानीयमघासकम् ।
परिविश्वस्तमन्दं च प्रहर्तव्यमरेर्बलम् ।
नार्थिकोऽर्थिनमभ्येति कृतार्थे नास्ति संगतम् ।
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् । [ 160 ]
संग्रहे विग्रहे चैव यत्नः कार्योऽनसूयता ।
उत्साहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ।
नास्य कृत्यानि बुध्येरन्मित्राणि रिपवस्तथा ।
आरब्धान्येव पश्येरन्सुपर्यवसितानि च ।
भीतवत्संविधातव्यं यावद्भयमनागतम् । [ 165 ]
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ।
दण्डेनोपनतं शत्रुमनुगृह्णाति यो नरः ।
स मृत्युमुपगृह्यास्ते गर्भमश्वतरी यथा ।
अनागतं हि बुध्येत यच्च कार्यं पुरः स्थितम् ।
न तु बुद्धिक्षयात्किंचिदतिक्रामेत्प्रयोजनम् । [ 170 ]
उत्साहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ।

विभज्य देशकालौ च दैवं धर्मादयस्त्रयः ।
नैःश्रेयसौ तु तौ ज्ञेयौ देशकालाविति स्थितिः ।
तालवत्कुरुते मूलं बालः शत्रुरुपेक्षितः ।
गहनेऽग्निरिवोत्सृष्टः क्षिप्रं संजायते महान् । [ 175 ]
अग्निं स्तोकमिवात्मानं संधुक्षयति यो नरः ।
स वर्धमानो ग्रसते महान्तमपि संचयम् ।
आशां कालवतीं कुर्यात्कालं विघ्नेन योजयेत् ।
विघ्नं निमित्ततो ब्रूयान्निमित्तं चापि हेतुतः ।
क्षुरो भूत्वा हरेत्प्राणान्निशितः कालसाधनः । [ 180 ]
प्रतिच्छन्नो लोमवाही द्विषतां परिकर्तनः ।
पाण्डवेषु यथान्यायमन्येषु च कुरूद्वह ।
वर्तमानो न मज्जेस्त्वं तथा कृत्यं समाचर ।
सर्वकल्याणसंपन्नो विशिष्ट इति निश्चयः ।
तस्मात्त्वं पाण्डुपुत्रेभ्यो रक्षात्मानं नराधिप । [ 185 ]
भ्रातृभ्यो बलिनो यस्मात्पाण्डुपुत्रा नराधिप ।
ब्रवीमि तस्माद्विस्पष्टं यत्कर्तव्यमरिंदम ।
सपुत्रः शृणु तद्राजञ्श्रुत्वा च भव यत्नवान् ।
यथा भयं न पाण्डुभ्यस्तथा कुरु नराधिप ।

---

प्रविष्टानपि निर्वास्य मन्त्रयेद्धार्मिकैर्द्विजैः ।
नीतिज्ञैर्न्यायशास्त्रज्ञैरितिहासे सुनिष्ठितैः ।
रक्षां मन्त्रस्य निश्छिद्रां मन्त्रान्ते निश्चयेत्स्वयम् ।
वीरोपवर्णितात्तस्माद्धर्मार्थाभ्यामथात्मना ।
एकेन वाथ विप्रेण ज्ञातबुद्धिर्विनिश्चयेत् । [10]
तृतीयेन न चान्येन व्रजेन्निश्चयमात्मवान् ।
षट्कर्णो भिद्यते मन्त्र इति नीतिषु पठ्यते ।
निःसृतो नाशयेन्मन्त्रो हस्तप्राप्तामपि श्रियम् ।
स्वमतं च परेषां च विचार्य च पुनः पुनः ।
गुणवद्वाक्यमादद्यान्नैव कुप्येद्विचक्षणः । [15]

— (L. 154) Ñ$_{1.2}$ Dn $D_1$ $T_1$ आकारमभिरक्षेत; $T_2$ G (except $G_{3.6}$) M °रं चात्मनो रक्ष्यं. $T_2$ G (except $G_{3.6}$) चारयोग्यं च सर्वदा; M विवृतं कार्यनाशनं. — (L. 155) S (except $T_1$) दुष्करं (for दारुणं). — (L. 156) $G_{1.4.5}$ प्राप्नोति महतीं लक्ष्मीं नाहत्वा मत्स्यबंधनात्. — (L. 157) S (except $T_1$ $G_{1.3.6}$) तृषितं (for व्याधितं). $T_2$ $G_{2-4}$ शांतं; $G_{1.5.6}$ M श्रांतं (for क्लिन्नं). $T_2$ $G_{1.2.4.5}$ M विपरीतम् (for अपानीयम्). $K_4$ S (except $T_1$) अनायकं (for अघा°). — (L. 158) $K_4$ Ñ$_1$ $V_1$ T G °स्तमल्पं च; $B_{1.3.5}$ °स्तमार्तं च; Da °स्तमत्तं च; $D_2$ मत्तं च परिविश्वस्तं; M °स्तकल्पं च. S रिपोर् (for अरेर्). — (L. 159) T G नानर्थकेर्थबंधोस्ति. M न हि कश्चित्कृते कार्ये कर्तारं समवेक्षते. — After line 159, $K_4$ ins.:

अनागतं तु तत्सर्वं प्रयत्नेन विचारयेत् ।

— (L. 160) Dn $D_{1.3}$ $T_1$ साध्यानि (for कार्याणि). — (L. 161) $T_2$ G निग्रहे (for वि°). — (L. 162) S वि($T_1$ सं)ग्रहः काल्युक्तश्च. — (L. 167) T G दैवेन (for दण्डेन). $K_4$ $B_3$ T G उपहतं; $N_3$ उपहितं; $V_1$ उपगतं. $T_2$ G सं($G_{3.6}$ प्र) गृह्णाति यदा नृपः. — (L. 168) $K_4$ T G उपगृह्णाति; Ñ$_{1.2}$ $V_1$ Dn $D_{1.4.5}$ उपगृह्णीयाद्. — (L. 169) $K_4$ $T_2$ G उपस्थितं. — (L. 170) $K_4$ S अतिक्रांतमपेक्षयेत् ($T_1$ $G_{1.3.6}$ °मवेक्ष्यते; $M_{3.6-8}$ °मवेक्षयेत्; $M_5$ °मुपेक्षयेत्). — S (except $T_1$) om. line 171, which is a repetition of 162 (*q. v.*) — (L. 172) S सेव्या (for दैवं). — (L. 173) S निःश्रेयसौ हि तौ ज्ञेयाविह चामुत्र च स्थितौ. — (L. 174) S बलवत्कुरुते रूपं बाल्याच्छत्रुरु°. — (L. 175) $T_2$ $G_{1.2.4.5}$ संपद्यते; M °दह्यते. — (L. 176) S पंडितः (for यो नरः). — After line 177, S ins.:

आदावेव ददानीति प्रियं ब्रूयान्निरर्थकम् ।
[ $T_1$ M आदातव्यं न दातव्यं. ]

— (L. 180) $T_2$ G दहन्नेव; M दशन्नेव (for हरेत्प्राणान्). $T_2$ $G_{3.5.6}$ कटुवारितः; $G_1$ कालसारतं; $G_{2.4}$ M कटुकायनः. — (L. 181) Dn लोमहारी. G (except $G_4$) M प्रच्छन्नो रोमवापी (M °घाती) स्यात्. M द्विषतामपकारिणां. — (L. 182) S पांडवांश्च तथा राजन्नन्यांश्चापि कुरून्प्रति. — (L. 184) Om. in T $G_{2.4.5}$ M. $G_{1.3.6}$ न हि कुर्यात्समुत्सन्नान्विनष्टा इति निश्चयं. — (L. 185) G (except $G_{3.6}$) M विशेषतः (for नरा°). — (L. 186) Ñ$_3$ Dn $D_{1.2}$ S भ्रातृभ्या. S (except $T_1$) बलवंतस्ते (for बलिनो यस्मात्). — Dn om. lines 187–9; Ñ$_3$ $D_6$ S (except $T_1$) om. 188–9; S (except $T_1$) om.

पश्चात्तापो यथा न स्यात्तथा नीतिर्विधीयताम् । [190]
वैशंपायन उवाच ।
एवमुक्त्वा संप्रतस्थे कणिकः स्वगृहं ततः ।
धृतराष्ट्रोऽपि कौरव्यः शोकार्तः समपद्यत ।

Colophon.

K4 Ñ V1 B D T1 cont.:

वैशंपायन उवाच ।
ततः सुबलपुत्रस्तु राजा दुर्योधनश्च ह ।
दुःशासनश्च कर्णश्च दुष्टं मन्त्रममन्त्रयन् ।
ते कौरव्यमनुज्ञाप्य धृतराष्ट्रं नराधिपम् । [195]
दहने तु सपुत्रायाः कुन्त्या बुद्धिमकारयन् ।
तेषामिङ्गितभावज्ञो विदुरस्तत्त्वदर्शिवान् ।
आकारेणैव तं मन्त्रं बुबुधे दुष्टचेतसाम् ।
ततो विदितवेद्यात्मा पाण्डवानां हिते रतः ।
पलायने मतिं चक्रे कुन्त्याः पुत्रैः सहानघः । [200]
ततो वातसहां नावं यन्त्रयुक्तां पताकिनीम् ।
ऊर्मिक्षमां दृढां कृत्वा कुन्तीमिदमुवाच ह ।
एष जातः कुलस्यास्य कीर्तिवंशप्रणाशनः ।
धृतराष्ट्रः परीतात्मा धर्मं त्यजति शाश्वतम् ।
इयं वारिपथे युक्ता तरङ्गपवनक्षमा । [205]
नौर्यया मृत्युपाशात्त्वं सपुत्रा मोक्ष्यसे शुभे ।
तच्छ्रुत्वा व्यथिता कुन्ती पुत्रैः सह यशस्विनी ।
नावमारुह्य गङ्गायां प्रययौ भरतर्षभ ।
ततो विदुरवाक्येन नावं विक्षिप्य पाण्डवाः ।
धनं चादाय तैर्दत्तमरिष्टं प्राविशन्वनम् । [210]
निषादी पञ्चपुत्रा तु जातुषे तत्र वेश्मनि ।
कारणाभ्यागता दग्धा सह पुत्रैरनागसा ।
स च म्लेच्छाधमः पापो दग्धस्तत्र पुरोचनः ।
वञ्चिताश्च दुरात्मानो धार्तराष्ट्राः सहानुगाः ।
अविज्ञाता महात्मानो जनानामक्षतास्तथा । [215]
जनन्या सह कौन्तेया मुक्ता विदुरमन्त्रितात् ।
ततस्तस्मिन्पुरे लोका नगरे वारणावते ।
दृष्ट्वा जतुगृहं दग्धमन्वशोचन्त दुःखिताः ।
प्रेषयामासू राज्ञे च यथावृत्तं निवेदितुम् ।
संवृत्तस्ते महान्कामः पाण्डवान्दग्धवानसि । [220]
सकामो भव कौरव्य भुङ्क्ष्व राज्यं सपुत्रकः ।
तच्छ्रुत्वा धृतराष्ट्रश्च सह पुत्रेण शोचयन् ।
प्रेतकार्याणि च तथा चकार सह बान्धवैः ।
पाण्डवानां तथा क्षत्ता भीष्मश्च कुरुसत्तमः ।
जनमेजय उवाच ।
पुनर्विस्तरशः श्रोतुमिच्छामि द्विजसत्तम । [225]
दाहं जतुगृहस्यैवं पाण्डवानां च मोक्षणम् ।
सुनृशंसमिदं कर्म तेषां क्रूरोपसंहितम् ।
कीर्तयस्व यथावृत्तं परं कौतूहलं मम ।
वैशंपायन उवाच ।
शृणु विस्तरशो राजन्ब्रुवतो मे परंतप ।
दाहं जतुगृहस्यैतत्पाण्डवानां च मोक्षणम् । [230]

82

S (except G3,6) ins. after 1444*: D4 (om. lines 21–36), after passage No. 81 above (cf. v. l. 1. 130. 1):

धृतराष्ट्रस्तु वचनं श्रुत्वा सुमहदप्रियम् ।
उवाच मतिमान्वाक्यं दुर्योधनमरिंदमम् ।
जात्यन्धश्चाप्यहं तात पाण्डुना पूजितो भृशम् ।
राजानो यद्यपि श्रेष्ठा धर्महेतोर्भवन्ति हि ।
प्रज्ञाचक्षुरनेत्रत्वादशक्तो राष्ट्रगोपने । [5]
न चान्धः परचक्राणि प्रतिव्यूहति संगरे ।
अर्थशास्त्रं मयाधीतं साङ्गा वेदाश्च पुत्रक ।
धार्तराष्ट्र स्वयं राज्ञा योद्धव्यं धर्मकाङ्क्षिणा ।
रणे च मृत्युः स्वर्गाय राजन्यस्य विधीयते ।
पुत्रसंक्रामितश्रीर्वा वासाय वनमाश्रयेत् । [10]
ज्येष्ठोऽयमिति राज्ये च स्थापितो विकलोऽपि सन् ।
निर्जित्य परराष्ट्राणि पाण्डुर्मह्यं न्यवेदयत् ।
कुलधर्मस्थापनाय ज्येष्ठोऽहं ज्येष्ठभाक् च ।
बहूनां भ्रातृणां (!) मध्ये श्रेष्ठो ज्येष्ठो हि श्रेयसा ।

---

190. — (L. 192) T2 G1,2,4,5 M तदा (M ततो) दुर्योधनो राजा; G3,6 तदा सपुत्रो राजा च. — Colophon. *Adhy. no.:* B1 T1 137; Dn2,n3 139; T2 G3 86; G1,2,6 88; G5 87; G4 M 85. — *S'loka no.:* Dn2 5635. — (L. 229) Dn D1,5 T1 वदतो (for ब्रुवतो).

82

(L. 3) M (except M5) पूर्वं (for तात). — (L. 8) D4 M धर्मकारणात्. — (L. 10) D4 M तपसे (for वासाय). T2 G1,2,4,5 om. lines 13–16. — (L. 13) M3,5 धर्मसंस्थापनार्थाय; M3(*inf. lin.*),6–8 °धर्मं समास्थातुं. — (L. 18) D4 M लोकद्वयहितैषिणः (for the posterior half). — (L. 19) D4 M धर्मे च प्रसवे चैव ज्येष्ठाः पांडुसुतास्तदा. — M om. lines 20–21, and after line 23 ins.:

ततः शांतनवो भीष्मः सत्यवाग्दृढविक्रमः ।
पूर्वमुक्त्वा तथा वाचं नाथ राज्यं ग्रहीष्यति ।
विदुरः करणत्वाच्च पाण्डवस्त्वभिषिच्यताम् ।

— (L. 24) Cf. 1. 129. 7. G1,2 M पांडवज्येष्ठं. — Lines 26–27 = 1438*. Lines 28–29 = (var.) 1. 129. 8. — L. 35 = (var.) 1. 130. 15[cd].

कनीयानपि स ज्येष्ठः श्रेष्ठः श्रेयान्कुलस्य वै । [ 15 ]
तस्माज्ज्येष्ठश्च श्रेष्ठश्च पाण्डुर्धर्मभृतां वरः ।
तस्य पुत्रा गुणैः ख्याता अर्थे च कृतनिश्चयाः ।
कृतास्त्रा लब्धलक्षाश्च पाण्डुपुत्रा महारथाः ।
धर्मे च नीतिशास्त्रे च तथा च निरताः सदा ।
पौरजानपदानां च प्रीतिरेषु विशेषतः । [ 20 ]
कथं नामोत्सहे वत्स नगराच्च विवासितुम् ।

दुर्योधनः ।

पौरजानपदैः सार्धं विप्रा जल्पन्ति नित्यशः ।
प्रज्ञाचक्षुरनेत्रत्वादशक्तो राज्यरक्षणे ।
ते वयं पाण्डवश्रेष्ठं तरुणं वृद्धशीलिनम् ।
राजानमभिषिञ्चामः सत्यं करुणवेदिनम् । [ 25 ]
स हि वृद्धानमात्यांश्च ज्ञातींश्चापि महायशाः ।
सत्कृत्य नित्यं पूजार्हान्पाण्डवः पूजयिष्यति ।
पितामहं शांतनवं धृतराष्ट्रं च धर्मतः ।
सपुत्रं विविधैर्भोगैर्वासयिष्यति मानितः ।
इत्येवं विलपन्ति स्म वदन्ति च जना मुहुः । [ 30 ]
राजन्दुःखशताविष्टाः पौराः शतसहस्रशः ।
तेषां श्रुत्वा तु वाक्यानि पौराणामशिवानि च ।
युधिष्ठिरानुरक्तानां परितप्स्यामि भारत ।
धृतराष्ट्रस्तु पुत्रस्य श्रुत्वा वाक्यमुवाच ह ।
यथा न वाच्यतां पुत्र गच्छेम च तथा कुरु । [ 35 ]

वैशंपायनः ।

एवं तस्य वचः श्रुत्वा प्रविश्य च गृहं महत् ।

☞ In M the above passage is followed by adhy. 129–130; in T2 G2.4.5 by a *repetition* (with v. l.) of the same two adhy. (for the text of the repetition of adhy. 129, see under No. 83 below); and finally, in G1 by adhy. 131! See the conspectus of interpolations on p. 573.

## 83

☞ There is a slight confusion in the notes on page 573 as regards the *repetition* of adhy. 129–130 in T2 G2.4.5, to which attention must be drawn here. The v. l. given under adhy. 129–130 of the constituted text are for the first occurrence of adhy. 129 and for the second occurrence of adhy. 130; accordingly the texts given *here*, in this App. are that of the first occurrence of 130 and the second occurrence of 129.

T2 G2.4.5 ins. after (the *first* occurrence of) adhy. 129 a passage which is a repetition (with v. l.) of adhy. 130 (see conspectus on p. 573):

वैशंपायनः ।

धृतराष्ट्रस्तु पुत्रस्य श्रुत्वा वचनमीदृशम् ।
मुहूर्तमिव संचिन्त्य दुर्योधनमथाब्रवीत् ।

धृतराष्ट्रः ।

धर्मवृत्तः सदा पाण्डुः सुवृत्तो मयि गौरवात् ।
सर्वेषु ज्ञातिषु तथा मदीयेषु विशेषतः ।
नास्य किंचन जानाति भोजनानि चिकीर्षति । [ 5 ]
निवेदयति धर्मस्थो मयि धर्मभृतां वरः ।
तस्य पुत्रो यथा पाण्डुस्तदा धर्मपरः सदा ।
गुणवाँल्लोकविख्यातो नगरे च प्रतिष्ठितः ।
स कथं शक्यतेऽस्माभिरपकृष्टुं नरर्षभ ।
राज्यमेष हि नः प्राप्तः ससहायो विशेषतः । [ 10 ]
भ्रातृभिः पाण्डुनामात्यं बलं च सततं धृतम् ।
धृताः पुत्राश्च पौत्राश्च तेषामपि विशेषतः ।
ते तथा सत्कृतास्तात विषये पाण्डुना नराः ।
कथं युधिष्ठिरस्यार्थे न नो हन्युः सबान्धवान् ।
नैते विषयमिच्छेयुर्धर्मत्यागे विशेषतः । [ 15 ]
ते वयं कौरवेयाणामेतेषां च महात्मनाम् ।
कथं न वाच्यतां तात गच्छेम जगतस्तथा ।

दुर्योधनः ।

मध्यस्थः सततं भीष्मो द्रोणपुत्रो मयि स्थितः ।
यतः पुत्रस्ततो द्रोणो भविता नात्र संशयः ।
कृपः शारद्वतश्चैव यत एव वयं ततः । [ 20 ]
भागिनेयं ततो द्रौणिं न त्यक्ष्यति कथंचन ।
क्षत्तार्थबद्धस्त्वस्मासु प्रच्छन्नस्तु यतः परे ।
न त्वेकः स समर्थोऽस्मान्पाण्डवार्थे प्रबाधितुम् ।
सुविस्रब्धान्पाण्डुसुतान्सह मात्रा विवासय ।
वारणावतमद्यैव नात्र दोषो भविष्यति । [ 25 ]
विनिद्राकरणं घोरं हृदि शल्यमिवार्पितम् ।
शोकपावकमुद्भूतं कर्मणा तेन नाशय ।

Colophon.

☞ This passage is followed by passage No. 81.

T2 G2.4.5 ins. after passage No. 82 above, a passage which is a repetition (with v. l.) of adhy. 129 (see conspectus on p. 573):

वैशंपायनः ।

प्राणाधिकं भीमसेनं कृतविद्यं धनंजयम् ।
दुर्योधनो लक्षयित्वा पर्यतप्यत दुर्मतिः ।
तथा वैकर्तनः कर्णः शकुनिश्चापि सौबलः ।
अनेकैरप्युपायैस्ते जिघांसन्ति स्म पाण्डवान् ।
पाण्डवाश्चापि तत्सर्वं प्रतिचक्रुर्यथाबलम् । [ 5 ]
उद्भावनमकुर्वाणा विदुरस्य मते स्थिताः ।
गुणैः समुदितान्दृष्ट्वा पौराः पाण्डुसुतांस्तदा ।
कथयांचक्रिरे तेषां गुणान्संसत्सु भारत ।

राज्यप्राप्तिं च संप्राप्तं ज्येष्ठं पाण्डुसुतं तदा ।
कथयन्ति स्म संभूय चत्वरेषु सभासु च । [10]
प्रज्ञाचक्षुरचक्षुष्मान्धृतराष्ट्रो जनेश्वरः ।
राज्यं च प्राप्तवान्पूर्वं स कथं नृपतिर्भवेत् ।
तथा भीष्मः शांतनवः सत्यसंधो जितेन्द्रियः ।
प्रत्याख्याय तदा राज्यं नाद्य जातु ग्रहीष्यति ।
ते वयं पाण्डवश्रेष्ठं तरुणं वृद्धशीलिनम् । [15]
अभिषिञ्चाम साध्वत्र सत्यं करुणवेदिनम् ।
स हि भीष्मं शांतनवं धृतराष्ट्रं च बुद्धिमान् ।
सपुत्रं विविधैर्भोगैर्योजयिष्यति पूजयन् ।
तेषां दुर्योधनः श्रुत्वा तानि वाक्यानि भारत ।
युधिष्ठिरानुरक्तानां पर्यतप्यत दुर्मतिः । [20]
संतप्यमानो दुष्टात्मा तेषां वाचो न चक्षमे ।
ईर्ष्यया चापि संतप्तो धृतराष्ट्रमुपागमत् ।
ततो विरहितं दृष्ट्वा पितरं प्रतिपूज्य च ।
दृष्ट्वा पाण्डोः पुरावृत्तं पश्चादिदमुवाच ह ।
श्रुता मे जल्पतां वाचः पौराणामशिवा गिरः । [25]
आगतोऽहं महाप्राज्ञ पादमूलं वचः शृणु ।
त्वामनादृत्य भीष्मं च पतिमिच्छन्ति पाण्डवम् ।
सौम्ये मतिश्च भीष्मस्य न च राज्यं बुभूषति ।
तस्य पुत्रो ध्रुवं प्राप्तस्तस्य तस्येति चापरः ।
ते वयं राजवंशेन हीनाः सह सुतैरपि । [30]
अविज्ञाता भविष्यामो लोकस्य जगतीपते ।
सततं निरयं प्राप्ताः परपिण्डोपजीविनः ।
न भवेम यथा राजंस्तथा शीघ्रं विधीयताम् ।
अथ त्वमपि राजेन्द्र राजवंशो भविष्यसि ।
यदि हि त्वं पुरा राज्ये भवानास्थापितो नृपः । [35]
ध्रुवं लप्स्यामहे राज्यं वयमप्यवशेन ते ।
स तथा कुरु कौरव्य रक्ष्या वंश्या यथा वयम् ।
संप्राप्नुमः स्वयं राज्यं मन्त्रयस्व सहानुगैः ।

Colophon.

## 84

After 1. 134. 18, T1 G1. 2. 4 ins.:

दर्शयित्वा पृथग्गन्तुं न कार्यं प्रतिभाति मे ।
अशुभं वा शुभं वापि तैर्वसाम सहैव तु ।
अद्य प्रभृति चास्मासु गतेषु भयविह्वलः ।
रूढमूलो भवेद्राज्ये धार्तराष्ट्रो जनेश्वरः ।
तदीयं च भवेद्राज्यं तदीयाः स्युः प्रजा इमाः । [5]
तस्मात्सहैव वत्स्यामो गच्छन्त्यस्तपदा वयम् ।
अस्माकं कालमासाद्य राज्यमाच्छिद्य शत्रुतः ।
अर्धं पैतृकमस्माकं सुखं भोक्ष्याम शाश्वतम् ।
धृतराष्ट्रवचोऽस्माभिः किमर्थमनुमन्यते ।
तेभ्यो भीत्यान्यथा गन्तुं दौर्बल्यं ते कुतो नृप । [10]
आपत्सु रक्षितास्माकं विदुरोऽस्ति महामतिः ।
मध्यस्थ एव गाङ्गेयो राज्यभोगपराङ्मुखः ।
बाह्लिकप्रमुखा वृद्धा मध्यस्था एव सर्वदा ।
अस्मदीयो भवेद्द्रोणः फल्गुनप्रेमसंयुतः ।
तस्मात्सहैव वस्तव्यं न गन्तव्यं पृथङ्ङ्नृप । [15]
अथवास्मासु ते कुर्युः किमशक्ताः पराक्रमैः ।
क्षुद्राः कपटिनो धूर्ता जाग्रत्सु मनुजेश्वर ।
किं न कुर्युः पुरा मह्यं किं न दत्तं पुरा विषम् ।
आशीविषैर्महाघोरैः सर्पैस्तैः किं न दंशितः ।
प्रमाणकोट्यां संनह्य निद्रापरवशे मयि । [20]
सर्पदंष्ट्रिविषैर्घोरैर्गङ्गायां शूलसंततौ ।
किं तेन पातितो भूप तदा किं मृतवानहम् ।
आपत्सु च सुघोरासु दुष्प्रयुक्तासु पापिभिः ।
अस्मानरक्षयो देवो जगद्यस्य वशे स्थितम् ।
चराचरात्मकं सोऽद्य यातः क्व नु नृपोत्तम । [25]
यावत्सोढव्यमस्माभिस्तावत्सोढास्मि यत्नतः ।
यदा न रक्ष्यतेऽस्माभिस्तदा पश्याम नो हितम् ।
किं द्रष्टव्यं तदास्माभिर्विगृह्य तरसा बलात् ।
सान्त्ववादेन दानेन भेदेनापि यतामहे ।
अर्धराज्यस्य संप्राप्त्यै ततो दण्डः प्रशस्यते । [30]
तस्मात्सहैव वस्तव्यं तन्मनोर्पितशल्यवत् ।
दर्शयित्वा पृथग्वापि न गन्तव्यं सुभीतवत् ।

☞ In the footnotes to 1. 134. 17–18 it has been erroneously stated that this passage occurs in G1. 2 after stanza 17. In all four MSS. it occurs at the same place, namely, after stanza 18.

## 85

K4 N V1 B D M ins. after adhy. 136: T G, after 1. 137. 17:

वैशंपायन उवाच ।
एतस्मिन्नेव काले तु यथासंप्रत्ययं कविः ।
विदुरः प्रेषयामास तद्वनं पुरुषं शुचिम् ।
स गत्वा तु यथोद्देशं पाण्डवान्ददृशे वने ।

---

85

G1. 4 ins. after line 2: G2, after line 129 of passage No. 86 below:

श्रुत्वा तं खनकेनोक्तं कौन्तेयोदन्तमादितः ।
आत्मनः पाण्डवानां च विश्वास्य ज्ञानपूर्वकम् ।
गङ्गासंतरणार्थाय ज्ञानाभिज्ञानवाचकम् ।

— (L. 3) K4 Ñ1 D5 यथोद्दिष्टं; S (except T1) वनोद्देशे. K4 Ñ1 S (except T1) वने प्रेक्षत (K4 Ñ1 °पश्यत) पांडवान्.

जनन्या सह कौरव्य मापयानाश्नदीजलम् ।
विदितं तन्महाबुद्धेर्विदुरस्य महात्मनः । [5]
ततस्तस्यापि चारेण चेष्टितं पापचेतसः ।
ततः संप्रेषितो विद्वान्विदुरेण नरस्तदा ।
पार्थानां दर्शयामास मनोमारुतगामिनीम् ।
सर्ववातसहां नावं यन्त्रयुक्तां पताकिनीम् ।
शिवे भागीरथीतीरे नरैर्विस्रम्भिभिः कृताम् । [10]
ततः पुनरथोवाच ज्ञापकं पूर्वचोदितम् ।
युधिष्ठिर निबोधेदं संज्ञार्थं वचनं कवेः ।
कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः ।
न हन्तीत्येवमात्मानं यो रक्षति स जीवति ।
तेन मां प्रेषितं विद्धि विश्वस्तं संज्ञयानया । [15]
भूयश्चैवाह मां क्षत्ता विदुरः सर्वतोऽर्थवित् ।
कर्णं दुर्योधनं चैव भ्रातृभिः सहितं रणे ।
शकुनिं चैव कौन्तेय विजेतासि न संशयः ।
इयं वारिपथे युक्ता नौरप्सु सुखगामिनी ।
मोचयिष्यति वः सर्वानस्माद्देशान्न संशयः । [20]
अथ तान्व्यथितान्दृष्ट्वा सह मात्रा नरोत्तमान् ।
नावमारोप्य गङ्गायां प्रस्थितानब्रवीत्पुनः ।
विदुरो मूर्ध्न्युपाघ्राय परिष्वज्य च वो मुहुः ।
अरिष्टं गच्छताव्यग्राः पन्थानमिति चाब्रवीत् ।
इत्युक्त्वा स तु तान्वीरान्पुमान्विदुरचोदितः । [25]
तारयामास राजेन्द्र गङ्गां नावा नरर्षभान् ।
तारयित्वा ततो गङ्गां पारं प्राप्तांश्च सर्वशः ।
जयाशिषः प्रयुज्याथ यथागतमगाद्धि सः ।
पाण्डवाश्च महात्मानः प्रतिसंदिश्य वै कवेः ।
गङ्गामुत्तीर्य वेगेन जग्मुर्गूढमलक्षिताः । [30]

In T G this passage is followed by a *repetition* of 1. 137. 17[cd], a sure indication that it is an interpolation.

Colophon.

— (L. 4) $K_{4}$ $Ñ_{1.3}$ S (except $T_{1}$) सह मात्रा नरव्याघ्रान्. $K_{4}$ $Ñ_{1.3}$ $D_{5}$ प्रयाताञ्जाह्नवीं नदीं; $T_{2}$ G $M_{3.5}$ अनयज्जाह्नवीं ततः; $M_{6-8}$ अनर्हां यादवीं तदा. — After line 4, $D_{4}$ (marg. *sec. m.*) ins.:

उवाच चैनान्निभृतं पाण्डवान्भयपीडितान् ।

— (L. 6) $Ñ_{1}$ S (except T $G_{3}$) तत्रस्थस्यापि चा°. $K_{4}$ $N_{1}$ $D_{5}$ S (except $T_{1}$) पापानां वै चिकीर्षितं. — (L. 7) $K_{4}$ $Ñ_{2.3}$ $V_{1}$ Da $Dn_{3}$ $D_{4}$ प्रवासितो; $Ñ_{1}$ $D_{5}$ संप्रहितो. S (except $T_{1}$) ततो धर्मविदा तेन प्रहितः पुरुषः शिवः. — (L. 8) Om. in S (except $T_{1}$). $Ñ_{1}$ B (except $B_{6}$) $D_{5}$ पार्थान्संदर्श°. — (L. 9) $T_{2}$ G सर्वगां जवनां नावं. $T_{2}$ G युक्तारित्रां प°; M युक्तां चित्रप°. — (L. 10) $K_{4}$ $Ñ_{1}$ $D_{5}$ S (except $T_{1}$) विश्वास्यै($K_{4}$ $Ñ_{1}$ $D_{5}$ °श्वस्तै)र्मनुजैर्वृतां. S (except $T_{1}$), which om. lines 11–12, ins. after line 10:

पाण्डवान्दर्शयामास वचनं चेदमब्रवीत् ।

— (L. 13) S कक्षघ्नं शिशिरघ्नं च महाक($G_{1-3}$ $M_{3}$ °कु)क्षि- बिलौकसं. S (except $T_{1}$), which om. line 14, ins. after line 13:

बोद्धव्यमिति यत्प्राह विदुरस्तदिदं तथा ।

— (L. 15) $T_{2}$ G विश्वस्तं वै ($G_{2}$ नौरेषा तु) महात्मना; M विश्वासजननाय वै ($M_{8}$ विश्वासार्थमिहानघाः). — (L. 16) $T_{2}$ G अब्रवीच्च महाबाहुः (*or* °बुद्धिः). $K_{4}$ Da S (except $T_{1}$) सर्वधर्मवित्; $Ñ_{2.3}$ B (except $B_{6}$) सर्वशास्त्रवित्. — After line 16, $K_{4}$ $B_{3}$ (both with v. l.), $D_{4}$ S (except $T_{1}$) ins.:

अधिक्षिपन्धार्तराष्ट्रं सभ्रातृकमुदारधीः ।

— (L. 17) $K_{4}$ S (except $T_{1}$) कर्णं च दुर्मतिं क्रूरं शकुनिं चापि सौबलम्. — (L. 18) S (except $T_{1}$) दुर्योधनः कुलस्यास्य कीर्तिधर्मप्रणाशनः. — After line 18, $K_{4}$ S (except $T_{1}$) ins.:

गान्धारराजसहितः पितरं पातयिष्यति ।

$K_{4}$ S (except $T_{1}$) cont.: $D_{4}$ ins. after line 18:

राजा चाप्यपरिज्ञातः स्नेहबद्धो दुरात्मसु ।
धृतराष्ट्रः परीतात्मा धर्मं त्यजति शाश्वतम् ।

$T_{2}$ G cont.:

वैशंपायनः ।
पाण्डवाश्चापि गत्वाथ गङ्गायास्तीरमुत्तमम् ।
निषादाधिपतिं वीरं दाशं परमधार्मिकम् ।
दीपिकाभिः कृतालोकं मार्गमाणं च पाण्डवान् ।
ददृशुः पाण्डवेयास्ते नाविकं त्वरयान्वितम् ।
निषादस्तत्र कौन्तेयानभिज्ञानं न्यवेदयत् । [5]
विदुरस्य महाबुद्धेर्म्लेच्छभाषादि यत्तदा ।
नाविकः ।
विदुरेणास्मि संदिष्टो दत्त्वा बहु धनं महत् ।
गङ्गातीरे निविष्टस्त्वं पाण्डवांस्तारयेति ह ।
सोऽहं चतुर्दशीमद्य गङ्गाया अविदूरतः ।
चारैरन्वेषयाम्यस्मिन्वने मृगगणान्विते । [10]
प्रभवन्तोऽथ भद्रं वो नावमारुह्य गम्यताम् ।
युक्तारित्रपताकां च निश्छिद्रां मन्दिरोपमाम् ।

— (L. 19) $K_{4}$ S (except $T_{1}$) तथैव (for नौरप्सु). — (L. 20) S (except $T_{1}$) मृत्युपाशात्समातृकान्. — (L. 21) $K_{4}$ S (except $T_{1}$) ततस्तान् व्यथितान् (M सहितान्) सर्वान्सह मात्रा परंतपान्. — (L. 22) $K_{4}$ S (except $T_{1}$) प्रयातः ($K_{4}$ M प्रयातान्) पुनरब्रवीत्. — (L. 23) $K_{4}$ मुहुः; N $V_{1}$ Dn $D_{1.2.4}$ वचो (for च वो). — After line 24, $T_{2}$ G ins.:

86

After 1. 137. 16, S ins.:

ततः प्रव्यथितो भीष्मः पाण्डुराजसुतान्मृतान् ।
मात्रा सहेति ताञ्श्रुत्वा विललाप रुरोद च ।
हा युधिष्ठिर हा भीम हा धनंजय हा यमौ ।
हा पृथे सह पुत्रैस्त्वमेकरात्रेण स्वर्गता ।
मात्रा सह कुमारास्ते सर्वे तत्रैव संस्थिताः । [5]
न हि तौ नोत्सहेयातां भीमसेनधनंजयौ ।
तरसा वेगितात्मानौ निर्भेत्तुमपि मन्दिरम् ।
परासुत्वं न पश्यामि पृथायाः सह पाण्डवैः ।

(Here follows a colophon in M MSS. only.)

T G cont.:

सर्वथा विकृतं तत्तु यदि ते निधनं गताः ।
धर्मराजः स निर्दिष्टो ननु विप्रैर्युधिष्ठिरः । [10]
पृथिव्यां चरतां श्रेष्ठो भविता स धनंजयः ।
सत्यव्रतो धर्मदत्तः सत्यवाक् शुभलक्षणः ।
कथं कालवशं प्राप्तः पाण्डवेयो युधिष्ठिरः ।
आत्मानमुपमां कृत्वा परेषां वर्तते तु यः ।
सह मात्रा तु कौरव्यः कथं कालवशं गतः । [15]
परिपालितश्चिरं कालं फलकाले यथा द्रुमः ।
भग्नः स्याद्वायुवेगेन तथा राजा युधिष्ठिरः ।
यौवराज्याभिषिक्तेन पितुर्येनाहृतं यशः ।
आत्मनश्च पितुश्चैव सत्यधर्मार्यवृत्तिभिः ।
स ब्रह्मण्यः परप्रेक्षी हृदि शोकं निधाय मे । [20]
कालेन स हि संभग्नो धिक्कृतान्तमनर्थदम् ।
यच्च सा वनवासेन क्लेशिता दुःखभागिनी ।
पुत्रगृद्धुतया कुन्ती न भर्तारं मृता त्वनु ।
अल्पकालं कुले जाता भर्तुः प्रीतिमवाप या ।
दग्धाद्य सह पुत्रैः सा असंपूर्णमनोरथा । [25]
एतच्च चिन्तयानस्य बहुधा व्यथितं मनः ।
अवधूय च मे देहं हृदयेऽग्निर्न दीर्यते ।
पीनस्कन्धश्चारुबाहुर्मेरुकूटसमो युवा ।
मृतो भीम इति श्रुत्वा मनो न श्रद्दधाति मे ।
अतित्यागी च योगी च क्षिप्रहस्तो दृढायुधः । [30]
प्रवृत्तिमाँल्लब्धलक्ष्यो रथयानविशारदः ।
दूरपाती त्वसंभ्रान्तो महावीर्यो महास्त्रवित् ।
अदीनात्मा नरव्याघ्रः श्रेष्ठः सर्वधनुष्मताम् ।
येन प्राच्यास्तु सौवीरा दाक्षिणात्याश्च निर्जिताः ।
ख्यापितं येन शूरेण त्रिषु लोकेषु पौरुषम् । [35]
यस्मिञ्जाते विशोकाभूत्कुन्ती पाण्डुश्च वीर्यवान् ।
पुरंदरसमो जिष्णुः कथं कालवशं गतः ।
कथं तौ वृषभस्कन्धौ सिंहविक्रान्तगामिनौ ।
मर्त्यधर्ममनुप्राप्तौ यमावरिनिबर्हणौ ।

वैशंपायनः ।

तस्य विक्रन्दितं श्रुत्वा उदकं च प्रसिञ्चतः । [40]
देशकालं समाज्ञाय विदुरः प्रत्यभाषत ।
मा शोचस्त्वं नरव्याघ्र जहि शोकं महाव्रत ।
न तेषां विद्यते पापं प्राप्तकालं कृतं मया ।
तच्च तेभ्यः स उदकं विप्रपिच्चतु भारत ।
सोऽब्रवीत्किंचिदुच्चार्य कौरवाणामशृण्वताम् । [45]
क्षत्तारमनुसंगृह्य बाष्पोत्पीडकलस्वरः ।

भीष्मः ।

कथं ते तात जीवन्ति पाण्डोः पुत्रा महारथाः ।
कथमस्मत्कृते पक्षः पाण्डोर्न हि निपातितः ।

---

इत्युक्त्वा तान्समारोप्य तारयामास पाण्डवान् ।

— (L. 25) S (except T1) इत्युक्ताः सह मात्रा ते तस्मान्मुक्ता महाभयात्. — S (except T1) om. lines 26–29. — (L. 30) K4 च भृशं; S (except T1) कौंतेयाः (for वेगेन). K4 S (except T1) वनं जग्मुर्यथासुखं (G1. 3 °र्महानिशि). — After line 30, T2 G ins.:

ततस्तां तत्र तीर्त्वा तु गङ्गां भागीरथीं नदीम् ।

— T G om. colophon.

86

In G1. 3. 4 the passage is preceded by:

विदुरो धृतराष्ट्रस्य जानन्सर्वं मनोगतम् ।
केनायं विधिना सृष्टः कौटिल्यः कपटालयः ।
इत्येवं चिन्तयन्प्राज्ञो विदुरो विदुषां वरः ।
लोकानां दर्शयन्दुःखं दुःखितैः सह बन्धुभिः ।
मनसा चिन्तयन्पार्थान्कियद्दूरं गमिष्यति ।
सहिता पाण्डवैः पुत्रैरिति चिन्तापरोऽभवत् ।

— (L. 11) T1 G1 °व्यां च नरश्रेष्ठो; G2. 3. 6 °व्यां च रथश्रेष्ठो. — After line 39, T1 G1. 3. 4 ins.:

क्व गता वत्सा मां वृद्धं विहाय भृशमातुरम् ।
हा शुभे वत्से वार्ष्णेयि निधाय हृदि मे शुचम् ।
वारणावतयात्रायां के स्युर्वः शकुनाः पथि ।
एवमल्पायुषो लोके भविष्यन्ति पृथासुताः ।
संशप्ता इति कैर्यूयं वत्सान्दर्शय मे विधे ।
ममैव नाथा मन्नाथा मम नेत्राणि पाण्डवाः ।
हा पाण्डवा मे हा वत्सा हा सिंहशिशवो मम ।
मातङ्गा हा मदोत्तुङ्गा हा ममानन्दवर्धनाः ।
मम हीनस्य युष्माभिः सर्वे लोकास्तमोवृताः ।
कदा द्रष्टास्मि कौन्तेयांस्तरुणादित्यवर्चसः ।
दृष्ट्वा युष्मान्कदा रंस्ये पूर्ववन्मम नन्दनाः ।
का गतिर्मे क्व वत्स्यामि कुतो द्रक्ष्यामि मे शिशून् ।
हा युधिष्ठिर हा भीम हा हा फल्गुन हा यमौ ।

कथं मत्प्रमुखाः सर्वे प्रमुक्ता महतो भयात्।
जननी गरुडेनेव कुमारास्ते समुद्धृताः। [50]

वैशंपायनः।

एवमुक्तस्तु कौरव्यः कौरवाणामशृण्वताम्।
आचचक्षे स धर्मात्मा भीष्मायाद्भुतकर्मणे।

विदुरः।

धृतराष्ट्रस्य शकुनेः राज्ञो दुर्योधनस्य च।
विनाशे पाण्डुपुत्राणां कृतो मतिविनिश्चयः।
तत्राहमपि च ज्ञात्वा तस्य पापस्य निश्चयम्। [55]
तं जिघांसुरहं चापि तेषामनुमते स्थितः।
ततो जतुगृहं गत्वा दहनेऽस्मिन्नियोजिते।
पृथायाश्च सपुत्रायाः धार्तराष्ट्रस्य शासनात्।
ततः खनकमाहूय सुरङ्गां वै बिले तदा।
सगुहां कारयित्वा ते कुन्त्या पाण्डुसुतास्तदा। [60]
निष्कामिता मया पूर्वं मा स्म शोके मनः कृथाः।
ततस्तु नावमारोप्य सहपुत्रां पृथामहम्।
दत्त्वाभयं सपुत्रायै कुन्त्यै गूढमदाहयम्।
तस्मात्ते मा स्म भूद्दुःखं मुक्ताः पापात्तु पाण्डवाः।
निर्गताः पाण्डवा राजन्मात्रा सह परंतपाः। [65]
अग्निदाहान्महाघोरान्मया तस्मादुपायतः।
मा स्म शोकमिमं कार्षीर्जीवन्त्येव च पाण्डवाः।
प्रच्छन्ना विचरिष्यन्ति यावत्कालस्य पर्ययः।
तस्मिन्युधिष्ठिरं काले द्रक्ष्यन्ति भुवि मानवाः।
विमलं कृष्णपक्षान्ते जगच्चन्द्रमिवोदितम्। [70]
न तस्य नाशं पश्यामि यस्य भ्राता धनंजयः।
भीमसेनश्च दुर्धर्षो माद्रीपुत्रौ च भारत।

Colophon.

---

मा गच्छत निवर्तध्वं मयि कोपं विमुञ्चताम्।

— After line 48, T1 ins.

कथं पश्चात्त्वया क्षत्तः पाण्डोः पक्षः समुध्दृतः।;

while G3 ins.:

कथं तव कृतं पक्षः पाण्डोर्नापि निपातितः।

— For line 67, G1 reads:

भवान्भीष्म मनःशोकं मा कार्षीः पाण्डवान्प्रति।
मुक्ता जतुगृहाद्वह्नेः सम्यग्जीवन्ति पाण्डवाः।

— After line 72, G3.6 ins. a colophon (*Adhy. no.:* G3 94; G6 95), while T G1.2.4.5 ins.:

वैशंपायनः।

ततः संहृष्टसर्वाङ्गो भीष्मो विदुरमब्रवीत्।
युक्तं चैवानुरूपं च कृतं तात शुभं त्वया।
वयं विमोक्षिता दुःखात्पाण्डुपक्षो न नाशितः।
एवमुक्त्वा विवेशाथ पुरं जनशताकुलम्।
कुरुभिः सहितो राजा नागरैश्च पितामहः।
अथाम्बिकेयः सामात्यः सकर्णः सहसौबलः।
सात्मजः पार्थनाशस्य स्मरंस्तथ्यं जहर्ष च।
भीष्मस्तु राजन्दुर्धर्षो विदुरश्च महामतिः।
जहर्षाते स्मरन्तौ तौ जातुपाशैर्विमोचनम्।
सत्यशीलगुणाचारै रागैर्जानपदोद्भवैः।
द्रोणादयस्तु धर्मैश्च तेषां तान्मोक्षितान्विदुः।
शौर्यलावण्यमाहात्म्यै रूपैः प्राणबलैरपि।
स्वस्थान्पार्थानमन्यन्त पौरजानपदास्तदा।
अन्ये जनाः प्राकृताश्च स्त्रियश्च बहुधा तथा।
शङ्कमाना वदन्ति स्म दग्धा जीवन्ति वा न वा।

Here follows a colophon.

T1 G1.2.4 cont.:

वैशंपायनः।

पाण्डवान्महतो दाहान्मोचयित्वा महामते।
म्रियमाणं महाक्लेशैर्भवान्मां समजीवयत्।
प्रच्छन्ना विचरिष्यन्तो यथोक्तं भवता तदा।
न व्यक्तं तत्त्वया तात यत्र कुत्रापि न क्वचित्।
इतोऽपि प्रेषयित्वाप्तान्योगक्षेमं विचारय।
दूराद्दूरतरं पार्थान्प्रस्थापय वनाद्वनम्।
तत्र तत्र प्रेषयित्वा दूतानाप्तान्शुभांस्तव।
योगक्षेमं पाण्डवानां गूढं सम्यग्विचारय।
भीष्मेणेत्थं समादिष्टो विदुरः खनकं पुनः।
गुप्तं तं प्रेषयामास खनकं जनमेजय।
सोऽपि गत्वा पृथापुत्रान्दृष्ट्वा सिद्धवटे तदा।
म्लेच्छभाषां वदन्नेव विदुरेण पुरेरिताम्।
रात्रौ पाण्डुसुतान्दृष्ट्वा सान्त्वयित्वा वचोऽब्रवीत्।

खनकः।

आयुष्मद्भिर्न भेतव्यं भवद्भिः कौरवा न हि।
जानन्ति जीवतो युष्मान्निश्चितोऽभूद्भवन्मृतौ।
जानाति युष्मान्गाङ्गेयो विदुरेण प्रबोधितः।
शनैः शनैश्च गन्तव्यं न भीत्या त्वरया न च।
दक्षिणां दिशमाश्रित्य वटकाननमुत्तमम्।
विद्यते भारतश्रेष्ठास्तत्र गच्छन्तु निर्भयाः।
सर्वप्रवास एतावान्भवतां पुण्यशीलिनाम्।
क्षमावतां च युष्माकं सुखोदर्कं भविष्यति।
इत्याह विदुरो युष्मान्मया तत्कथितं शुभाः।
युष्मभ्यं यामि भद्रं वो गच्छतारिष्टमार्गगाः।

वैशंपायनः।

निवृत्ते खनकेनेत्थं पाण्डवा जनमेजय।
किमकुर्वत ते सर्वे शृणु राजन्पितामहाः।

87

After 1. 143. 15, S ins.:

महतोऽत्र स्त्रियं कामाद्बाधितां त्राहि मामपि ।
धर्मार्थकाममोक्षेषु दयां कुर्वन्ति साधवः ।
तं तु धर्ममिति प्राहुर्मुनयो धर्मवत्सलाः ।
दिव्यज्ञानेन पश्यामि अतीतानागतानहम् ।
तस्माद्वक्ष्यामि वः श्रेय आसन्नं सर उत्तमम् । [5]
अथासाद्य सरः स्नात्वा विश्रम्य च वनस्पतौ ।
श्वः प्रभाते महद्भूतं प्रादुर्भूतं जगत्पतिम् ।
व्यासं कमलपत्राक्षं दृष्ट्वा शोकं विहास्यथ ।
धृतराष्ट्राद्विवासश्च दहनं वारणावते ।
त्राणं च विदुरात्तुभ्यं विदितं ज्ञानचक्षुषा । [10]
आवासे शालिहोत्रस्य स वो वासं विधास्यति ।
वर्षवातातपसहः अयं पुण्यो वनस्पतिः ।
पीतमात्रे तु पानीये क्षुत्पिपासे विनश्यतः ।
तपसा शालिहोत्रेण सरो वृक्षश्च निर्मितः ।
कादम्बाः सारसा हंसाः कुरर्यः कुररैः सह । [15]
रुवन्ति मधुरं गीतं गान्धर्वस्वनमिश्रितम् ।

वैशंपायनः ।

तस्यास्तद्वचनं श्रुत्वा कुन्ती वचनमब्रवीत् ।
युधिष्ठिरं महाप्राज्ञं सर्वशास्त्रविशारदम् ।
त्वं हि धर्मभृतां श्रेष्ठ मयोक्तं शृणु भारत ।
राक्षस्येषा हि वाक्येन धर्मं वदति साधु वै । [20]
भावेन दुष्टा भीमं सा किं करिष्यति राक्षसी ।
भजतां पाण्डवं वीरमपत्यार्थं यदीच्छसि ।

88

After 1. 143. 18, S ins.:

प्राक् संध्यातो विमोक्तव्यो रक्षितव्यश्च नित्यशः ।
एवं रमस्व भीमेन यावद्गर्भस्य वेदनम् ।
एष ते समयो भद्रे शुश्रूष्यश्चाप्रमत्तया ।
नित्यानुकूलया भूत्वा कर्तव्यं शोभनं त्वया ।

Colophon.

वैशंपायनः ।

युधिष्ठिरेणैवमुक्ता कुन्त्या चाङ्केऽधिरोपिता । [5]
भीमार्जुनान्तरगता यमाभ्यां च पुरस्कृता ।
तिर्यग्युधिष्ठिरे याति हिडिम्बा भीमगामिनी ।
शालिहोत्रसरो रम्यमासेदुस्ते जलार्थिनः ।
तथेति प्रतिज्ञाय हिडिम्बा राक्षसी तदा ।
वनस्पतितलं गत्वा परिमृज्य गृहं यथा । [10]
पाण्डवानां च वासं सा कृत्वा पर्णमयं तथा ।
आत्मनश्च तथा कुन्त्या एकोद्देशे चकार सा ।
पाण्डवास्तु ततः स्नात्वा शुद्धाः संध्यामुपास्य च ।
तृषिताः क्षुत्पिपासार्ता जलमात्रेण वर्तयन् ।
शालिहोत्रस्तदा ज्ञात्वा क्षुधार्तान्पाण्डवांस्तदा । [15]
मनसा चिन्तयामास पानीयं भोजनं महत् ।
ततस्ते पाण्डवाः सर्वे विश्रान्ताः पृथया सह ।
यथा जतुगृहे वृत्तं राक्षसेन कृतं च यत् ।
कृत्वा कथा बहुविधाः कथान्ते पाण्डुनन्दनम् ।
कुन्ती राजसुता वाक्यं भीमसेनमथाब्रवीत् । [20]
यथा पाण्डुस्तथा मान्यस्तव ज्येष्ठो युधिष्ठिरः ।
अहं धर्मविधानेन मान्या गुरुतरी तव ।
तस्मात्पाण्डुहितार्थं मे युवराज हितं कुरु ।
निकृता धार्तराष्ट्रेण पापेनाकृतबुद्धिना ।
दुष्कृतस्य प्रतीकारं न पश्यामि वृकोदर । [25]
तस्मात्कतिपयाहेन योगक्षेमं भविष्यति ।
क्षेमं दुर्गमिमं वासं वसिष्यामो यथासुखम् ।
इदमद्य महद्दुःखं धर्मकृच्छ्रं वृकोदर ।
दृष्ट्वैव त्वां महाप्राज्ञ अनङ्गेनाभिचोदिता ।
युधिष्ठिरं च मां चैव वरयामास धर्मतः । [30]
धर्मार्थं देहि पुत्रं त्वं स नः श्रेयः करिष्यति ।
प्रतिवाक्यं तु नेच्छामि ह्यावाभ्यां वचनं कुरु ।

89

After 1. 143. 26, D5 S ins.:

यथा च सुकृती स्वर्गे मोदतेऽप्सरसा सह ।
स तथा परमप्रीतस्तया रेमे महाद्युतिः ।
शुभं हि जघनं तस्याः सुवर्णमणिमेखलम् ।
न ततर्प मुदा मृद्नन्भीमसेनो मुहुर्मुहुः ।
रमयन्ती ततो भीमं तत्र तत्र मनोजवा । [5]
सा रेमे तेन संहर्षादतृप्यन्ती मुहुर्मुहुः ।
अहःसु विचरन्ती सा निशाकालेषु पाण्डवम् ।
आनीय वै स्वके गेहे दर्शयामास मातरम् ।
भ्रातृभिः सहितो नित्यं स्वपते पाण्डवस्तदा ।
कुन्त्याः परिचरन्ती सा तस्याः पार्श्वेऽवसन्निशाम् । [10]

---

88

M om. lines 1–4 and the colophon. — For the details of the colophon cf. v. l. 1. 143. 18. — For lines 5–7, M subst.:

एवमुक्त्वा तदा तत्र हिडिम्ब्या सह भारत ।

89

M om. lines 1–6. — (L. 5) = (var.) 1. 143. 27ab. — (L. 7) G1.2 M रमयंती (for विचरन्ती).

कामांश्च सुखवासादीनानयिष्यति भोजनम् ।
तस्यां राज्यां व्यतीतायामाजगाम महाव्रतः ।
पाराशर्यो महाप्राज्ञो दिव्यदर्शी महातपाः ।
तेऽभिवाद्य महात्मानं कृष्णद्वैपायनं तदा ।
तस्थुः प्राञ्जलयः सर्वे सस्नुषा चैव माधवी । [ 15 ]

90

This passage was found to be only a *repetition* (with v. l.) of 1. 145. 25–37, and is therefore not cited here *in extenso*. The passage is followed by a colophon (*adhy. no.* 61).

91

After 1. 148. 5, S ins.:

पुरुषादकेन रौद्रेण भक्ष्यमाणा दुरात्मना ।
अनाथा नगरी नाथं त्रातारं नाधिगच्छति ।
गुहायां च वसंस्तत्र बाधते सततं जनम् ।
स्त्रियो बालांश्च वृद्धांश्च यूनश्चापि दुरात्मवान् ।
अत्र मन्त्रैश्च होमैश्च भोजनैश्च स राक्षसः । [ 5 ]
ईडितो द्विजमुख्यैश्च पूजितश्च दुरात्मवान् ।
यदा च सकलानेवं प्रसूदयति राक्षसः ।
अथैनं ब्राह्मणाः सर्वे समये समयोजयन् ।
मासान्कामाद्वधी रक्षो दास्यामस्ते सदा वयम् ।
पर्यायेण यथाकाममिह मांसोदनं प्रभो । [ 10 ]
अन्नं मांससमायुक्तं तिलचूर्णसमन्वितम् ।
सर्पिषा च समायुक्तं व्यञ्जनैश्च विभूषितम् ।
स्रजश्चित्रास्तिलान्पिण्डाँल्लाजापूपसुरासवान् ।
श्रृताश्रृतान्पानकुम्भान्स्थूलमांसं श्रृताश्रृतम् ।
सर्पिःकुम्भांश्च विविधानन्यांश्च विविधान्बहून् । [ 15 ]
अथ सिद्धैः समायुक्तैस्तिलचूर्णैः समाकुलान् ।
कुलात्कुलाच्च पुरुषं बलीवर्दौ च कालकौ ।
प्राप्स्यसि त्वमसंक्रुद्धो रक्षोभागं प्रकल्पितम् ।
तिष्ठेह समयेऽस्माकमित्ययाचन्त तं द्विजाः ।
बाढमित्येव तद्रक्षस्तद्वचः प्रत्यगृह्णत । [ 20 ]
परचक्रान्न बिभ्यंश्च रक्षणं स करोति च ।
तस्मिन्भागे विनिर्दिष्टे चास्थितः समयं बली ।

92

For 1. 151. 1, D5 (see footnotes) S subst.:

वैशंपायनः ।

अथ राज्यां व्यतीतायां भीमसेनो महाबलः ।
ब्राह्मणं समुपागम्य वाक्यं चेदमुवाच ह ।

भीमसेनः ।

आपदस्त्वां मोचयेयं सपुत्रं ब्राह्मणप्रिय ।
मा भैषी राक्षसात्तस्मान्मां ददातु बलिं भवान् ।
इह मामाशितं कर्तुं प्रयतस्व द्विजोत्तम । [ 5 ]
अथात्मानं प्रदास्यामि तस्मै घोराय रक्षसे ।
त्वरध्वं किं विलम्बध्वं मा चिरं कुरुतानघाः ।
व्यवस्येयं मम प्राणैर्युष्मान्रक्षितुमद्य वै ।

वैशंपायनः ।

एवमुक्तस्तु भीमेन ब्राह्मणो भरतर्षभ ।
सुहृदां तत्समाख्याय ददावन्नं सुसंस्कृतम् । [ 10 ]
पिशितोदनमाजह्रुरथास्मै पुरवासिनः ।
सघृतं सोपदंशं च सूपैर्नानाविधैः सह ।
तदशित्वा भीमसेनो मांसानि विविधानि च ।
मोदकानि च मुख्यानि चित्रोदनचयान्बहून् ।
ततोऽपिबद्दधिघटान्सुबहून्द्रोणसंमितान् । [ 15 ]
तस्य भुक्तवतः पौरा यथावत्समुपार्जितम् ।
उपजह्रुर्भूतभागं समृद्धमनसस्तदा ।
ततो राज्यां व्यतीतायां सव्यञ्जनदधिप्लुतम् ।
समारुह्यान्नसंपूर्णं शकटं स वृकोदरः ।
प्रययौ तूर्यनिर्घोषैः पौरैश्च परिवारितः । [ 20 ]

---

91

(L. 1) Hypermetric! T1 G3 पुरुपादेन रौद्रेण; T2 G4-6 M तेनेयं पुरुपादेन. — (L. 7) M स कुलान्येव. — (L. 8) M (except M3) संन्ययोज°. — G6 M om. lines 11–12. — (L. 13) T1 G1-3 पिंडाल्लाँजास्तथापूपान्स्पं बहुविधोदनं. — M om. lines 14–16. — (L. 14) G1, 2 °श्रृतानि मांसानि पानपूर्णघटानपि. — After line 14, G1, 2 ins.:

वन्यमाहिषवाराहं माङ्कं च श्रृताश्रृतम् ।.

— (L. 17) M °षं युवानं बलिनं प्रभो. — For lines 18–19 T1 G1-3 subst. एतद्भागं प्रदास्यामः समये यदि तिष्ठसि. — (L. 20) M वचः प्रतिगृहीतवान्. — (L. 21) T1 G1, 2 परचक्राटवी-केभ्यः; G3 °क्राद्य भूतेभ्यो; M °क्राटवीभ्यश्च.

92

D5 (which has many v. l. mostly ignored here) ins. lines 2–17 of this passage after 1. 151. 1[ab], and lines 19–46 after 1[cd]. — (L. 2) T G (G3 om.) एतद् (for चेदम्). — (L. 5) M °ह मामशितं क°. T1 स्वके गृहे; G3 M सकृद्दहे; G6 मवद्गृहे (for द्विजो°). — After line 5, D5 ins.:

श्रमेण मे गता रात्रिर्भुक्त्वा तु बलवानहम् ।

(L. 17) G4 महाभागं; M भूतं भागं. — (L. 41) G1, 2 M °ज्यं हि (G1, 2 स्याद्) शवस्पर्शे.

ऋजुरारोहवान्मुक्तो भूयिष्ठपथिकोऽनघः ।
श्लक्ष्णया शिखयोपेतः संपन्नः परमत्विषा ।
अवदाते च सूक्ष्मे च दिव्ये च रुचिरे शुभे ।
महेन्द्रदत्ते महती बिभ्रत्परमवाससी । [20]
जाम्बूनदमये दिव्ये गण्डूपदमुखेन वै ।
भ्रयर्कसदृशे दिव्ये धारयन्कुण्डले शुभे ।
राजतच्छत्रमुच्छ्रित्य चित्रं परमवर्चसम् ।
प्राप्य दुष्प्रापमन्येन ब्रह्मवर्चसमुत्तमम् ।
भवने भूमिपालस्य बृहस्पतिरिवाप्लुतः । [25]
संहितायां च सर्वेषां स्थितस्योपस्थितस्य च ।
द्विपदस्य च धर्मस्य क्रमधर्मस्य पारगः ।
गाथासामानुसामज्ञः साम्नां परमवल्गुनाम् ।
आत्मना सर्वमोक्षिभ्यः कृतिमान्कृत्यवित्तथा ।
योक्ता धर्मे बहुविधे मनो मतिमतां वरः । [30]
विदितार्थः स्वसमयच्छेत्ता निगमसंशयान् ।
अर्थनिर्वचने नित्यं संशयच्छिदसंशयः ।
प्रकृत्या धर्मकुशलो नानाधर्मविशारदः ।
लोपेनागमधर्मेण संक्रमेण च वृत्तिषु ।
एकशब्दांश्च नानार्थानेकार्थांश्च पृथक् श्रुतीन् । [35]
पृथगर्थाभिधानं च प्रयोगाणामवेक्षिता ।
प्रमाणभूतो लोकस्य सर्वाधिकरणेषु च ।
सर्ववर्णविकारेषु नित्यं सकलपूजितः ।
स्वरे स्वरे च विविधे वृत्तेषु विविधेषु च ।
समस्थानेषु सर्वेषु समाम्नायेषु धातुषु । [40]
उद्देश्यानां समाख्याता सर्वमाख्यातमुद्दिशन् ।
अभिसंधिषु तत्त्वज्ञः पदान्यङ्गान्यनुस्मरन् ।
कालधर्मेण निर्दिष्टं यथार्थं च विचारयन् ।
चिकीर्षितं च यो वेत्ता यथा लोकेन संवृतम् ।
विभावितं च समयं भाषितं हृदयंगमम् । [45]
आत्मने च परस्मै च स्वरसंस्कारयोगवान् ।
एषां स्वराणां ज्ञाता च बोद्धा प्रवचनस्वरान् ।
विज्ञाता उक्तवाक्यानां एकतां बहुतां तथा ।
बोद्धा च परमार्थांश्च विविधांश्च व्यतिक्रमान् ।
अभेदतश्च बहुशो बहुशश्चापि भेदतः । [50]
वचनानां च विविधानादेशांश्च समीक्षिता ।
नानार्थकुशलस्तत्र तद्धितेषु च कृत्स्नशः ।
परिभूषयिता वाचां वर्णतः स्वरतोऽर्थतः ।
प्रत्ययांश्च समाख्याता नियतं प्रतिधातुकम् ।
पञ्च चाक्षरजातानि स्वरसंज्ञानि यानि च । [55]

☞ In the footnotes to 1. 200. 9, in the remarks regarding the present passage, for "27 lines" read "55 lines"; deleting "— ^cd) S आययौ धर्मराजं तु द्रष्टुकामोऽथ नारदः", as well as the *wavy line* under 9^cd of the constituted text.

112

After 1. 209. 24^ab, Ñ2 D4 (marg. *sec. m.*) S ins.:

चित्रवाहनमब्रवीत् ।
चित्राङ्गदायाः शुल्कं च गृह्णेमं बभ्रुवाहनम् ।
अनेन तु भविष्यामि ऋणान्मुक्तो जनाधिप ।
चित्राङ्गदां पुनर्वाक्यमब्रवीत्पाकशासनिः ।
इहैव भव भद्रे त्वं बभ्रुवाहनवर्धना । [5]
इन्द्रप्रस्थनिवासं मे आगता तत्र रंस्यसे ।
कुन्तीं युधिष्ठिरं भीमं भ्रातरौ मे कनीयसौ ।
आगता तत्र पश्येथा अन्यानपि च बान्धवान् ।
बान्धवैः सहिता भद्रे नन्दसे त्वमनिन्दिते ।
धर्मे स्थितः सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः । [10]
जित्वा तु पृथिवीं सर्वां राजसूयं करिष्यति ।
तत्रागच्छन्ति राजानः पृथिव्यां नृपसंज्ञिताः ।
बहूनि रत्नान्यादाय आगमिष्यति ते पिता ।
एकसार्थं प्रयातासि चित्रवाहनसेनया ।
द्रक्ष्यामि राजसूये त्वां पुत्रं पालय मा शुचः । [15]
बभ्रुवाहननामा तु मम प्राणो बहिश्चरः ।
तस्माद्भरस्व पुत्रं वै पुरुवंशविवर्धनम् ।
चित्रवाहनदायादं धर्मात्पौरवनन्दनम् ।
पाण्डवानां प्रियं पुत्रं तस्मात्पालय सर्वदा ।
विप्रयोगेन संतापं मा कृथास्त्वमनिन्दिते । [20]
चित्राङ्गदामेवमुक्त्वा.

113

After 1. 210. 2, D4 (marg. *sec. m.*) S ins.:

चिन्तयामास रात्रौ तु गदेन कथितां कथाम् ।

— (L. 14) Some MSS. वेदेषु (for देवेषु). — (L. 27) D4 G5.6 M6-8 सर्वस्य (for धर्मस्य). — (L. 44) D4 G5.6 श(D4 व)कैरीतेन (for यथा लोकेन). — (L. 51) D4 G3.5.6 वनानां विविधानां च देशानां च समी°.

112

(L. 2) Ñ2 D4 T1 M (except M3) त्वं (for च). — (L. 3) D4 T1 M ऋणमुक्तो. — (L. 10) Ñ2 D4 G1 M कौंतेयोथ (for कुन्ती°). — (L. 11) D4 G1 M कृत्स्नां (for सर्वां). — After line 21, D4 T1 G5.6 ins.:

सागरानूपमाश्रितः ।
स्नानं दूरं समाप्लुत्य दत्त्वा बहुधनं तदा ।
केरलान्समतिक्रम्य.

सुभद्रायाश्च माधुर्यं रूपसंपद्गुणानि च ।
प्राप्तुं तां चिन्तयामास क उपायो भवेदिति ।
वेषवैकृतमापन्नः परिव्राजकरूपधृक् ।
कुकुरान्धकवृष्णीनामज्ञातो वेषधारणात् । [5]
भ्रममाणश्चरन्भैक्षं परिव्राजकवेषवान् ।
येन केनाप्युपायेन प्रविश्य च गृहं महत् ।
दृष्ट्वा सुभद्रां कृष्णस्य भगिनीमेकसुन्दरीम् ।
वासुदेवमतं ज्ञात्वा करिष्यामि हितं शुभम् ।
एवं विनिश्चयं कृत्वा दीक्षितस्तु तदाभवत् । [10]
त्रिदण्डी मुण्डितः कुण्डी अक्षमालाङ्गुलीयकः ।
योगभारं वहन्पार्थो वटवृक्षस्य कोटरम् ।
प्रविशन्नेव बीभत्सुर्वृष्टिं वर्षति वासवे ।
चिन्तयामास देवेशं केशवं क्लेशनाशनम् ।
प्रणतार्तिहरं शंभुं मायारूपेण वञ्चकम् । [15]
केशवश्चिन्तितं ज्ञात्वा दिव्यज्ञानेन दृष्टवान् ।
शयानः शयने धन्ये सत्यभामासहायवान् ।
केशवः सहसा राजञ्जहास च ननन्द च ।
पुनः पुनः सत्यभामा चाब्रवीत्पुरुषोत्तमम् ।
सत्यभामा ।
भगवंश्चिन्तयाविष्टः शयने शयितः सुखम् । [20]
भवान्बहुप्रकारेण जहास च पुनः पुनः ।
श्रोतव्यं यदि वा कृष्ण प्रसादो यदि चेन्मयि ।
वक्तुमर्हसि लोकेश तच्छ्रोतुं कामये ह्यहम् ।
श्रीभगवान् ।
पितृष्वसायाः पुत्रो मे भीमसेनानुजोऽर्जुनः ।
तीर्थयात्रां गतः पार्थः कारणात्समयात्तदा । [25]
तीर्थयात्रासमाप्तौ तु निवृत्तो निशि भारतः ।
सुभद्रां चिन्तयानस्तु तदर्थं चापि मां पुनः ।
चिन्तयन्नेव तां भद्रां यतिरूपधरोऽभवत् ।
यतिरूपप्रतिच्छन्नो द्वारकां प्राप्य माधवीम् ।
येन केनाप्युपायेन दृष्ट्वा तु वरवर्णिनीम् । [30]
वासुदेवमतं ज्ञात्वा प्रयतिष्ये मनोरथम् ।
एवं व्यवसितः पार्थो यतिलिङ्गेन पाण्डवः ।
छायायां वटवृक्षस्य वृष्टिं वर्षति वासवे ।
योगभारं वहन्नेव मानसं दुःखमास्थवान् ।
ईदृशं मां विजानाति माधवो यदि मां स्मरन् । [35]
वैशंपायनः ।
भ्रातरं तव पश्येति सत्यभामामदर्शयत् ।
तत उत्थाय शयनात्प्रस्थितो मधुसूदनः ।

114

S ins. after 1. 212. 1[cd] (T3 G3.4 after 7[ab]): D4 (suppl. fol. *sec. m.*), after 2[ab]:

चिन्तयानस्ततो भद्रामुपविष्टः शिलातले ।
रमणीये वनोद्देशे बहुपादपसंवृते ।
सालतालाश्वकर्णैश्च बकुलैरर्जुनैस्तथा ।
चम्पकाशोकपुंनागैः केतकैः पाटलैस्तथा ।
कर्णिकारैरशोकैश्च अङ्कोलैरतिमुक्तकैः । [5]
एवमादिभिरन्यैश्च संवृते स शिलातले ।
पुनः पुनश्चिन्तयानः सुभद्रां भद्रभाषिणीम् ।
यदृच्छया चोपपन्नान्वृष्णिवीरान्ददर्श ह ।
बलदेवं च हार्दिक्यं साम्बं सारणमेव च ।
प्रद्युम्नं च गदं चैव चारुदेष्णं विदूरथम् । [10]
भानुं च निशठं चैव पृथुं विपृथुमेव च ।
तथान्यांश्च बहून्पश्यन्हृदि शोकमधारयत् ।
ततस्ते सहिताः सर्वे यतिं दृष्ट्वा समुत्सुकाः ।
वृष्णयो विनयोपेताः परिवार्योपतस्थिरे ।
ततोऽर्जुनः प्रीतमनाः स्वागतं व्याजहार सः । [15]
आस्यतामास्यतां सर्वे रमणीये शिलातले ।
इत्येवमुक्ता यतिना प्रीतास्ते यादवर्षभाः ।
उपोपविविशुः सर्वे सुस्वागतमिति ब्रुवन् ।
ततस्तेषु निविष्टेषु वृष्णिवीरेषु पाण्डवः ।
आकारं गूहमानस्तु कुशलप्रश्नमब्रवीत् । [20]
सर्वत्र कुशलं चोक्त्वा बलदेवोऽब्रवीदिदम् ।
प्रसादं कुरु मे विप्र कुतस्त्वं चागतो ह्यसि ।
त्वया दृष्टानि पुण्यानि वदस्व वदतां वर ।
पर्वतांश्चैव तीर्थानि वनान्यायतनानि च ।
वैशंपायनः ।
तीर्थानां दर्शनं चैव पर्वतानां च भारत । [25]
आपगानां वनानां च कथयामास यादवे ।
ताः कथाः कथयन्नेव कथान्ते जनमेजय ।
कथां धर्मसमायुक्तां वृष्णिवीरे न्यवेदयत् ।
श्रुत्वा धर्मकथां पुण्यां वृष्णिवीरोऽभ्यपूजयत् ।
ततस्तु यादवाः सर्वे मन्त्रयन्ति स्म भारत । [30]
अयं देशातिथिः श्रीमान्यतिलिङ्गधरो द्विजः ।
आवासं कमुपाश्रित्य वसेत निरुपद्रवः ।
इत्येवमब्रुवंस्ते वै रौहिणेयं तु यादवाः ।
ददृशुः कृष्णमायान्तं सर्वे यादवनन्दनम् ।
एहि केशव तातेति रौहिणेयोऽब्रवीद्वचः । [35]

---

113

D4 T3 G1 M6-8 om. line 35. — After line 35, G5.6 ins.:

किंचिद्वाचमवष्टभ्य आप्तैः कतिपयैर्जनैः ।

114

(L. 40) D4 पांडव; T1 M6 माधवः (for मां वद). — (L. 47) T1 G1.2 M6-8 वाग्मी. — After line 51, T1 ins.:

निःसीमतररूपोऽयं सुभद्रापि तथाविधा ।

यतिलिङ्गधरो विद्वान्देशातिथिरयं द्विजः ।
वर्षरात्रनिवासार्थमागतो नः पुरं प्रति ।
स्थाने यस्मिन्निवसति तन्मे ब्रूहि जनार्दन ।
श्रीभगवान् ।
त्वयि स्थिते महाभाग परवानस्मि धर्मतः ।
स्वयं तु रुचिरे स्थाने वसतामिति मां वद । [40]
वैशंपायनः ।
सुप्रीतस्तेन वाक्येन परिष्वज्य जनार्दनम् ।
बलदेवोऽब्रवीद्वाक्यं चिन्तयित्वा महाबलः ।
आरामे तु वसेद्धीमांश्चतुरो वर्षमासकान् ।
कन्यापुरे सुभद्राया भुक्त्वा भोजनमिष्टतः ।
लतागृहेषु वसतामिति मे धीयते मतिः । [45]
लब्धानुज्ञास्त्वया तत्र मन्यन्ते सर्वयादवाः ।
वासुदेवः ।
बलवान्दर्शनीयश्च वाग्मिच्छ्रीमान्बहुश्रुतः ।
कन्यापुरसमीपे तु न युक्तमिति मे मतिः ।
गुरुः शास्ता च नेता च शास्त्रज्ञो धर्मवित्तमः ।
त्वयोक्तं न विरुध्येऽहं करिष्यामि वचस्तव । [50]
शुभाशुभस्य विज्ञाने नान्योऽस्ति भुवि कश्चन ।
बलदेवः ।
अयं देशातिथिः श्रीमान्सर्वधर्मविशारदः ।
धृतिमान्विनयोपेतः सत्यवाग्विजितेन्द्रियः ।
यतिलिङ्गधरो ह्येष को विजानाति मानसम् ।
त्वमिमं पुण्डरीकाक्ष नीत्वा कन्यापुरं शुभम् । [55]
निवेदय सुभद्रायै मद्वाक्यपरिचोदितः ।
भक्ष्यैर्भोज्यैश्च पानैश्च अन्यैरिष्टैश्च पूजय ।
Colophon.
वैशंपायनः ।
स तथेति प्रतिज्ञाय सहितो यतिना हरिः ।
कृत्वा तु संविदं तेन प्रहृष्टः केशवोऽभवत् ।
पर्वते तौ विहृत्यैव यथेष्टं कृष्णपाण्डवौ । [60]
तां पुरीं प्रविवेशाथ गृह्य हस्ते च पाण्डवम् ।
प्रविश्य च गृहं रम्यं सर्वभोगसमन्वितम् ।
पार्थमावेदयामास रुक्मिणीसत्यभामयोः ।
हृषीकेशवचः श्रुत्वा ते उभे ऊचतुर्भृशम् ।
मनोरथो महानेष हृदि नः परिवर्तते । [65]
कदा द्रक्ष्याम बीभत्सुं पाण्डवं गृहमागतम् ।
इति चिन्तयमानानां पार्थो दुःखमपानुदत् ।
प्राप्तमज्ञातपूजाभिरुत्तमाभिरपूजयत् ।

स तं प्रियातिथिश्रेष्ठं समीक्ष्य यतिमागतम् ।
सोदर्यां भगिनीं कृष्णः सुभद्रामिदमब्रवीत् । [70]
अयं देशातिथिर्भद्रे संयतो व्रतवानृषिः ।
प्राप्नोतु सततं पूजां तव कन्यापुरे वसन् ।
आर्येण च परिज्ञातः पूजनीयो यतिः सदा ।
तस्माद्भरस्व वार्ष्णेयि भक्ष्यैर्भोज्यैर्यतिं सदा ।
एष यद्यदृषिर्ब्रूयात्कार्यमेव न संशयः । [75]
सखीभिः सहिता भद्रे भवास्य वशवर्तिनी ।
पुरापि यतयो भद्रे ये भैक्षार्थमनुव्रताः ।
ते बभूवुर्दशार्हाणां कन्यापुरनिवासिनः ।
तेभ्यो भोज्यानि भक्ष्याणि यथाकालमतन्द्रिताः ।
कन्यापुरगताः कन्याः प्रयच्छन्ति यशस्विनि । [80]
सा तथेत्यब्रवीत्कृष्णं करिष्यामि यथात्थ माम् ।
तोषयिष्यामि वृत्तेन कर्मणा च द्विजर्षभम् ।
एवमेतेन रूपेण कंचित्कालं धनंजयः ।
उवास भक्ष्यैर्भोज्यैश्च भद्रया परमार्चितः ।
तस्य सर्वगुणोपेतां वासुदेवसहोदराम् । [85]
पश्यतः सततं भद्रां प्रादुरासीन्मनोभवः ।
गूहयन्निव चाकारमालोक्य वरवर्णिनीम् ।
दीर्घमुष्णं निशश्वास पार्थः कामवशं गतः ।
न कृष्णां रूपतो मेने वासुदेवसहोदराम् ।
प्राप्तां हृदीन्द्रसेनां वा साक्षाद्वा वरुणात्मजाम् । [90]
अतीतसमये काले सोदर्याणां धनंजयः ।
न सस्मार सुभद्रायाः कामाङ्कुशनिवारितः ।
क्रीडारतिपरां भद्रां सखीजनशतैर्वृताम् ।
प्रीयते स्मार्जुनः पश्यन्स्वाहामिव हुताशनः ।
पाण्डवस्य सुभद्रायाः सकाशे तु यशस्विनः । [95]
समुत्पत्तिः प्रभावश्च गदेन कथितः पुरा ।
श्रुत्वा चाशनिनिर्घोषं केशवेनापि धीमता ।
उपमामर्जुनं कृत्वा विस्तरः कथितः पुरा ।
क्रुद्धमत्तप्रलापश्च वृष्णीनामर्जुनं प्रति ।
पौरुषाण्युपमां कृत्वा प्रावर्धन्त धनुष्मताम् । [100]
अन्योन्यकलहे चापि विवादे चापि वृष्णयः ।
अर्जुनोऽपि न मे तुल्यः कुतस्त्वमिति तेऽब्रुवन् ।
जातांश्च पुत्रान्गृह्णन्त आशिषो वृष्णयोऽब्रुवन् ।
अर्जुनस्य समो वीर्ये भव तात धनुर्धरः ।
तस्मात्सुभद्रा चकमे पौरुषाद्भरतर्षभम् । [105]
सत्यसंधस्य रूपेण चातुर्येण च मोहिता ।
चारणातिथिसंवादं गदस्य च निशम्य सा ।

---

बलवानिन्द्रियग्रामो न जाने किं भविष्यति ।
— After line 55, T1 (which om. lines 56–57) ins.:
कृष्णः ।
कन्यापुरे यतेर्वासः सुखोदर्कोऽथवा भवेत् ।
सुखोदर्को भवेद्वापि नाहं जाने यदूद्वह ।
भवता परवानस्मि यावदाचन्द्रतारकम् ।
Colophon om. in T1. *Adhy. no.:* D4 229; T3 G4 180; G1.3.6 M6 179; G2 177; G5 181. — (L. 129)

अदृष्टे कृतभावाभूत्सुभद्रा भरतर्षभे ।
कीर्तयन्ददृशे यो यः कथंचित्कुरुजाङ्गलम् ।
तं तमेव सदा भद्रा बीभत्सुं साभिपृच्छति । [ 110 ]
अभीक्ष्णशः परिप्रश्नादभीक्ष्णश्रवणात्तथा ।
प्रत्यक्ष इव भद्रायाः पाण्डवः समपद्यत ।
भुजौ भुजगसंकाशौ ज्याघातेन किणीकृतौ ।
पार्थोऽयमिति पश्यन्त्या निःसंशयमजायत ।
यथारूपं हि शुश्राव सुभद्रा भरतर्षभम् । [ 115 ]
तथारूपमवेक्ष्यैनं परां प्रीतिमवाप सा ।
सा कदाचिदुपासीनं पप्रच्छ कुरुनन्दनम् ।
कथं देशाः कथं शैला नानाजनपदाः कथम् ।
सरांसि सरितश्चैव वनानि च कथं यते ।
दिशः काश्च कथं प्राप्ताश्चरता भवता सदा । [ 120 ]
स तथोक्तस्तदा भद्रां बहुनर्मानृतं ब्रुवन् ।
उवाच परमप्रीतस्तस्या बहु तथा कथाः ।
निशम्य विविधं तस्य लोके चरितमात्मनः ।
कथापरिगतो भावः कन्यायाः समपद्यत ।
पर्वसंधौ च कस्मिंश्चित्सुभद्रा भरतर्षभम् । [ 125 ]
रहस्येकान्तमासाद्य हृष्यमाणाभ्यभाषत ।
यतिना चरता लोकान्खाण्डवप्रस्थवासिनी ।
कच्चिद्भगवता दृष्टा पृथास्माकं पितृष्वसा ।
भ्रातृभिः प्रयतैः सर्वैः कच्चिदार्यो युधिष्ठिरः ।
कच्चिद्धर्मपरो भीमो धर्मराजस्य धीमतः । [ 130 ]
निवृत्तसमयः कच्चिदपराधाद्धनंजयः ।
नियमे कामभोगानां वर्तमानः प्रियेतरे ।
क्व नु पार्थश्चरत्यद्य बह्वीर्दुर्वसतीर्वसन् ।
सुखोचितो ह्यदुःखार्हो दीर्घबाहुररिंदमः ।
कच्चिच्छ्रुतो वा दृष्टो वा पार्थो भगवतार्जुनः । [ 135 ]
निशम्य वचनं तस्यास्तामुवाच हसन्निव ।
आर्ये पृथा च कुशला सपुत्रा च सहस्नुषा ।
प्रीयते पश्यती पुत्रान्कुरुक्षेत्रं च पश्यती ।
अनुज्ञातस्तु मात्रा च सोदर्यैस्तु धनंजयः ।
द्वारकामावसत्येको यतिलिङ्गेन पाण्डवः । [ 140 ]
पश्यन्ती सततं कस्मान्नाभिजानासि माधवि ।
निशम्य वचनं तस्य वासुदेवसहोदरा ।
निःश्वासबहुला तस्थौ क्षितिं विलिखती तदा ।
ततः परमसंहृष्टः सर्वशस्त्रभृतां वरः ।
अर्जुनोऽहमिति प्रीतस्तामुवाच धनंजयः । [ 145 ]
यथा तव गतो भावः श्रवणान्मयि भामिनि ।
त्वद्गतः सततं भावस्तथा शतगुणो मम ।
प्रशस्तेऽहनि धर्मेण भद्रे स्वयमहं वृतः ।
सत्यवानिव सावित्र्या भविष्यामि पतिस्तव ।
एवमुक्त्वा ततः पार्थः प्रविवेश लतागृहम् । [ 150 ]
ततः सुभद्रा ललिता लज्जाभावसमन्विता ।
मुमोह शयने दिव्ये शयाना नतथोचिता ।
कन्यापुरे च संवृत्तं ज्ञात्वा दिव्येन चक्षुषा ।
शशास रुक्मिणीं कृष्णो भोजनादिकमर्जुने ।
तदा प्रभृति तां भद्रां चिन्तयन्नेव धनंजयः । [ 155 ]
आस्ते स्म स तदारामे कार्श्येनैव सहाभिभूः ।
सुभद्रापि न च स्वस्था पार्थं प्रति बभूव सा ।
कृशा विवर्णवदना चिन्ताशोकपरायणा ।
निःश्वासपरमा भद्रा मानसेन मनस्विनी ।
न शय्यासनभोगेषु रतिं विन्दति केनचित् । [ 160 ]
न नक्तं न दिवा शेते बभूवोन्मत्तदर्शना ।
एवं शोकपरां भद्रां देवकी वाक्यमब्रवीत् ।
मा शोकं कुरु वार्ष्णेयि धृतिमालम्ब शोभने ।
निवेदयिष्ये त्वां रामे कृष्णे चैव नरर्षभे ।
पश्चाज्जानामि ते वार्तां मा शोकं कुरु माधवि । [ 165 ]
एवमुक्त्वा च सा माता भद्रायाः प्रियकामिनी ।
निवेदयामास तदा भद्रामानकदुन्दुभेः ।
रहस्येकासना तत्र भद्रास्वस्थेति चाब्रवीत् ।
आरामे तु यतिः श्रीमानर्जुनः सोऽथ नः श्रुतः ।
अक्रूराय च कृष्णाय आहुकाय च सत्यके । [ 170 ]
निवेद्यतां महाप्राज्ञ श्रोतव्यं यदि बान्धवैः ।

वैशंपायनः ।

वसुदेवस्तु तच्छ्रुत्वा अक्रूराहुकयोस्तदा ।
निवेदयित्वा कृष्णाय मन्त्रयामास नैकधा ।
इदं कार्यमिदं कृत्यमिदमेवं विनिश्चितम् ।
अक्रूरश्चोग्रसेनश्च सत्यकश्च गदेन च । [ 175 ]
पृथुश्रवाश्च कृष्णश्च सहिताः शिनिना सह ।
रुक्मिणी सत्यभामा च देवकी रोहिणी तथा ।
वासुदेवेन सहिताः पुरोहितमते स्थिताः ।
विवाहं मन्त्रयामासुर्द्वादशेऽहनि भारत ।
अज्ञातं रौहिणेयस्य उद्धवस्य च भारत । [ 180 ]
विवाहं तु सुभद्रायाः कर्तुकामो गदाग्रजः ।
महादेवस्य पूजार्थं महोत्सवमिति ब्रुवन् ।
चतुस्त्रिंशदहोरात्रं सुभद्रार्तिप्रशान्तये ।
नगरे घोषयामास हितार्थं सव्यसाचिनः ।

---

D4 प्रथितैः; T1 G1.6 M6-8 प्रीयते (for प्रयतैः). — (L. 137) G3.5.6 कुशलिनी (for च कुशला). D4 T1 G1 M6-8 आर्या कुशलिनी कुंती. D4 T1 G (except G3.4) सहपुत्रा (for सपुत्रा च). — (L. 156) D4 G6 M6-8 कार्श्येनेव; T1 कार्श्यजेन. G1 कामेन भृशपीडितः. — After line 181, G5.6 ins.:

उमासखस्य देवस्य ब्रह्मविश्वेशरूपिणः ।

— (L. 182) G5.6 व्याजेन मधुसूदनः (for the posterior

इतश्चतुर्थे त्वहनि अन्तर्द्वीपं तु गम्यताम् । [ 185 ]
सदारैः सानुयात्रैश्च सपुत्रैश्च सबान्धवैः ।
गन्तव्यं सर्ववर्णैश्च गन्तव्यं सर्वयादवैः ।
एवमुक्तास्तु ते सर्वे तथा चक्रुश्च सर्वशः ।
ततः सर्वदशार्हाणामन्तर्द्वीपे तु भारत ।
चतुस्त्रिंशदहोरात्रं बभूव परमोत्सवः । [ 190 ]
कृष्णरामाहुकाक्रूरप्रद्युम्नशिनिसत्यकाः ।
समुद्रं प्रययुर्हृष्टाः कुकुरान्धकवृष्णयः ।
युक्तयन्त्रपताकाभिर्वृष्णयो ब्राह्मणैः सह ।
समुद्रं प्रययुर्नौभिः सर्वे पुरनिवासिनः ।
ततस्त्वरितमागम्य दाशार्हगणपूजितम् । [ 195 ]
सुभद्रा पुण्डरीकाक्षमब्रवीच्चतिशासनात् ।
कृतवान्द्वादशाहानि स्नाता स भगवानिह ।
तिष्ठतस्तस्य कः कुर्यादुपस्थानविधिं प्रति ।
तामुवाच हृषीकेशः कस्त्वदन्यो विशेषतः ।
तमृषिं प्रत्युपस्थातुमितो नार्हति मानवः । [ 200 ]
त्वमेवास्मन्मतेनास्य महर्षेर्वशवर्तिनी ।
कुरु सर्वाणि कार्याणि कीर्तिं धर्ममवेक्ष्य च ।
तस्य चातिथिमुख्यस्य सर्वेषां च तपस्विनाम् ।
संविधानपरा भद्रे भव त्वं वशवर्तिनी ।

वैशंपायनः ।

एवमादिश्य भद्रां च रक्षां च मधुसूदनः । [ 205 ]
ययौ शङ्खप्रणादेन भेरीणां च महास्वनैः ।
ततस्तद्द्वीपमासाद्य दानधर्मपरायणाः ।
उग्रसेनमुखाः सर्वे विज ुः कुकुरान्धकाः ।
सप्तयोजनविस्तार आयतो दशयोजनम् ।
बभूव स महाद्वीपः सपर्वतमहावनः । [ 210 ]
सेतुपुष्करिणीजालैराक्रीडैः सर्वसात्वताम् ।
वापीपल्वलसंवेश्च काननैश्च मनोरमैः ।
वासुदेवसमैर्द्वीपः स सर्वैः कुकुरान्धकैः ।
बभूव परमोपेतस्त्रिविष्टप इवामरैः ।
चतुस्त्रिंशदहोरात्रं दानधर्मपरायणाः । [ 215 ]
उग्रसेनमुखाः सर्वे विजह्रुः कुकुरान्धकाः ।
विचित्रमाल्याभरणाश्चित्ररूपानुलेपनाः ।
विहाराभिमुखाः सर्वे यादवाः पानसंयुताः ।
सुनृत्तगीतवादित्रै रममाणास्ततोऽभवन् ।
तत्र याते दशार्हाणामृषभे शार्ङ्गधन्वनि । [ 220 ]
सुभद्रोद्वाहनं पार्थः प्राप्तकालममन्यत ।

Colophon.

वैशंपायनः ।

वृष्ण्यन्धकपुरात्तस्मादपयातं च पाण्डवः ।
विनिश्चित्य ततः पार्थः सुभद्रामिदमब्रवीत् ।
शृणु भद्रे यथाशास्त्रं यथार्थमृषिभिः कृतम् ।
कन्यायास्तु पिता भ्राता माता मातुल एव च । [ 225 ]
पितृभ्राता गुरुश्चापि दाने तु प्रभुतां गताः ।
महोत्सवं पशुपतेर्द्रष्टुकामः पिताहुकः ।
अन्तर्द्वीपं गतो भद्रे पुत्रैः पौत्रैः सबान्धवैः ।
मम चैव विशालाक्षि विदेशस्थास्तु बान्धवाः ।
तस्मात्सुभद्रे गान्धर्वो विवाहः पञ्चमो भवेत् । [ 230 ]
समागमे तु कन्यायाः क्रियाः प्रोक्ताश्चतुर्विधाः ।
तेषां प्रवृत्तिं साधूनां शृणु माधवि तद्यथा ।
वरमाहूय विधिना पितृदत्ता यथार्थिने ।
सा पत्नी तु बुधैरुक्ता सा तु वश्या पतिव्रता ।
भृत्यानां भरणार्थाय आत्मनः पोषणाय च । [ 235 ]
दारे स्थिते गृहीता सा भार्या चेति बुधैर्मता ।
धर्मतो वरयित्वा तु आनीय स्वं निवेशनम् ।
न्यायेन दत्ता तारुण्ये दाराः पितृकृता भवेत् ।
जनयेद्या तु भर्तारं जाया इत्येव नामतः ।
दाराः पत्नी च भार्या च जाया चेति चतुर्विधाः । [ 240 ]
चतस्र एवाग्निसाक्ष्याः क्रियायुक्तास्तु धर्मतः ।
गान्धर्वेण विवाहेन रागात्पुत्रार्थकारणात् ।
आत्मनानुगृहीता या सा तु वश्या प्रजावती ।
गान्धर्वस्तु क्रियाहीनो रागादेव प्रवर्तते ।
सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः । [ 245 ]
मयोक्तमक्रियं चापि कर्तव्यं माधवि त्वया ।
अयनं चैव मासश्च ऋक्षं पक्षस्तथा तिथिः ।
करणं च मुहूर्तं च लग्नसंपद्यथाद्य वै ।
विवाहस्य विशालाक्षि प्रशस्तं चोत्तरायणम् ।
वैशाखश्चैव मासानां पक्षाणां शुभ्र एव च । [ 250 ]
नक्षत्राणां तथा हस्तस्तृतीया च तिथिष्वपि ।
लग्नो हि मकरः श्रेष्ठः करणानां बवस्तथा ।
मैत्रो मुहूर्तो वैवाह्य आवयोः शुभकर्मणि ।
सर्वसंपदियं भद्रे अद्य रात्रौ भविष्यति ।
भगवानस्तमभ्येति तपनस्तपतां वरः । [ 255 ]
नारायणो हि सर्वज्ञो नानुबुध्येत विश्वकृत् ।
धर्मसंकटमापन्ने किं नु कृत्वा शुभं भवेत् ।
मनोभवेन कामेन मोहितं मा प्रलापिनम् ।
प्रतिवाक्यं तु मे देहि किं न वक्ष्यसि माधवि ।

half). — D4 T1 G5.6 om. line 183. — L. 216 = line 208 above. Colophon om. in T2 G1-4. *Adhy. no.:* D4 230; T1 226; G1.5.6 M6 180. — After line 224, G (except G5.6) M6-8 ins.:

विवाहं बहुधा वत्से वर्णानां धर्मसंयुतम् ।

— (L. 236) D4 G1 M6-8 मृते (for स्थिते). G1 M6-8 या (for सा). G2-4 दाने गृहीता या नारी. G (except G5.6) M6-8 सा भार्या (for भार्या च). — After line 238, D4 G1 M6-8 read lines 242-43. — After line 260, G2-4 ins.:

121

वैशंपायनः ।

अर्जुनस्य वचः श्रुत्वा चिन्तयन्ती जनार्दनम् । [ 260 ]
नोवाच किंचिद्वचनं बाष्पदूषितलोचना ।
रागोन्मादप्रलापी स्यादर्जुनो जयतां वरः ।
चिन्तयामास पितरं प्रविश्य च लतागृहम् ।
चिन्तयानं तु कौन्तेयं ज्ञात्वा शच्या शचीपतिः ।
सहितो नारदाद्यैस्तु मुनिसिद्धाप्सरोगणैः । [ 265 ]
अरुन्धत्या वसिष्ठेन आजगाम कुशस्थलीम् ।
चिन्तितं च सुभद्रायाश्चिन्तयित्वा जनार्दनः ।
निद्रयापहृतज्ञानं रौहिणेयं विना तदा ।
सहाक्रूरेण शिनिना सत्यकेन गदेन च ।
वसुदेवेन देवक्या आहुकेन च धीमता । [ 270 ]
आजगाम पुरीं रात्रौ द्वारकां स्वजनैर्वृतः ।
पूजयित्वा तु देवेशं नारदाद्यैर्महर्षिभिः ।
कुशलप्रश्नमुक्त्वा तु देवेन्द्रेणाभियाचितः ।
वैवाहिकक्रियां कृष्णस्तथेत्येवमुवाच ह ।
आहुको वसुदेवश्च सहाक्रूरः ससात्यकिः । [ 275 ]
अभिप्रणम्य शिरसा पाकशासनमब्रुवन् ।
देवदेव नमस्तेऽस्तु लोकनाथ जगत्पते ।
वयं धन्याः स्म लोकेषु बान्धवैः सहिता विभो ।
कृतप्रसादास्तु वयं तव वाक्येन विश्वजित् ।
एवमुक्त्वा प्रसाद्यैनं पूजयित्वा प्रयत्नतः । [ 280 ]
महेन्द्रशासनात्सर्वे सहिताश्च महर्षिभिः ।
विवाहं कारयामासुः शक्रपुत्रस्य शास्त्रतः ।
अरुन्धती शची देवी रुक्मिणी देवकी तथा ।
दिव्यस्त्रीभिश्च सहिताः क्रियां भद्रां प्रयोजयन् ।
महर्षिः काश्यपो होता सदस्या नारदादयः । [ 285 ]
पुण्याशिषः प्रयोक्तारः सर्वे ह्यासंस्तदार्जुने ।
अभिषेकं ततः कृत्वा महेन्द्रः पाकशासनिम् ।
लोकपालैस्तु सहितः सर्वैर्देवैरभिष्टुतः ।
किरीटाङ्गदहाराद्यैर्हस्ताभरणकुण्डलैः ।
भूषयित्वा तु तं पार्थं द्वितीयमिव वासवम् । [ 290 ]
पुत्रं परिष्वज्य तदा प्रीतिमाप पुरंदरः ।
शची देवी तथा भद्रामरुन्धत्यादिभिस्तदा ।
कारयामास वैवाह्यं मङ्गल्यं यादवस्त्रियः ।
सहाप्सरोभिर्मुदिता भूषणैश्चाभ्यपूजयन् ।
पौलोमीमिव मन्यन्ते सुभद्रां देवयोषितः । [ 295 ]
ततो विवाहो ववृधे कृतः सर्वगुणान्वितः ।
तस्याः पाणिं गृहीत्वा तु मन्त्रहोमपुरस्कृतम् ।
यथा तस्यैव हि पिता शच्या इव शतक्रतुः ।
सा जिष्णुमधिकं भेजे सुभद्रा चारुदर्शना ।
पार्थस्य सदृशी भद्रा रूपेण वयसा तथा । [ 300 ]
सुभद्रायाश्च पार्थोऽपि सदृशो रूपलक्षणैः ।
इत्यूचुश्च तदा देवाः प्रीताः सेन्द्रपुरोगमाः ।
एवं निवेश्य देवास्तु गन्धर्वैः साप्सरोगणैः ।
आमन्त्र्य यादवान्सर्वे विप्रजग्मुर्यथागतम् ।
यादवाः पार्थमामन्त्र्य अन्तर्द्वीपं गतास्तदा । [ 305 ]
वासुदेवस्तदा पार्थमुवाच यदुनन्दनः ।
द्वाविंशद्दिवसान्पार्थ इहोष्य भरतर्षभ ।
मामकं रथमारुह्य सैन्यसुग्रीवयोजितम् ।
सुभद्रया सुखं पार्थ खाण्डवप्रस्थमाविश ।
यादवैः सहितः पश्चादागमिष्यामि भारत । [ 310 ]
यतिवेषेण निरतो वस त्वं रुक्मिणीगृहे ।

वैशंपायनः ।

एवमुक्त्वा प्रचक्राम अन्तर्द्वीपं जनार्दनः ।
कृतोद्वाहस्तदा पार्थः कृतकार्योऽभवत्तदा ।
तस्यां चोपगतो भावः पार्थस्य सहसागतः ।
स तया युयुजे वीरो भद्रया भरतर्षभः । [ 315 ]
अभिनिष्पन्नया रामः सीतयेव समन्वितः ।
स हि जिष्णुर्विजज्ञे तां ह्रीं श्रियं संनतिक्रियाम् ।
द्वादशानां वरस्त्रीणां रूपेणासदृशीं सतीम् ।
स प्रकृत्या श्रिया दीप्तः संदिदीपे तयाधिकम् ।
उद्यत्सहस्रदीप्तांशुः शरदीव दिवाकरः । [ 320 ]
सा तु तं मनुजव्याघ्रमनुरक्ता मनस्विनी ।
कन्यापुरगता भूत्वा तत्परा समपद्यत ।

Colophon.

वैशंपायनः ।

वृष्ण्यन्धकपुरात्तत्र अपयानं धनंजयः ।
विनिश्चित्य तथा पार्थः सुभद्रामिदमब्रवीत् ।
द्विजानां गणमुख्यानां यथार्हं प्रतिपादय । [ 325 ]
भक्ष्यैर्भोज्यैश्च कामैश्च प्रयच्छ प्रतियास्यताम् ।
आत्मनश्च समुद्दिश्य महाव्रतसमापनम् ।
गच्छ भद्रे स्वयं तूर्णं महाराजनिवेशनम् ।
तेजोबलजवोपेतै रत्नैर्हयवरोत्तमैः ।
सैन्यसुग्रीवसंयुक्तं रथं तूर्णमिहानय । [ 330 ]
क्रीडार्थमिति भाषित्वा सखीभिः सुभगे सह ।
क्षिप्रमादाय पर्येहि रथं सर्वायुधानि च ।
अनुकर्षान्पताकाश्च तूणीरांश्च धनूंषि च ।
सर्वान्रथवरे कुर्याः सोत्सेधाश्च महागदाः ।

---

बहुप्रकारमुक्तापि अर्जुनेन महात्मना ।
तत्सर्वं वितथीकृत्य चिन्तयन्ती जगद्गुरुम् ।
— After line 317, Ms-8 ins.:
शच्यहल्या चेन्द्रसेना दमयन्ती यथा रतिः ।
सीता च रुक्मिणी कृष्णा सत्यभामा तिलोत्तमा ।
अरुन्धती च यथा.

वैशंपायनः ।

अर्जुनेनैवमुक्ता तु सुभद्रा भद्रभाषिणी । [335]
जगाम नृपतेर्वेश्म सखीभिस्त्वरिता सह ।
क्रीडार्थमिव तत्रस्थान्रक्षिणो वाक्यमब्रवीत् ।
रथेनानेन यास्यामि महाव्रतसमापनम् ।
सैन्यसुग्रीवयुक्तेन सायुधेन च शार्ङ्गिणः ।
सुभद्रयैवमुक्ते तु जनाः प्राञ्जलयोऽब्रुवन् । [340]
रथेनानेन भद्रे त्वं यथेष्टं क्रियतामिति ।
योजयित्वा रथवरं कल्याणैरभिभाष्य ताम् ।
यथोक्तं सर्वमारोप्य सखीभिः सह भामिनी ।
क्षिप्रमादाय कल्याणी सुभद्रार्जुनमब्रवीत् ।
रथोऽयं रथिनां श्रेष्ठ आनीतस्तव शासनात् । [345]
स्वस्ति याहि यथाकामं कुरून्कौरवनन्दन ।
निवेद्य तं रथं भर्तुः सुभद्रा भद्रसंमता ।
ब्राह्मणेभ्यो ददौ हृष्टा तदा सा विविधं वसु ।
स्नेहवन्ति च भोज्यानि प्रददावीप्सितानि च ।
यथाकामं यथाश्रद्धं वस्त्राणि विविधानि च । [350]
तर्पिता विविधैर्भक्ष्यैस्तान्यवाप्य वसूनि च ।
ब्राह्मणाः स्वगृहं जग्मुः प्रयुज्य परमाशिषः ।
सुभद्रया तु विज्ञप्तः पूर्वमेव धनंजयः ।
रश्मिप्रग्रहणे पार्थ न मेऽस्ति सदृशो भुवि ।
तस्मात्सा पूर्वमारुह्य रश्मीञ्जग्राह माधवी । [355]
सोदरा वासुदेवस्य कृतस्वस्त्ययना इयात् ।
वर्जयित्वा तु तल्लिङ्गं समुच्छ्रितमहाधनुः ।
आरुरोह रथश्रेष्ठं शुक्लवासा धनंजयः ।
महेन्द्रदत्तमकुटं तथा ह्याभरणानि च ।
अलंकृत्य तु कौन्तेयः प्रयातुमुपचक्रमे । [360]
ततः कन्यापुरे घोषस्तुमुलः समपद्यत ।
दृष्ट्वा रथगतं पार्थं खड्गपाणिं धनुर्धरम् ।
अभीशुहस्तां सुश्रोणीं अर्जुनेन रथे स्थिताम् ।
ऊचुः कन्यापुरे कन्या वासुदेवसहोदराम् ।
सर्वे कामाः समृद्धास्ते सुभद्रे भद्रभाषिणि । [365]
वासुदेवप्रियं लब्ध्वा भर्तारं वीरमर्जुनम् ।
सर्वसीमन्तिनीनां त्वं श्रेष्ठा कृष्णसहोदरे ।
यस्मात्सर्वमनुष्याणां श्रेष्ठो भर्ता तवार्जुनः ।
उपपन्नस्त्वया वीरः सर्वलोकमहारथः ।
स्वस्ति याहि गृहं भद्रे सुहृद्भिः संगमोऽस्तु ते । [370]

वैशंपायनः ।

एवमुक्ता प्रहृष्टाभिः सखीभिः परिनन्दिता ।
भद्रा भद्रजवोपेतान्पुनरश्वानचोदयत् ।
ततश्चामरहस्ता सा सखी कुब्जाङ्गनाभवत् ।
ततः कन्यापुरद्वारात्सघोषमभिनिःसृतम् ।
ददृशुस्तं रथश्रेष्ठं जना जीमूतनिःस्वनम् । [375]
सुभद्रासंगृहीतस्य रथस्य महतो रवम् ।
मेघस्वनमिवाकाशे शुश्रुवुः पुरवासिनः ।
सुभद्रया च संपन्ने तिष्ठन्रथवरेऽर्जुनः ।
प्रबभौ परयोपेतः कैलास इव गङ्गया ।
पार्थः सुभद्रासहितो विरराज महारथः । [380]
पार्थस्येव पिता शक्रो यथा शच्या समन्वितः ।
सुभद्रां प्रेक्ष्य धर्मेण ह्रियमाणां यशस्विनीम् ।
चक्रुः किलिकिलाशब्दमासाद्य बहवो जनाः ।
दाशार्हाणां कुलस्य श्रीः सुभद्रा भद्रभाषिणी ।
अभिकामा सकामेन पार्थेन सह गच्छति । [385]
अथापरे हि संक्रुद्धा गृह्णीत व्रत माचिरम् ।
इति संवार्यमाणानां स नादः सुमहानभूत् ।
स तेन जनघोषेण वीरो गज इवार्दितः ।
ववर्ष शरवर्षाणि न तु कंचन रोपयत् ।
मुमोच निशितान्बाणान्दीप्यमानान्स्वतेजसा । [390]
प्रासादवरसंघेषु हर्म्येषु भवनेषु च ।
प्रासादपङ्क्तिस्तम्भेषु वेदिकासु ध्वजेषु च ।
मुमोच निशितान्बाणान्न च कंचन रोपयत् ।
क्षोभयित्वा पुरश्रेष्ठं गरुत्मानिव सागरम् ।
प्रेक्षन्रैवतकद्वारं निर्ययौ भरतर्षभः । [395]

Colophon.

वैशंपायनः ।

शासनात्पुरुषेन्द्रस्य बलेन महता बली ।
गिरौ रैवतके नित्यं बभूव विपृथुश्रवाः ।
प्रवासे वासुदेवस्य तस्मिन्हलधरोपमः ।
संबभूव तदा गोप्ता पुरस्य पुरवर्धनः ।
प्राप्य पाण्डवनिर्याणं निर्ययौ विपृथुश्रवाः । [400]
निशम्य पुरनिर्घोषं स्वमनीकमचोदयत् ।
सोऽभिपत्य तदाध्वानं ददर्श पुरुषर्षभम् ।
निःसृतं द्वारकाद्वारादंशुमन्तमिवाम्बुदात् ।
सविद्युतमिवाम्भोदं प्रेक्ष्य बाणधनुर्धरम् ।
पार्थमासाद्य योधानां विस्मयः समपद्यत । [405]
उदीर्णरथनागाश्वमनीकमभिवीक्ष्य तत् ।
उवाच परमप्रीता सुभद्रा भद्रभाषिणी ।
संग्रहीतुमभिप्रायो दीर्घकालकृतो मम ।
युध्यमानस्य संग्रामे रथं तव नरर्षभ ।
ओजस्तेजोद्युतिबलैराचितस्य महात्मनः । [410]
पार्थस्य वै सारथिर्वे भवेथा इत्यशिक्षयन् ।

---

Colophon om. in T1. *Adhy. no.:* D1 231; T2 G1.4–8 M6–8 181; G2 179; G3 182. — (L. 329) D1 T1 G1.3 M6–8 शुक्लैः; G3.6 श्लक्ष्णैः (for रत्नैः). — (L. 357) D1 T1 G1 M6–8 व्यत्ययित्वा; G3.6 प्रतिलभ्वा. — T2 G2–4

एवमुक्तः प्रियां प्रीतः प्रत्युवाच नरर्षभः ।
चोदयाश्वानसंसक्तान्विशन्तु विपृथोर्बलम् ।
बहुभिर्युध्यमानस्य तावकानां जिघांसतः ।
पश्य बाहुबलं भद्रे शरान्विक्षिपतो मम । [ 415 ]
एवमुक्ता ततो भद्रा पार्थेन भरतर्षभ ।
सुचोद चाश्वान्विस्रब्धा ततस्ते विविशुर्बलम् ।
तदाहतमहावाद्यं समुदग्रध्वजायुतम् ।
अनीकं विपृथोर्हृष्टं पार्थमेवान्ववर्तत ।
रथैर्बहुविधैर्हृष्टाः सदश्वैश्च महाजवैः । [ 420 ]
किरन्तः शरवर्षाणि परिवव्रुर्धनंजयम् ।
तेषामस्त्राणि संवार्य दिव्यैरस्त्रैर्महास्त्रवित् ।
आवृणोन्महदाकाशं शरैः परपुरंजयः ।
तेषां बाणान्महाबाहुर्मकुटान्यङ्गदान्यपि ।
चिच्छेद निशितैर्बाणैः शरांश्चैव धनूंषि च । [ 425 ]
युगानीषा वरूथानि यन्त्राणि विविधानि च ।
अजिघांसन्परान्पार्थश्चिच्छेद निशितैः शरैः ।
निर्धनुष्कान्विकवचान्विरथांश्च महारथान् ।
कृत्वा पार्थः प्रियां प्रीतः प्रेक्ष्यतामित्यदर्शयत् ।
सा दृष्ट्वा महदाश्चर्यं सुभद्रा पार्थमब्रवीत् । [ 430 ]
अवाप्तार्थास्मि भद्रं ते याहि पार्थ यथासुखम् ।
संसक्तं पाण्डुपुत्रेण समीक्ष्य विपृथुर्बलम् ।
त्वरमाणोऽभिसंक्रम्य स्थीयतामित्यभाषत ।
तत्तु सेनापतेर्वाक्यं नात्यवर्तन्त यादवाः ।
सागरे मारुतोद्धूता वेलामिव महोर्मयः । [ 435 ]
ततो रथवरात्तूर्णमवरुह्य नरर्षभः ।
अभिगम्य नरव्याघ्रं प्रहृष्टः परिषस्वजे ।
सोऽब्रवीत्पार्थमासाद्य दीर्घकालमिदं तव ।
निवासमभिजानामि शङ्खचक्रगदाधरात् ।
न मेऽस्त्यविदितं किंचिद्यदाचरितं त्वया । [ 440 ]
सुभद्रासंप्रयोगेन प्रीतस्तव जनार्दनः ।
प्राप्तस्य यतिलिङ्गेन द्वारकां तु धनंजय ।
विसृष्टा सर्ववृष्णीनामृषभेण च सोदरा ।
त्वमिमां वीर दाशार्हीं शचीमिव शचीपतिः ।
भक्तां गुणवतीं भद्रां सदा सत्कर्तुमर्हसि । [ 445 ]
बन्धुर्भव सुभद्राया गतिश्च त्वं धनंजय ।
बन्धुमानसि रामेण महेन्द्रावरजेन च ।
मामेव हि सदाकार्षीन्मन्त्रिणं मधुसूदनः ।
अन्तरेण सुभद्रां च त्वां च तात धनंजय ।
इमं रथवरं दिव्यं सर्वशस्त्रसमन्वितम् । [ 450 ]
इदमेवानुयात्रं च निर्दिश्य गदपूर्वजः ।
अन्तर्द्वीपं तदा वीर यातो वृष्णिसुखावहः ।
दीर्घकालावरुद्धं त्वां संप्राप्तं प्रियया सह ।
पश्यन्तु भ्रातरस्तत्र वज्रपाणिमिवामराः ।
आगते तु दशार्हाणामृषभे शार्ङ्गधन्वनि । [ 455 ]
भद्रामनुगमिष्यन्ति रत्नानि च वसूनि च ।
अरिष्टं गच्छ पन्थानं सुखी भव धनंजय ।
नष्टशोकैर्विशोकस्य सुहृद्भिः संगमोऽस्तु ते ।

वैशंपायनः ।

ततो विपृथुमामन्त्र्य पार्थः प्रीतोऽभिवाद्य च ।
कृष्णस्य मतमास्थाय कृष्णस्य रथमास्थितः । [ 460 ]
पूर्वमेव तु पार्थाय कृष्णेन विनियोजितम् ।
सर्वरत्नसुसंपूर्णं सर्वभोगसमन्वितम् ।

115

After 1. 213. 12ab, K4 (marg. *sec. m.*) D4 (suppl. fol. *sec. m.*) S ins.:

उद्योगं कृतवन्तस्ते भेरीं संनाद्य यादवाः ।
अर्जुनस्तु तदा श्रुत्वा भेरीसंनादनं महत् ।
कौन्तेयस्त्वरमाणस्तु सुभद्रामभ्यभाषत ।
आयान्ति वृष्णयः सर्वे ससुहृज्जनबान्धवाः ।
त्वदर्थं योद्धुकामास्ते मदरक्तान्तलोचनाः । [ 5 ]
प्रमत्तानशुचीन्मूढान्सुरामत्तान्नराधमान् ।
वामिनो वाशिनादींस्तु करिष्यामि शरोत्तमैः ।
उताहो वा मदोन्मत्तान्नयिष्यामि यमक्षयम् ।
एवमुक्त्वा प्रियां पार्थो न्यवर्तत महाबलः ।
निवर्तमानं दृष्ट्वैव सुभद्रा त्रस्ततां गता । [ 10 ]
एवं मा वद पार्थेति पादयोः पतिता तदा ।
सुभद्रा नु कलिर्जाता वृष्णीनां निधनाय च ।
एवं ब्रुवन्तः पौरास्ते जनवादं जनाः प्रभो ।
मम शोकं विवर्धन्ति तस्मात्पापं न चिन्तय ।
परिवादभयान्मुक्ता त्वत्प्रसादाद्भवाम्यहम् । [ 15 ]
एवमुक्तस्ततः पार्थः प्रियया भद्रया तदा ।
गमनाय मतिं चक्रे पार्थः सत्यपराक्रमः ।
स्मितपूर्वं तदाभाष्य परिष्वज्य प्रियां तदा ।
उत्थाप्य च पुनः पार्थो याहि याहीति सोऽब्रवीत् ।
ततः सुभद्रा त्वरिता रश्मीन्संगृह्य पाणिना । [ 20 ]
चोदयामास जवनान्शीघ्रमश्वान्कृतत्वरा ।
ततस्तु कृतसंनाहा वृष्णिवीराः समाहिताः ।

---

om. line 393. Colophon. *Adhy. no.*: D4 232; T1 228; T2 G1. 4-6 M6-8 182; G2 180; G3 183. — (L. 410) D4 G1 M6-8 अन्वितस्य; T1 ऊर्जितस्य; G2 अर्चितस्य; G3. 5 अजितस्य.

115

K4 om. lines 1, 8, 16-19, 24-25 and 28 to end. — (L. 7) D4 M6-8 वमनं पानशाटीनां; T1 वमनं पानश्रमनं; G1 वमनं पानमत्तानां; G2 corrupt; G3 om. partly

प्रत्यानयार्थं पार्थस्य जवनैस्तुरगोत्तमैः ।
राजमार्गमनुप्राप्ता दृष्ट्वा पार्थस्य विक्रमम् ।
प्रासादपङ्क्तिस्तम्भेषु वेदिकासु ध्वजेषु च । [25]
अर्जुनस्य शरान्दृष्ट्वा विस्मयं परमं गताः ।
केशवस्य वचस्तथ्यं मन्यमानास्तु यादवाः ।
अतीत्य शैलं रैवतकं श्रुत्वा तु विपृथोर्वचः ।
अर्जुनेन कृतं श्रुत्वा गन्तुकामास्तु वृष्णयः ।
श्रुत्वा दूरं गतं पार्थं न्यवर्तन्त नराधिपाः । [30]
पुरोद्यानान्यतिक्रम्य विशालं च गिरिव्रजम् ।
सानुं सुआवर्तं चैव वनान्युपवनानि च ।
पुण्येष्वानर्तराष्ट्रेषु वापीपद्मसरांसि च ।
प्राप्य धेनुमतीतीर्थमश्वरोधसरः प्रति ।
प्रेक्ष्यावर्तं ततः शैलमर्बुदं च नगोत्तमम् । [35]
आराच्छृङ्गमुपस्थाय तीर्त्वा कारवतीं नदीम् ।
प्राप्य साल्वेयराष्ट्राणि निषधानभ्यतीत्य च ।
देवापृथुपुरं पश्यन्सर्वतः सुसमाहितः ।
तमतीत्य महाबाहुर्देवारण्यमपश्यत ।
पूजयामासुरायान्तं देवारण्यमहर्षयः । [40]
स वनानि नदीः शैलान्गिरिप्रस्रवणानि च ।
अतीत्य च तथा पार्थः सुभद्रासारथिस्तदा ।
कौरवं विषयं प्राप्य विशङ्कः समपद्यत ।
सोदर्याणां महाबाहुः सिंहाशयमिवाशयम् ।
दूरादुपवनोपेतां दाशार्हप्रतिमां पुरीम् । [45]

Colophon.

वैशंपायनः ।

क्रोशमात्रे पुरस्यासीद्गोष्ठः पार्थस्य शोभनः ।
तत्रासीयास्स बीभत्सुर्निविष्टो यदुकन्यया ।
ततः सुभद्रां सत्कृत्य पार्थो वचनमब्रवीत् ।
गोपालिकानां वेषेण गच्छ त्वं वृजिनं पुरम् ।
कामव्याहारिणी कृष्णा रोचतां ते वचो मम । [50]
दृष्ट्वा तु परुषं ब्रूयात्सह तत्र मया गताम् ।
अन्यवेषेण तु गतां दृष्ट्वा सा त्वां प्रियं वदेत् ।
यत्तु सा प्रथमं ब्रूयात्तु तस्यास्ति निवर्तनम् ।
तस्मान्मानं च दर्पं च व्यपनीय स्वयं व्रज ।
तस्य तद्वचनं श्रुत्वा सुभद्रा प्रत्यभाषत । [55]
एवमेतत्करिष्यामि यथा त्वं पार्थ भाषसे ।
सुभद्राया वचः श्रुत्वा सुप्रीतः पाकशासनिः ।
गोपालान्स समानीय त्वरितो वाक्यमब्रवीत् ।
तरुण्यः सन्ति यावन्त्यस्ताः सर्वा व्रजयोषितः ।
आगच्छन्तु गमिष्यन्त्या भद्रया सह संगताः । [60]
इन्द्रप्रस्थं पुरवरं कृष्णां द्रष्टुं यशस्विनीम् ।
एतच्छ्रुत्वा तु गोपालैरानीता व्रजयोषितः ।
ततस्ताभिः परिवृतां व्रजस्त्रीभिरनिन्दिताम् ।

## 116

After 1. 213. 20, D1 (suppl. fol., *sec. m.*) S ins.:

ततः सुभद्रां वार्ष्णेयीं परिष्वज्य शुभाननाम् ।
अङ्के निवेश्य मुदिता वासुदेवं प्रशस्य तु ।
ततः किलिकिलाशब्दः क्षणेन समपद्यत ।
हर्षोद्दानर्तयोधानामासाद्य वृजिनं पुरम् ।
देवपुत्रप्रकाशास्ते जाम्बूनदमयध्वजाः । [5]
पृष्ठतोऽनुययुः पार्थं पुरुहूतमिवामराः ।
गोभिरुष्ट्रैः सदश्वैश्च युक्तानि बहुला जनाः ।
ददृशुर्यानमुख्यानि दाशार्हपुरवासिनाम् ।
ततः पुरवरे यूनां प्रहर्षः समजायत ।
प्रभासादागतं पार्थं दृष्ट्वा स्वमिव बान्धवम् । [10]
सोऽभियाय पुरश्रेष्ठं दाशार्हगणसंवृतः ।
पौरैः पुरवरैः प्रीत्या परया चाभिनन्दितः ।
प्राप्य चान्तःपुरद्वारमवरुह्य धनंजयः ।
ववन्दे धौम्यमासाद्य मातरं च धनंजयः ।
स्पृष्ट्वा च चरणौ राज्ञो भीमस्य च धनंजयः । [15]
यमाभ्यां वन्दितो हृष्टः सस्वजेऽभिननन्द च ।
ब्राह्मणप्रमुखान्सर्वान्भ्रातृभिः सह संगतः ।
यथार्हं मानयामास पौरजानपदानपि ।
तत्रस्थान्यनुयात्राणि प्रदाय गुरवे वधूम् ।
पूजयांचक्रुरासाद्य कुन्तीपुत्रं युधिष्ठिरम् । [20]
पुरस्तादेव तेषां तु स महात्मा महायशाः ।
पूजनार्होऽभवद्राजा यथैव गदपूर्वजः ।
पाण्डवेन यथार्हं ते पूजार्हेण सुपूजिताः ।
न्यविशन्ताभ्यनुज्ञाता राज्ञा तुष्टा यशस्विना ।
तामदीनामदीनार्हां सुभद्रां प्रीतिवर्धिनीम् । [25]
साक्षाच्छ्रियममन्यन्त पार्थाः कृष्णसहोदराम् ।
गुरूणां श्वशुराणां च देवराणां तथैव च ।
सुभद्रा स्वेन वृत्तेन बभूव परमप्रिया ।

---

(meaning?). — After line 27, K4 ins.:

स्तूयमानोऽपि तैश्चापि निवृत्तः पुरुषर्षभः ।

— (L. 35) Some MSS. अंर्बुदं. — Colophon om. in T1. *Adhy. no.:* D4 234; T3 G4-8 M6-8 184; G1 183; G2 182; G3 185.

116

(L. 10) T1 G1.3.6 M6-8 प्रवासाद्. — After line 26, T1 ins.:

ते उभे रूपसंपन्ने कृष्णाभद्रे पुरीकसः ।
रूपं नैतादृशं लोके विद्यतेऽत्र विसिष्मिरे ।

117

After 1. 214. 17, S ins.:

विहरन्खाण्डवप्रस्थे काननेषु च माधवः ।
पुष्पितोपवनां रम्यां ददर्श यमुनां नदीम् ।
आलयं सर्वभूतानां खाण्डवं खड्गचर्मभृत् ।
ददर्श स तु तं देशं सहितः सव्यसाचिना ।
ऋक्षगोमायुसंघुष्टं हंससारसनादितम् । [5]
शाखामृगगणैर्जुष्टं निकेतं सर्वरक्षसाम् ।
द्वीपिगोमायुसिंहर्क्षवराहरुरुवारणैः ।
नानामृगसहस्रैश्च पक्षिभिश्च समावृतम् ।
माननार्हं च सर्वेषां देवदानवरक्षसाम् ।
आलयं पन्नगेन्द्रस्य तक्षकस्य महात्मनः । [10]
वेणुशाल्मलिमाल्याङ्कैरुपेतं वेत्रसंवृतम् ।
शाकपद्मकतालैश्च शतशाखैश्च रोहिणैः ।
निरुद्देशतमप्रख्यमावृतं गजसंस्थितैः ।
गुल्मैः कीचकवेणूनामाशीविषनिषेवितम् ।
विगतार्कमहाभोगव्रततिद्रुमसंकटम् । [15]
स्नुहिवेत्रकुलिङ्गाक्षैर्हिन्तालैश्च समावृतम् ।
व्यालदंष्ट्रिगणाकीर्णं वर्जितं सर्वमानुषैः ।
रक्षसां भुजगेन्द्राणां पक्षिणां च महालयम् ।
भूतानां सर्वदेवेशः सर्वलोकविभागवित् ।
पीताम्बरधरो देवस्तद्वनं बहुधा चरन् । [20]
सद्रुमस्य सयक्षस्य सभूतगणपक्षिणः ।
खाण्डवस्य विनाशं तं ददर्श मधुसूदनः ।

Colophon.

118

After 1. 215. 11, N ins.:

जनमेजय उवाच ।
किमर्थं भगवानग्निः खाण्डवं दग्धुमिच्छति ।
रक्ष्यमाणं महेन्द्रेण नानासत्त्वसमायुतम् ।
न ह्येतत्कारणं ब्रह्मन्नल्पं संप्रतिभाति मे ।
यद्ददाह सुसंक्रुद्धः खाण्डवं हव्यवाहनः ।
एतद्विस्तरशो ब्रह्मञ्श्रोतुमिच्छामि तत्त्वतः । [5]
खाण्डवस्य यथा दाहः पुरा समभवन्मुने ।
वैशंपायन उवाच ।
हन्त ते कथयिष्यामि पुराणमृषिसंस्तुतम् ।
कथामिमां नरश्रेष्ठ खाण्डवस्य विनाशिनीम् ।
पौराणः श्रूयते तात राजा हरिहयोपमः ।
श्वेतकिर्नाम विख्यातो बलविक्रमसंयुतः । [10]
यज्वा दानपतिर्धीमान्यथा नान्योऽस्ति कश्चन ।
ईजे स च महासत्रैः क्रतुभिश्चाप्तदक्षिणैः ।
तस्य नान्याभवद्बुद्धिर्दिवसे दिवसे नृप ।
सत्रे क्रियासमारम्भे दानेषु विविधेषु च ।

---

117

(L. 9) T1 वनार्हाणां च; G1 नानार्हाणां च; G5.6 माननार्हस्य; M मानार्हस्य च. — (L. 11) G2 M °शाल्मलिबिल्वार्कैः; G5 शब्दतमालिंगैः; G6 °शाल्मलितिर्लिंगैः. — (L. 13) T1 खरक्रोडैः; G1 -समुद्रस्थां; M -समप्रख्यं. — (L. 14) T1 G1 M कंटक° (for कीचक°). — (L. 15) T1 विहगैश्च समाकीर्णं प्रतानक्रमसंकटं; G1.3 विहगौघमहाभासवृतान° (G3 °हिंताल); G5.6 °कैं महाभोगवितान°; M3.5 विहितार्कमहारश्मिप्रतान°; M6–8 विहाराथैमसंबाधप्रतान°. — After line 16, T1 ins.:

नानाकण्टकवृक्षैश्च तथा कण्टककुञ्जकैः ।
कण्टकीकुञ्जगुल्मैश्च कण्टकाचितभूतृणैः ।
निम्नोन्नतप्रदेशैश्च तीक्ष्णपाषाणसंकुलम् ।
अल्पगाधमहागर्तैर्वनापगमहाभयम् ।

Colophon. *Adhy. no.:* T1 222; T3 G4–6 M 188; G1 187; G2 186; G3 190.

118

For the addl. lines given here, cf. passage No. 121 and the notes thereon. — After line 1, Ñ1 D5 ins.:

कस्य वा विप्रियं कर्तुं कस्य वा प्रियमेव च ।

D5 cont.: N1 subst. for line 3: K2 ins. after line 3:

न ह्यल्पे कारणे वह्निर्निर्बन्धं कर्तुमर्हति ।

दहनं प्रति विप्रेन्द्र खाण्डवस्येति मे मतिः ।

— (L. 6) Some MSS. transp. यथा and पुरा. — After line 6, Ñ1 ins.:

तथा मे कारणं ब्रूहि परं कौतूहलं यतः ।

— After वैशं°, Ñ1.2 K2 ins.:

शृणु मे ब्रुवतो राजन्सर्वमेतद्यथातथम् ।
यन्निमित्तं ददाहाग्निः खाण्डवं पृथिवीपते ।,

a stanza copied faithfully by almost all printed ed.! — (L. 7) K0.2 D1.5 पुराणां; Ñ V1 B Da Dn D4 पौराणीं. K0.2 Ñ V1 B Da Dn D4 °संस्तुतां; K4 °सत्तमं; D1 °संमतं; D5 °संयुतां. — (L. 8) Ś1 विदाहिनीं; K0.4 B (except B1) D2 विनाशनीं. — (L. 9) K0.3.4 Ñ2 Dn D5 राजन् (for तात). — After line 9, K2–4 Ñ1 ins.:

इक्ष्वाकूणामतिरथो यज्वा विपुलदक्षिणः ।

— After line 11, K (except K1) Ñ1 D5 ins.:

जग्राह दीक्षां स नृपस्तदा द्वादशवार्षिकीम् ।
तस्य सत्रे तदा तस्मिन्समागच्छन्महर्षयः ।
वेदवेदाङ्गविद्वांसो ब्राह्मणाश्च सहस्रशः ।

— (L. 12) Some MSS. transp. स and च. Ś1 महासत्त्वैः; K1 °सत्त्वः; N2 V1 B3.6 D (except D1) °यज्ञैः. — After line 14, K (except K1) Ñ2 Dn D5 ins.:

तस्यैवं वर्तमानस्य कदाचित्कालपर्यये । [ 15 ]
सत्रमाहर्तुकामस्य संवत्सरशतं किल ।
ऋत्विजो नाभ्यपद्यन्त समाहर्तुं महात्मनः ।
स तु राजाकरोद्यत्नं महान्तं ससुहृज्जनः ।
प्रणिपातेन सान्त्वेन दानेन च महायशाः ।
ऋत्विजोऽनुनयामास भूयो भूयस्त्वतन्द्रितः । [ 20 ]
ते चास्य तमभिप्रायं न चक्रुरमितौजसः ।
स चाश्रमस्थान्राजर्षिस्तानुवाच रुषान्वितः ।
यद्यहं पतितो विप्राः शुश्रूषायां न च स्थितः ।
आशु त्याज्योऽस्मि युष्माभिर्ब्राह्मणैश्च जुगुप्सितः ।
तन्नार्हथ क्रतुश्रद्धां व्याघातयितुमुत्तमाम् । [ 25 ]
अस्थाने वा परित्यागं कर्तुं मे द्विजसत्तमाः ।
प्रपन्न एव वो विप्राः प्रसादं कर्तुमर्हथ ।
सान्त्वदानादिभिर्वाक्यैस्तत्त्वतः कार्यवत्तया ।
प्रसादयित्वा वक्ष्यामि यन्नः कार्यं द्विजोत्तमाः ।
अथवाहं परित्यक्तो भवद्भिर्द्वेषकारणात् । [ 30 ]
ऋत्विजोऽन्यान्गमिष्यामि याजनार्थं तपोधनाः ।
एतावदुक्त्वा वचनं विरराम स पार्थिवः ।
यदा न शेकू राजानं याजनार्थं परंतप ।
ततस्ते याजकाः क्रुद्धास्तमूचुर्नृपसत्तमम् ।
तव कर्माण्यजस्रं वै वर्तन्ते पार्थिवोत्तम । [ 35 ]
ततो वयं परिश्रान्ताः सततं कर्मवाहिनः ।
श्रमादस्मात्परिश्रान्तान्स त्वं नस्त्यक्तुमर्हसि ।
बुद्धिमोहं समास्थाय त्वरासंभावितोऽनघ ।
गच्छ रुद्रसकाशं त्वं स हि त्वां याजयिष्यति ।
साधिक्षेपं वचः श्रुत्वा संक्रुद्धः श्वेतकिर्नृपः । [ 40 ]
कैलासं पर्वतं गत्वा तप उग्रं समास्थितः ।
आराधयन्महादेवं नियतः संशितव्रतः ।
उपवासपरो राजा दीर्घकालमतिष्ठत ।
कदाचिद्द्वादशे काले कदाचिदपि षोडशे ।
आहारमकरोद्राजा मूलानि च फलानि च । [ 45 ]
ऊर्ध्वबाहुस्त्वनिमिषस्तिष्ठन्स्थाणुरिवाचलः ।
षण्मासानभवद्राजा श्वेतकिः सुसमाहितः ।
तं तथा नृपशार्दूलं तप्यमानं महत्तपः ।
शंकरः परया प्रीत्या दर्शयामास भारत ।
उवाच चैनं भगवान्स्निग्धगम्भीरया गिरा । [ 50 ]
प्रीतोऽस्मि राजशार्दूल तपसा ते परंतप ।
वरं वृणीष्व भद्रं ते यं त्वमिच्छसि पार्थिव ।
एतच्छ्रुत्वा तु वचनं रुद्रस्यामिततेजसः ।
प्रणिपत्य महात्मानं राजर्षिः प्रत्यभाषत ।
यदि मे भगवान्प्रीतः सर्वलोकनमस्कृतः । [ 55 ]
स्वयं मां देवदेवेश याजयस्व सुरेश्वर ।
एतच्छ्रुत्वा तु वचनं राज्ञा तेन प्रभाषितम् ।
उवाच भगवान्प्रीतः स्मितपूर्वमिदं वचः ।
नास्माकमेतद्विषये वर्तते याजनं प्रति ।
त्वया च सुमहत्तप्तं तपो राजन्वरार्थिना । [ 60 ]
याजयिष्यामि राजंस्त्वां समयेन परंतप ।

रुद्र उवाच ।

समा द्वादश राजेन्द्र ब्रह्मचारी समाहितः ।
सततं त्वाज्यधाराभिर्यदि तर्पयसेऽनलम् ।
कामं प्रार्थयसे यं त्वं मत्तः प्राप्स्यसि तं नृप ।

वैशंपायन उवाच ।

एवमुक्तस्तु रुद्रेण श्वेतकिर्मनुजाधिपः । [ 65 ]
तथा चकार तत्सर्वं यथोक्तं शूलपाणिना ।
पूर्णे तु द्वादशे वर्षे पुनरायान्महेश्वरम् ।
दृष्ट्वैव च स राजानं शंकरो लोकभावनः ।
उवाच परमप्रीतः श्वेतकिं नृपसत्तमम् ।
तोषितोऽहं नृपश्रेष्ठ त्वयेह स्वेन कर्मणा । [ 70 ]
याजनं ब्राह्मणानां तु विधिदृष्टं परंतप ।
अतोऽहं त्वां स्वयं नाद्य याजयामि परंतप ।
ममांशस्तु क्षितितले महाभागो द्विजोत्तमः ।
दुर्वासा इति विख्यातः स हि त्वां याजयिष्यति ।
मन्नियोगान्महातेजाः संभाराः संभ्रियन्तु ते । [ 75 ]
एतच्छ्रुत्वा तु वचनं रुद्रेण समुदाहृतम् ।
स्वपुरं पुनरागम्य संभारान्पुनरार्जयत् ।
ततः संभृतसंभारो भूयो रुद्रमुपागमत् ।

---

ऋत्विग्भिः सहितो धीमानेवमीजे स भूमिपः ।
ततस्तु ऋत्विजश्चास्य धूमव्याकुललोचनाः ।
कालेन महता खिन्नास्तत्यजुस्ते नराधिपम् ।
ततः प्रचोदयामास ऋत्विजस्तान्महीपतिः ।
चक्षुर्विकलतां प्राप्ता न प्रपेदुश्च ते क्रतुम् ।
ततस्तेषामनुमते तद्विप्रैस्तु नराधिपः ।
सत्रं समापयामास ऋत्विग्भिरपरैः सह ।

— (L. 25) Ñ$_3$ B$_6$ Dn अद्य तां; Da उद्यतां (for उत्तमाम्). — (L. 31) Some MSS. द्विजोत्तमाः (for तपो°). — After line 39, K$_4$ ins.:

अन्यः को वा याजयिता तस्माच्छर्वादृते प्रभो ।

— (L. 43) K$_2$ भूत्वा; Ñ$_3$ B$_1$ Dn D$_4$ राजन्. — (L. 49) K$_2$ Ñ$_{2,3}$ Dn D$_4$ परमप्रीत्या. — Ś$_1$ K$_1$ Ñ$_3$ V$_1$ B$_{3.5.6}$ Da Dn om. line 50. — (L. 51) MSS. नृपशार्दूल, and नरशा° also. — After line 61, Ś$_1$ K$_{1.2.4}$ Ñ$_1$ V$_1$ B$_{3.6}$ D$_{1.4}$ ins. an addl. colophon. — After line 67, K$_4$ ins.:

भर्गं पशुपतिं स्थाणुमादिदेवं नरेश्वरम् ।
पुनः प्रसादयामास तपोभिर्नियमैः शुभैः ।

— (L. 70) Ś$_1$ K$_1$ त्वयैव स्वेन; K$_2$ D$_1$ त्वयेहानेन; Ñ$_1$ D$_2$ त्वयेह श्रेष्ठ; Ñ$_3$ B$_1$ Dn D$_4$ त्वयेहाद्येन. — After line 78,

संभृता मम संभाराः सर्वोपकरणानि च ।
त्वत्प्रसादान्महादेव श्वो मे दीक्षा भवेदिति । [ 80 ]
एतच्छ्रुत्वा तु वचनं तस्य राज्ञो महात्मनः ।
दुर्वाससं समाहूय रुद्रो वचनमब्रवीत् ।
एष राजा महाभागः श्वेतकिर्द्विजसत्तम ।
एनं याजय विप्रेन्द्र मन्नियोगेन भूमिपम् ।
बाढमित्येव वचनं रुद्रमृषिरुवाच ह । [ 85 ]
ततः सत्रं समभवत्तस्य राज्ञो महात्मनः ।
यथाविधि यथाकालं यथोक्तं बहुदक्षिणम् ।
तस्मिन्परिसमाप्ते तु राज्ञः सत्रे महात्मनः ।
दुर्वाससाभ्यनुज्ञाता विप्रतस्थुः स्म याजकाः ।
ये तत्र दीक्षिताः सर्वे सदस्याश्च महौजसः । [ 90 ]
सोऽपि राजा महाभागः स्वपुरं प्राविशत्तदा ।
ततो भगवतो वह्नेर्विकारः समजायत ।
तेजसा विप्रहीणश्च ग्लानिश्चैनं समाविशत् ।
स लक्षयित्वा चात्मानं तेजोहीनं हुताशनः ।
जगाम सदनं पुण्यं ब्रह्मणो लोकपूजितम् । [ 95 ]
तत्र ब्रह्माणमासीनमिदं वचनमब्रवीत् ।
तेजसा विप्रहीणोऽस्मि बलेन च जगत्पते ।
इच्छेयं त्वत्प्रसादेन स्वात्मनः प्रकृतिं स्थिराम् ।
एतच्छ्रुत्वा तु वचनं भगवान्सर्वलोककृत् ।
हव्यवाहमिदं वाक्यमुवाच प्रहसन्निव । [ 100 ]
त्वया द्वादश वर्षाणि वसोर्धाराहुतं हविः ।
उपयुक्तं महाभाग तेन त्वां ग्लानिराविशत् ।
तेजसा विप्रहीणत्वात्सहसा हव्यवाहन ।
मा गमस्त्वं व्यथां वह्ने प्रकृतिस्थो भविष्यसि ।
पुरा देवनियोगेन यत्त्वया भस्मसात्कृतम् । [ 105 ]
आलयं देवशत्रूणां सुघोरं खाण्डवं वनम् ।
तत्र सर्वाणि सत्त्वानि निवसन्ति विभावसो ।
तेषां त्वं मेदसा तृप्तः प्रकृतिस्थो भविष्यसि ।
गच्छ शीघ्रं प्रदग्धुं त्वं ततो मोक्ष्यसि किल्बिषात् ।
एतच्छ्रुत्वा तु वचनं परमेष्ठिमुखाच्च्युतम् । [ 110 ]
उत्तमं जवमास्थाय प्रदुद्राव हुताशनः ।
आगम्य खाण्डवं दावमुत्तमं जवमास्थितः ।
सहसा प्रज्वलत्यग्निः क्रुद्धो वायुसमीरितः ।
प्रदीप्तं खाण्डवं दृष्ट्वा ये स्म तत्र निवासिनः ।
परमं यत्नमातिष्ठन्पावकस्य प्रशान्तये । [ 115 ]
करैस्तु करिणः शीघ्रं जलमादाय सत्वराः ।
सिषिचुः पावकं क्रुद्धाः शतशोऽथ सहस्रशः ।
बहुशीर्षास्तथा नागाः शिरोभिर्जलवृष्टयः ।
मुमुचुः पावकाभ्याशे सत्वराः क्रोधमूर्छिताः ।
तथैवान्यानि सत्त्वानि नानाप्रहरणोद्यमैः । [ 120 ]
विलयं पावकं शीघ्रमनयन्भरतोत्तम ।
अनेन तु प्रकारेण भूयो भूयश्च प्रज्वलन् ।
सप्तकृत्वः प्रशमितः खाण्डवे हव्यवाहनः ।

Colophon.

वैशंपायन उवाच ।

स तु नैराश्यमापन्नः सदा ग्लानिसमन्वितः ।
पितामहमुपागच्छत्संक्रुद्धो हव्यवाहनः । [ 125 ]
तच्च सर्वं यथावृत्तं ब्रह्मणे संन्यवेदयत् ।

---

$Ko_{3.4}$ $D_5$ ins.:

उवाच च महीपालः प्राञ्जलिः प्रणतः स्थितः ।

— (L. 85) $K_1$ $B_1$ मुनिर्; $\tilde{N}_3$ $B_{3.4.6}$ Da Dn त्वृषिर्. — (L. 87) Dn $D_4$ यथाकामं यथोक्तं च सत्रं सुबहु°. — (L. 91) $\tilde{N}_3$ $B_{1.6}$ Dn $D_4$ राजन् (for राजा). — After line 91, $Ko_{3.4}$ $\tilde{N}_{1.2}$ $D_1$(marg. *sec. m.*)$_{.5}$ ins.:

पूज्यमानो महाभागैर्ब्राह्मणैर्वेदपारगैः ।
वन्दिभिः स्तूयमानश्च नागरैश्चाभिनन्दितः ।
एवंवृत्तः स राजर्षिः श्वेतकिर्नृपसत्तमः ।
कालेन महता चापि ययौ स्वर्गमभिष्टुतः ।
ऋत्विग्भिः सहितः सर्वैः सदस्यैश्च समन्वितः ।
तस्य सत्रे पपौ वह्निर्हविर्द्वादश वत्सरान् ।
सततं चाज्यधाराभिरेकाग्रे तत्र कर्मणि ।
हविषा च ततो वह्निः परां तृप्तिमगच्छत ।
न चैच्छत्पुनरादातुं हविरन्यस्य कस्यचित् ।
पाण्डुवर्णो विवर्णश्च न यथावत्प्रकाशते ।

— After line 96, $Ko_{3.4}$ $\tilde{N}_{1.2}$ $Dn_3$ $D_{1.3.5}$ ins.:

भगवन्परमा प्रीतिः कृता मे श्वेतकेतुना ।
अरुचिश्चाविशत्तीव्रा तां न शक्नोम्यपोहितुम् ।

— (L. 99) $K_3$ $B_5$ °त्वा तु भगवान्; $\tilde{N}_3$ $B_1$ Dn $D_4$ °त्वा हुतवहाद्. — (L. 104) $\tilde{N}_3$ $B_{1.3}$ Dn $D_{2.4.5}$ यथा (for व्यथां). — After line 104, $Ko_{.4}$ $\tilde{N}_{1.2}$ $B_3$ Da $D_{1.2.5}$ ins.:

अरुचिं नाशयिष्ये ते समयं प्रतिपद्य वै ।

$Ko_{.4}$ $D_5$ cont.:

ब्रवीतु तमुवाचाथ भगवन्तं हुताशनः ।
तमुवाच ततो ब्रह्मा खाण्डवं त्वं दहेर्यदि ।

— After line 108, $Ko_{3.4}$ $D_{2.5}$ ins.:

मत्प्रसादाद्रुचिः सम्यक्त्वयि वह्ने भविष्यति ।

— (L. 113) Ko $\tilde{N}_{2.3}$ $B_1$ Dn प्राज्वलच्च; $K_2$ $\tilde{N}_1$ प्राज्वलद्; $K_3$ प्राद्रवच्च; $K_4$ प्रज्ज्वलच्च; $B_6$ Da प्रज्वलद्; $D_{1.2}$ प्रज्वलन्. $K_3$ $B_6$ Da वह्निः; $\tilde{N}_1$ क्रुद्धः; $D_{1.2}$ तत्र (for अग्निः). — (L. 114) $\tilde{N}_{2.3}$ $B_6$ Dn $D_{2.4}$ स्युः (for स्म). — (L. 118) $\tilde{N}_3$ $V_1$ $B_{3.6}$ D (except $D_{1.2.5}$) जलसंततिं. — (L. 121) $\tilde{N}_{1.2}$ $B_6$ D (except $D_5$) भरतर्षभ. Colophon. *Adhy. no.:* $Dn_3$ 222; $D_4$ 138; $D_5$ 173. *S'loka no.:*

उवाच चैनं भगवान्मुहूर्तं स विचिन्त्य तु ।
उपायः परिदृष्टो मे यथा त्वं धक्ष्यसेऽनल ।
खाण्डवं दावमद्यैव मिषतोऽस्य शतक्रतोः ।
नरनारायणौ यौ तौ पूर्वदेवौ विभावसो ।   [130]
संप्राप्तौ मानुषं लोकं कार्यार्थं हि दिवौकसाम् ।
अर्जुनं वासुदेवं च यौ तौ लोकोऽभिमन्यते ।
तावेतौ सहितौ वह्ने खाण्डवस्य समीपतः ।
तौ त्वं याचस्व साहाय्ये दाहार्थं खाण्डवस्य च ।
ततो धक्ष्यसि तं दावं रक्षितं त्रिदशैरपि ।   [135]
तौ तु सत्त्वानि सर्वाणि यत्नतो वारयिष्यतः ।
देवराजं च सहितौ तत्र मे नास्ति संशयः ।
एतच्छ्रुत्वा तु वचनं त्वरितो हव्यवाहनः ।
कृष्णपार्थावुपागम्य यमर्थं त्वभ्यभाषत ।
तं ते कथितवानस्मि पूर्वमेव नृपोत्तम ।   [140]

☞ Cf. Nos. 120–121 below. The passage appears to be lacking in the Jav. version! See further the note (p. 841) under 1. 215. 11.

### 119

After 1. 216. 25, Ko.4 D5 (marg. *sec. m.*).5 ins.:

तदाग्नेरनुमोदाय सखा सख्युः प्रियंकरः ।
उवाच पार्थं वार्ष्णेयः प्रीयमाणो धनंजयम् ।
अजितस्त्वमजेयश्च जेता त्वमसि पाण्डव ।
अजितः फाल्गुनेत्युक्त्वा रश्मीनादाय वीर्यवान् ।
जितमित्येव बीभत्सुं प्रत्युवाच जनार्दनः ।   [5]
प्रदक्षिणं परिक्रम्य करेण रथमस्पृशत् ।
प्रीयमाणो रथे तस्मिन्नभवत्कृष्णसारथिः ।
पावकाय नमस्कृत्य ववन्दे गाण्डिवं धनुः ।
रथमास्थाय बीभत्सुश्चक्रेऽधिज्यं महद्धनुः ।
मौर्वीं कृष्णस्य बाहुभ्यां विसृजन्भृशदारुणम् ।   [10]
कूजन्ती सापतत्तूर्णं सिंहीव मृगगृद्धिनी ।

### 120

Before 1. 217. 1, T3 G1–4 ins.:

जनमेजयः ।
किमर्थं भगवानग्निः खाण्डवं दग्धुमिच्छति ।
एतदिच्छाम्यहं श्रोतुं वद ब्राह्मणसत्तम ।
वैशंपायनः ।
श्वेतो नाम महाराज आसीदिक्ष्वाकुवंशजः ।
यजतस्तस्य राज्ञस्तु सत्रं द्वादशवार्षिकम् ।
निरन्तराज्यधाराभिर्हूयमानो विभावसुः ।   [5]
तत्र पाण्डुच्छविरभूत्पाण्डुरोगेण धिष्ठितः ।
नान्यस्य हविरादातुं शक्तोऽभूद्धव्यवाहनः ।
श्रान्तः श्रान्ततनुर्नित्यं ततो ब्रह्माणमागमत् ।
गत्वा पितामहं देवं नमस्कृत्वा च पावकः ।
विज्ञापयामास तदा स्वशरीरस्य वेदनाम् ।   [10]
ब्रह्मोवाच तदा ज्ञात्वा दग्ध्वा खाण्डवसत्रकम् ।
अरोगः सिद्धतेजाश्च भविष्यसि न संशयः ।
उक्तमात्रे तदा तेन ब्रह्मणा परमेष्ठिना ।
खाण्डवं दग्धुकामः सन्गत्वा दग्धुं प्रचक्रमे ।
वनपालैस्तदा देवैः शमितो वारिणागमत् ।   [15]
सप्तकृत्वो विघातं च वहन्खाण्डवदाहकम् ।
ततो ब्रह्माणमगमत्पुनर्ज्ञापितवान्प्रभुम् ।
तेनापि च समादिष्टस्तद्धि पाण्डरविग्रहः ।
नरनारायणौ यौ तु द्वापरे कृष्णफल्गुनौ ।
भविष्यन्तौ महात्मानौ खाण्डवस्य समीपतः ।   [20]
तौ प्रार्थय महाशूरौ साहाय्यं ते करिष्यतः ।

☞ This is an abbreviated version of the Śvetaki episode interpolated in N after 1. 215. 11; cf. passage No. 118 above. Its occurrence here in the few MSS. (T3 G1–4) in which it is found is somewhat irrelevant. Here the king is called Śveta, but in passage No. 118 he is called Śvetaki; while in the next passage (No. 121) the king's name is given as Śvetaketu!

---

Dn2 8124. — (L. 126) Ñ2 B3 Dn D4 यथान्यायं. Ś1 Ko.1.3 Dn D1.4 स (for सं-). — (L. 128) Some MSS. अनघ (for अनल). — After line 128, Ko.3.4 Ñ1.2 B6 D1.3.4 ins.:

कालं च कंचित्क्षमतां ततः संधक्ष्यते भवान् ।
भविष्यतः सहायौ ते नरनारायणौ तदा ।
ताभ्यां त्वं सहितो दावं धक्ष्यसे हव्यवाहन ।
एवमस्त्विति तं वह्निर्ब्रह्माणं प्रत्यभाषत ।
संभूतौ तौ विदित्वा तु नरनारायणावृषी ।
कालस्य महतो राजंस्तस्य वाक्यं स्वयंभुवः ।
अनुस्मृत्य जगामाथ पुनरेव पितामहम् ।
अब्रवीच्च तदा ब्रह्मा यथा त्वं धक्ष्यसेऽनल ।

— (L. 129) Ñ3 Dn D5 शचीपतेः (for शत°). — (L. 131) Ñ3 Dn D1.5 मानुषे लोके. — (L. 133) K3 Ñ3 B1.3.5 D1 चेह; Ñ2 Dn D1.3 वहि (for वह्ने). B6 D3 तावुभौ हि स्थितावत्र. — (L. 139) Ko.4 D5 चान्य°; Ñ1 B6 D3 D1.3 प्रत्य°; B1 अभ्य° (for त्वभ्य°).

### 120

Line 1 = line 1 of passage No. 118. With lines 18 and 20, cf. lines 130 and 133, of the same passage.

122

121

After adhy. 225, Ś1 Ko.1.4 ins. an addl. adhy. (which is the *final* adhy. of the parvan in these MSS.):

जनमेजय उवाच ।

ददाह भगवान्वह्निः किमर्थं खाण्डवं च तत् ।
कस्य वा विप्रियं कुर्वन्कस्य वा प्रियकाम्यया ।
न ह्यल्पे कारणे वह्निर्निर्बन्धं कर्तुमर्हति ।
दहनं प्रति विप्रेन्द्र खाण्डवस्येति मे मतिः ।

वैशंपायन उवाच ।

शृणु मे भावितो राजन्सर्वमेव यथातथम् । [ 5 ]
यन्निमित्तं ददाहाग्निः खाण्डवं पृथिवीपते ।
बभूव राजा राजेन्द्र श्वेतकेतुरिति श्रुतः ।
इक्ष्वाकूणामतिरथो यज्वा विपुलदक्षिणः ।
जग्राह दीक्षां स नृपस्तदा वर्षसहस्रकीम् ।
ऋत्विग्भिः सहितो धीमानयजज्जनमेजय । [ 10 ]
तस्य सत्रे तदा तस्मिन्समागच्छन्महर्षयः ।
वेदवेदाङ्गविद्वांसो ब्राह्मणाश्च सहस्रशः ।
ततस्तु ऋत्विजस्तस्य धूमव्याकुललोचनाः ।
कालेन महता खिन्नास्तत्यजुस्ते नराधिपम् ।
ततः प्रसादयामास ऋत्विजः स महीपतिः । [ 15 ]
चक्षुर्विकलतां प्राप्ता न प्रसीदुश्च तस्य ते ।
ततस्तेषामनुमते विप्रितस्तु नराधिपः ।
सत्रं समापयामास ऋत्विग्भिरपरैः सह ।
सत्रेण महता चापि ययौ स्वर्गमभिष्टुतः ।
ऋत्विग्भिः सहितः सर्वैः ससदस्यैः समन्वितः । [ 20 ]
सत्रे पपौ हव्यवाहः सहस्रं परिवत्सरान् ।
स तेन हविषा वह्निः परां तृप्तिमगच्छत ।
न चैच्छदग्निरादातुं हविरन्यस्य कस्यचित् ।
अरुचिश्चाविशत्तस्य ततोऽगात्स पितामहम् ।
स पितामहमासाद्य एतदर्थं न्यवेदयत् । [ 25 ]
भगवन्परमा तृप्तिः कृता वै श्वेतकेतुना ।
अरुचिश्चाविशत्तीव्रा तां न शक्नोम्यपोहितुम् ।
तमब्रवीत्तदा वह्निं सर्वभूतपितामहः ।
अरुचिं नाशयिष्ये ते समयं प्रतिपद्यसे ।
ब्रवीतु तमुवाचाथ ब्रह्माणं हव्यवाहनः । [ 30 ]
अब्रवीत्तं ततो ब्रह्मा खाण्डवं त्वं दहेर्यदि ।
तत्र ह्यनेके रिपवः सुराणां निवसन्त्युत ।
मत्प्रसादाद्रुचिः सम्यक्तव वह्ने भविष्यति ।
कालं च कंचित्क्षमतां ततस्तद्धक्ष्यते भवान् ।
मानुष्येऽपि च संभूतौ नरनारायणावृषी । [ 35 ]
ताभ्यां त्वं सहितो दावं धक्ष्यसे हव्यवाहन ।
एवमस्त्विति तं वह्निर्ब्रह्माणं प्रत्यभाषत ।
संभूतौ तौ विदित्वा तु नरनारायणावृषी ।
तदस्य महतो राजंस्तच्च वाक्यं स्वयंभुवः ।
अनुस्मृत्य जगामाथ दावं दग्धुं च हव्यवाट् । [ 40 ]
एतत्ते कथितं राजन्यथैतदभवत्पुरा ।
दहनाद्यत्र मुक्तोऽसौ मयो नागोऽथ शार्ङ्गकाः ।

Colophon.

☞ This is a variant version of the Śvetaki episode; cf. passages No. 118 and 120 above, and the notes thereon. It will be noticed that the episode is actually *repeated* (in variant forms) in the four MSS. Ś1 Ko.1.4 of the Kas'mīrī version, a repetition faithfully reflected in the Bhāratamañjarī (Kāvyamālā ed., pp. 107 and 112)!

---

121

(L. 1) Ś1 K4 अग्निः (for वह्निः). Ś1 वनं (for च तत्). — (L. 5) Ko.4 ब्रुवतो (for भावितो). — Ko (? hapl.) om. lines 15-17; K1 om. lines 25-27. — (L. 35) Ko.4 मानुषेषु (for मानुष्येऽपि), and उभौ (for ऋषी). — (L. 39) Ko कालस्य महतो; K4 कालेन महता. — After line 40, Ko.4 ins.:

स ददर्श तदा वीरौ यमुनातीरमाश्रितौ ।
नरनारायणौ देवौ पुराणौ पुरुषोत्तमौ ।
ताभ्यां च सहितो दावमदहद्धव्यवाहनः ।

— (L. 42) K1 दावतो (for दहनाद्). Ko.4 मुक्तास्ते. — With lines 2-6, 8-23, 26-27, 29-31, 33-40 cf. the addl. lines given in the footnotes to passage No. 118.

